# वैदिकयज्ञा औपनिषदमात्मज्ञानञ्च

## ( VEDIC RITUALS AND UPANISADIC SELF-REALISATION )




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

विद्यावारिधिः ( पी-एच्० डी० ) इत्युपाधये प्रस्तुतोऽनुसन्धानप्रबन्धः

निर्देशकः

**डॉ०युगलकिशोरमिश्रः**

वेदाचार्यः, एम०ए०, पी-एच्० डी०

आचार्योऽध्यक्षश्च—वेदविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

अनुसन्धाता

**श्रीशिवराज आचार्यः**

सहप्राध्यापकः ( Reader )

वाल्मीकिविद्यापीठे, संस्कृताध्ययनसंस्थानान्तर्गते

काष्ठमण्डपम् ( काठमाण्डू ) नेपालः

पञ्जीकरणसंख्या—६३६/२१३७

सौरकार्त्तिकमासः २०४२

( नवम्बर १९८५ )

यज्ञवित् सर्वविद् भवति यज्ञः सर्वमिति श्रुतिः ।
तस्माद् याज्ञीषु चिन्तासु रमन्ते तत्त्वदर्शिनः ।।

बोधायनगृह्यपरिभाषासूत्रे

# वैदिकयज्ञा औपनिषदमात्मज्ञानञ्च

## ( VEDIC RITUALS AND UPANIṢADIC SELF-REALISATION )




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधिः ( पी-एच्० डी० ) इत्युपाधये प्रस्तुतोऽनुसन्धानप्रबन्धः

निर्देशकः
डॉ०युगलकिशोरमिश्रः
वेदाचार्यः, एम०ए०, पी-एच्० डी०
आचार्योऽध्यक्षश्च—वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

अनुसन्धाता
श्रीशिवराज आचार्यः
सहप्राध्यापकः ( Reader )
वाल्मीकिविद्यापीठे, संस्कृताध्ययनसंस्थानान्तर्गते
काष्ठमण्डपम् ( काठमाण्डू ) नेपालः
पञ्जीकरणसंख्या—६३६/२१३७

सौरकार्त्तिकमासः २०४२
( नवम्बर १९८५ )

ओम्

वेदाहमेतम्पुरुषम्महान्त-
मादित्यवर्णन्तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥

– पुरुषमेधयागे विनियुक्तो मन्त्रः,
मा०वा०शु०य०वे०मा०सं० 31/18.

## विषयानुक्रमः

(संक्षिप्तः)



xxxxx

## प्रस्तावना

"यत्किञ्चित् सर्वविद्ध भवति यतः सर्वमिति श्रुतिः ।
तस्माद् धार्मिषु चिन्तासु रमन्ते तत्त्वदर्शिनः ॥"

– बौधायनगृह्यपरिभाषासूत्रे 2/3/2.

वेदाः धर्मार्थानां धर्मादिस्वरूपा अतिगहनत्वेन दुरवगाहाश्च । अत एव वेदार्थज्ञानभूमिकामारोढुं निरुक्तकारादिभिर्वेदाङ्गानि प्रणीतानि । तदुक्तमाचार्ययास्केन – "साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च[1]" इति । एतामेव यास्कनिर्दिष्टां पद्धतिमनुसृत्य अहमपि वेदाङ्गानामध्ययनं मननं च कृत्वा तद्द्वारा वेदार्थं बोद्धुकामोऽहं शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषं चेति षडेव वेदाङ्गान्यध्येतुं प्रवृत्तोऽभूवम् । एवं प्रवृत्तोऽहं कुमारिलभट्टोक्तिमनुसरन् स्वकीयं सङ्कल्पमनुचेतस्येवमावर्तये –

"षडङ्गाम्भस्तरङ्गौघैर्वीचिभिरुज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥" इति ।

तत्र शिक्षाशास्त्रस्य वेदाङ्गस्य व्यापकमध्ययनं कृत्वा सर्वेषामेवोपलभ्यमानानां प्रातिशाख्यानां शिक्षाग्रन्थानां च प्रमेयाणां मतानां च सङ्ग्रहं

---

1– निरुक्ते – 1/6/4.

विवेचनं च कृत्वा पुस्तकस्यान्ते मद्गोत्रनाम्नाऽङ्कितः "कौण्डिन्यायनशिक्षा" इति नामक एको महान् सर्वाङ्गपूर्णोऽद्वितीयः शिक्षाग्रन्थः प्रणीतोऽपि मया । स च प्रकाशनापेक्षोऽस्ति ।

ततो द्वितीयवेदाङ्गकल्पस्य स्वाध्ययनप्रसङ्गेऽहमेतस्मिन्ननु-सन्धानकार्ये प्रावर्तिषि । वैदिकयज्ञानामतिगहनत्वादप्रचलत्वे तेषां सामान्यपरिचय-मात्रस्यापि सुदुर्लभत्वात्, कालस्य लेशस्य चानुसन्धाननियमादिभिर्नियन्त्रितत्वात्, मम च कुटुम्बभरणपुत्राध्यापनादिभारातिनिपीडितत्वात्, सरस्वतीभवनस्थलिखित-ग्रन्थागारप्रवेशदौर्लभ्यादिना मौलिकसामग्रीणामपि दुष्प्रापत्वाच्च कार्येऽस्मिन् न तथा कल्पशास्त्रस्य साङ्गोपाङ्गमध्ययनं कृत्वा शोधप्रबन्धं प्रणेतुं प्राऽभवम् । तथापि सत्पुरुषकृपया गुरुकृपया च यच्च यावच्च कल्पशास्त्रस्य-सोपानं स्वाध्ययन-दीर्घकालाभिनिष्टाभियोगदर्शनपूर्वकं विषयनिबन्धनं कर्तुमर्हं च तद्विदुषां विवेक-चक्षुषामग्रत उपस्थापयन्नस्मि ।

प्रस्तुतस्य शोधप्रबन्धस्य वैशिष्ट्यं च वेदविद्याभियुक्ता विद्वत्तल्लजाः स्वयमेवाकलयिष्यन्त्येव, तथापि तत्र भवतां सौविध्यायाहमपि संक्षेपेण समुल्लिखामि।

तत्र प्रथमे विषयप्रवेशाध्याये वेदस्वरूपम्, वेदस्य विशेषतो धर्मबोध-परत्वम्, वेदाङ्गानां वेदोपकारकतायाः प्रकाराः, वेदोपाङ्गानां मतान्तरो-ल्लेखपूर्वकं निरूपणम्, तेषां स्वरूपाणामन्वयानुरूपं प्रतिपादनम्, इतिहासपुराणयो-र्वेदोपबृंहकतायाः प्रकारविशेषस्य निरूपणम्, इतिहासपुराणानां विशेषतः स्त्री-शूद्राद्यल्पमतिजनोद्देश्यकतायाः व्यवस्थापनम्, सांख्य-योग-पाशुपत-पाञ्च-रात्रागमादीनां वैदिकधर्मे प्रामाण्यस्याऽभावेन वैदिकयज्ञाऽध्ययने तेषामनुपकारकत्वस्य

वीरमित्रोदयादिमतसमीक्षणपूर्वकं व्यवस्थापनम्, वैदिकयज्ञपरिभाषा, औपनिषदात्मज्ञानपरिभाषा, उपनिषदां श्रेणिविभजनपूर्वकं विवरणमिति विषयाः सन्ति । एतस्याऽध्यायस्याऽध्ययनेन श्रुत्याया वैदिकात्मपरम्परायाः कोऽपि नव्यच्छाया-मुतः प्रबोधः स्यादित्याशास्यते ।

द्वितीये वैदिकयज्ञनिरूपणाऽध्याये च श्रुत्याऽऽम्नातानां सम्बद्धानां माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदशाखायां प्रतिपादितानां चाऽग्न्याधानाऽग्निहोत्राणां नित्यानां पौर्णमासादियज्ञानां स्वरूपस्य प्रतिपादनं कृतमस्ति । तत्र च नित्यानां वैदिकयज्ञानां प्रमाणं परिगणनम्, नित्यानामेव श्रुत्याऽऽम्नातसम्बद्धतायाः प्रमाणं निरूपणम्, वैदिकार्यजनपद्धतिप्रतिपादनपूर्वकमग्न्याधानाऽधिकारस्य प्रमाणं संविवेचनं चाऽभिनवरूपेण निरूपणम्, अग्न्याधानस्य अग्निहोत्रस्य पौर्णमास्यागस्य आग्रयणेष्टेः चातुर्मास्यानां निरूढपशुबन्धस्य अग्निष्टोमसोमयागस्य, साग्निचित्यसोमयागस्य अश्वमेधस्य पुरुषमेधस्य सर्वमेधस्य च स्वरूपाणां प्रतिपादनमिति विषयाः सन्ति । एतस्मिन्नध्याये च नव्यप्रकारकमग्न्याधाननियोगिनिरूपणम्, विरक्त-श्रोत्रिय-विधानोक्त-पुत्रजन्मादृष्टमतसमीक्षणपूर्वकमग्निष्टोमसोमयागनियोगिविषयकं नव्यं प्रतिपादनम्, नित्यानन्दकृते वेदार्थपरीक्षायामध्येतव्येन निर्धारिते कातीयेष्टिदीपके वर्तमानानां सूत्राणां क्रमाणां भावागतानां चाऽनेकेषां प्रमादानां प्रमाणं संविवेचनं च टिप्पणीषु प्रदर्शनम्, शुद्धस्य पूर्णमासयागप्रयोगस्य सकलस्याऽविकलतया प्रदर्शनम्, शुक्लयजुर्वेदो[क्ता]नां चातुर्मास्यानां निरूढपशुबन्धानां सोमकर्मनिर्देशपुरस्सरेणैदम्प्राथम्येनैव प्रतिपादनम्, सम्पूर्णस्य शुक्लयजुर्वेदोक्तस्याग्निष्टोमसोमयागस्य सोमोद्गमनकर्मप्रयुक्तस्य सुबोध-

## कृतज्ञतानिवेदनम्

परमात्मनोऽनुग्रहाद् बहूनां महानुभावानामनुग्रहाच्चेदमनुसन्धानकार्यं सम्पादयितुं प्राभवमहमिति तान् महानुभावान् प्रति किमप्यन्यत् कर्तुमपारयन् स्वकीयां कृतज्ञतामेव निवेद्य सन्तोषमनुभवितुं परवानस्मि ।

तत्र प्रथमम्, दुःस्थेन महता विलम्बेन मत्समीपमागतं मदीयदुरदृष्ट-वशात् पुनर्दूरीभूयाऽदर्शनीयतां गन्तुं सन्नमपि मत्कृतानुसन्धानकार्यकलापाकरं पुनर्मत्समीपमानीय मह्यं दत्तवन्तं नैपालकाष्ठमण्डपस्थ-त्रिभुवनविश्वविद्यालयो-पकुलपतिमहाभागं श्रीमन्तं रामचन्द्रबहादुरसिंहमहोदयं प्रति साधुवादं व्या-हरामि ।

तत्रैव वाराणसीस्थ-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेऽनुसन्धान-च्छात्रत्वेन मम प्रवेशेऽतीव सरलतया सौविध्यं दत्तवतो निर्देशकर्मणि चौदार्य-माश्रितवतः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य-भूतपूर्व-कुलपतेः श्रीगौरीनाथशास्त्रि-महाभागस्योपकारभारं हृदयेनाऽनुभवन् तत्र भवन्तं भूयो भूयः स्मरामि ।

तथाऽनुसन्धानमार्गनिर्देशनेनाऽनुसन्धेयविषयगतग्रन्थिभेदनेनाऽन्येषां नानाविधानां सौविध्यानां प्रदानेन च परमया कृपोदारतया च बहूपकृतवतां गुरुवर्याणां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय-वेदविभागाध्यक्षतामलङ्कुर्वाणाना-माचार्याणां डा० युगलकिशोरमिश्रमहोदयानामानृण्यं गन्तुं किमपि मार्गमलभ-मानस्तत्र भवतो हार्दिकश्रद्धाकुसुमाञ्जलिभिः पुनः पुनरभ्यर्चये ।

तदनन्तरं चाऽनुसन्धानार्थं विविधपुस्तकप्रदानेन विश्वविद्यालयीय-व्यवहारादिमार्गप्रदर्शनादिना चाऽहैतुक्या दयाभावनया अनुगृहीतवन्तं गुरुकल्पं सुहृद्वरं श्रीमन्तं डा० श्रीकिशोरमिश्रमहाभागं च कृतज्ञताविष्टवचोभिः सभाजयामि ।

सरस्वतीभवनाख्यविशिष्टग्रन्थागारे प्रवेशस्य व्यवस्थायां दुष्करायां सत्यामपि यथाकामं तत्र प्रवेशाय महामनुमतिं दत्तवतः सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयविद्वत्कुलपतिमहोदयस्य डा० रामकरणशर्मणो यथाकथञ्चित् कदाचिदेव विरल-तयैव चापि तस्मिन् ग्रन्थागारे प्रवेशस्य व्यवस्थां कृतवतां पठनादिसौविध्यं दत्त-वतां पुस्तकाध्यक्षादीनामन्येषां च सत्कार्ये सन्नद्धानां विश्वविद्यालयीयकर्म-चारिणां चोपकारं स्मरामि ।

वाराणसेय-जगितघट्टस्थ-श्रीविश्वनाथ(गोयनका)-पुस्तकालयस्य कर्म-चारिणाम्, रामघट्टस्थ-साङ्गवेदविद्यालयीयकेन्द्रपुस्तकालयोपाध्यक्षस्य श्रीमनो-हरविष्णुपन्ताचार्यस्य स्वकीयव्यक्तिगतसंग्रहस्थानि कातीयपरिशिष्टानां हस्त-लिखितपुस्तकानि पठितुमवसरं दत्तवतो वैदिकवरश्रीकमलाकान्तदीक्षित महाभागस्य श्रीवल्लभभट्टपुत्रस्याऽऽयुष्मतोऽरुणकुमारदीक्षितस्य चोदारतां प्रशंसामि ।

अन्ते च प्रस्तूयमानेऽनुसन्धानप्रबन्धे शुक्लयजुर्वेदमन्त्रब्राह्मणव्याख्यानां बाहुल्येनोद्धृतत्वात् तेषां स्वरचिह्नवैकल्यात् टिप्पणीनां बाहुल्याच्चातिकठिनी-भूतमपि टङ्कनकार्यं कुशलतया यथासमयं सम्पाद्य स्मरणीयं साहाय्यं कृतवतो वारा-णसीवास्तव्यस्य श्रीपुरुषोत्तमदासशाहमहोदयस्य च सौहार्दं विस्मर्तुं नैव प्रभवामीति यथार्थं निवेदयाम्यहम् -

शिवराज आचार्य.
८ - ११ - १९८५

सौरकार्तिकमासः ।
2042 वै० सं० ।

(शिवराज आचार्यः)
सहप्राध्यापकः (रीडरः)
वाल्मीकिविद्यापीठे, त्रिभुवनविश्वविद्यालयीय-
संस्कृताध्ययनसंस्थानान्तर्गते ।

## मूलग्रन्थ-विषयानुक्रमः

(विस्तृतः)

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता[1] ॥"

इति प्रदर्शितं च ।

साधारणलोकबुद्धिगम्यतया वेदस्वरूपप्रतिपादने तु "वेदो नाम गुरु-शिष्यपरम्परयाऽऽगतस्त्रैवर्णिकानां द्विजत्वसम्पादकः[2] शब्दराशिरेव ऋग्यजुः-साम-अथर्वभेदाद् भिन्नः, येषां च ऋग्वेदादीनामनेकाः शाखाः[3], यदध्ययनार्थं च त्रैवर्णिकानामुपनयनं नित्यम्[4], इति वक्तव्यम् ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- तैत्तिरीयसंहिताभाष्योपक्रमे ।

2- "वृत्त्या शूद्रसमो ह्येष यावद् वेदे न जायते" इति - व० ध० सू० 2/12. बौ० ध० सू० 1/3/7. मनु० 2/172.

3- "चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽऽथर्वणो वेदः" इति - पा० व्या० भा० प्रथमाह्निके ।

4- "श्वेतकेतुर्हारुणेय आस । तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्याऽस्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति" इति - छान्दोग्यो० 6/1/1; "आ षोडशाद् वर्षाद् ब्राह्मणस्याऽनतीतः कालो भवति । आ द्वाविंशात् क्षत्रियस्य । आ चतुर्विंशाद् वैश्यस्य । अत ऊर्ध्वं पतितसावित्रीका भवन्ति । नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः । कालातिक्रमे नियतवत् । त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च । तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्तीति वचनात्" इति - पारस्कर० 1/5/36-43.

तत्र मन्त्रब्राह्मणयोः प्रसिद्धं नियतयोर्वेदत्वम्[1] । तत्र प्रायेणा-ऽनुष्ठेयार्थस्मारकाणि कर्मसु प्रयोज्यानि वेदवाक्यानि मन्त्राः[2] । ते च प्रायेण तत्तत्कार्यमन्त्रसंहितासु कीर्तिताः । यज्ञादिकर्मणां विधायकस्तदुपयोगिद्रव्य-देवताद्यङ्गकलापविज्ञापको विधिस्तुत्यादिप्रशंसा-निषेधादिनिन्दादियुक्तो वेदभागो ब्राह्मणम्[3] । अरण्येऽनूच्यमानत्वादारण्यकत्वेन[4] जीवात्म-परमात्मैक्य-रहस्यप्रतिपादकत्वादुपनिषत्त्वेन[5] रहस्यत्वेन[6] च व्यवह्रियमाणो वेदभागोऽपि

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "मन्त्रब्राह्मणयोर्वेदनामधेयम्" - इति कात्यायनीयप्रतिज्ञापरिशिष्टे 1/1, आपस्तम्बश्रौ० यज्ञपरिभाषासूत्रे 24/1/31;
"आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च" - इति कौशिकसूत्रे 1/3.

2- "तच्चोदके मन्त्राख्या" - इति धर्ममीमांसा० 2/1/7.

3- "शेषे ब्राह्मणशब्दः" - इति तत्रैव 2/1/33;
"कर्मचोदना ब्राह्मणानि, ब्राह्मणशेषोऽर्थवादो निन्दाप्रशंसा परकृतिः पुराकल्पश्च" - इत्यापस्तम्बश्रौ० 24/1/31-33.

4- "सेयं षडध्याय्यरण्येऽनूच्यमानत्वादारण्यकम्" - इति काण्वबृहदारण्यको-पनिषद्भाष्योपक्रमे शङ्करभगवत्पादः ।

5- "सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्, उपनिपूर्वस्य सदेस्तदर्थत्वात्, तादर्थ्याद् ग्रन्थोऽप्युपनिषदुच्यते" - इति च तत्रैव सः ।

6- "चत्वारो वेदाः साङ्गाः सरहस्याः" - इति पा० व्या० म० प्रथमाह्निके; "रहस्यम् उपनिषत्" - इति तद्व्याख्याने उद्द्योते; "रहस्यमुपनिषत्, वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्देशः" - इति मनुस्मृतिव्याख्याने कुल्लूकभट्टः 2/140.

प्रायेण[1] ब्राह्मणस्य एव ।

एष च वेदो वाक्यरूपेण नित्य इति केषाञ्चिदभिमतं प्रतीयते[2] शब्द-रूपेणैव नित्य इति तु परमवैदिका धर्ममीमांसकाः[3] । शब्दस्यैवाऽऽनीतआनि-तया नित्य इति च ब्रह्ममीमांसकाः[4] ।

तत्रोपनीतेन च द्विजेन स्वशाखावेदः ब्राह्मणः प्रयत्नध्येतव्यः[5] ।

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- मन्त्रोपनिषदामीशावास्योपनिषदादीनां सत्त्वात् प्रायेणेत्युक्तम् ।

2- "ननु चोक्तम्- न हि छन्दांसि क्रियन्ते नित्यानि छन्दांसीति । यद्यप्यर्थो नित्यो या त्वसौ वर्णानुपूर्वी साऽनित्या । तद्भेदाच्चैतद् भवति काठकम्, कालापकम्, मौदकम्, पैप्पलादकम्" - इति पा० व्या० भा० 4/3/101.

3- धर्ममीमांसासू० 1/16-23, 1/1/27-32.

4- ब्रह्ममीमांसा० 1/3/28-30.

5- (क) "स्वाध्यायोऽध्येतव्यः" - इति मा० श० प० ब्रा० 11/5/6/3.

(ख) "वेदं समाप्य स्नायात् । ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम् । द्वादशके-ऽप्येके । गुरुणाऽनुज्ञातः । विधिर्विधेयस्तर्कश्च वेदः । षडङ्गमेके । न कल्पमात्रे । कामं तु याज्ञिकस्य" - इति पारस्कर० 2/6/1-8.

(ग) "पारम्पर्यगतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ।।
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।
स्वशाखां यः परित्यज्य अन्यशाखामुपासते ।।
शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ।"
- इति वसिष्ठवचनम्, पारस्करगृह्यसूत्रगदाधरभाष्ये 2/5.

तथैतस्य वेदस्य स्वरूप-प्रयोग-अर्थ-तात्पर्याणामङ्गानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्[1] इति षड् अङ्गानि ऋषिभिर्वेदे-भ्योऽर्थवादानुकूल्य विधीन् समाहृत्य निष्कृष्य पुरुषहितार्थं पृथगपि प्रोक्तानि[2] ।

तत्र शिक्षानाम वर्ण-स्वर-मात्रा-स्थान-करण-प्रयत्न-काकूच्चारण-गुणदोष-पदान्त-पदादिलोपाद्युपदेशिका[3] वेदाङ्गोपयोगिनी विद्या । कल्पो नाम शाखान्तरस्थोपसंहारविधिसमुपसंहारपूर्वकं वैदिककर्मादिप्रयोगक्रमबो-धादिकस्य कल्पक आगमः । व्याकरणं नाम पदगत-प्रकृतिप्रत्ययादिकस्य-पद-पदार्थ-सम्बन्ध-पदस्वरादिप्रदर्शनात्मकं शास्त्रीयमुपदेशकमेकं वाक्य-तदर्थसम्बन्धादि-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे ....

[व०] "पुराण-तर्क-मीमांसा-धर्मशास्त्राङ्ग-मिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" - इति याज्ञवल्क्य-स्मृतावपि वेदानां प्राधान्येनाऽन्येषां तदनुगामित्वेनैव धर्मे प्रामाण्यं स्मृतं 1/3.

1- मुण्डको० - 1/1/5.

2- ऋग्वेदभाष्योपक्रमणिकावृत्तौ "यस्मात् केवलैर्वेदवाक्यैर्न शक्यतेऽनुष्ठातुं विक्षिप्तत्वाद् वेदवाक्यानां गूढार्थत्वाद् च, अतः कविभिराचार्यैर्वेदार्थ-कुशलैर्वेदार्थेभ्यो निष्कृष्य कर्मार्थं सुबोधानीमानि विद्यास्थानानि प्रवर्तितानि - शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषं धर्मशास्त्रं पुराणं न्यायविस्तरो मीमांसादीनि" - इति विष्णुमित्रोक्तिरप्यत्र स्मरणीया ।

3- छान्दोग्योपनिषदि "देवविद्याम्" इत्यस्य [7/1/2] "निरुक्तम्" इति विवरणं कृतं शं०करभगवत्पादेन ।

प्रदर्शनपरं विवरणम् । निरुक्तं नाम यास्केन वाक्यार्थज्ञानाय पदपदार्थयोः सम्बन्धस्य प्रदर्शनाय निगमानां पूर्वकं देवतावाचक-पद-तदर्थ-सम्बन्धनिरूपणपरं[1] विवरणम् । छन्दो नाम स्वरव्यञ्जनविशेषनियमपूर्वकं गायत्र्यादिछन्दो-वृत्तादिपादाद्यक्षरादिनिरूपणपरं शास्त्रम् । ज्योतिषं नाम सूर्य-चन्द्र-तारा-मुहूर्त-नक्षत्र-तिथि-पक्ष-मास-अयन-संवत्सर-युग-कालादिविज्ञानात्मकं कालानु-पूर्वकविधानानुष्ठानपरं विवरणम् ।

पदपाठलक्षणं पदविभक्तिलक्षणविभागादियुक्तिमादाय ऋग्वेदसमानादि[2]

---

1- छान्दोग्योपनिषदि "देवविद्याम्" इत्यस्य [7/1/2] "निरुक्तम्" इति विवरणं कृतं शङ्करभगवत्पादैः ।

2- समानादीनि सप्तलक्षणानि पदलक्षणानि । तानि च समानम्, विसर्गलोपा-लोपौ, रङ्गः, विलङ्घ्यम्, नतपरे, अर्धर्च, अवग्रहम् इति सामवेद-लक्षणकाराः प्रोचुः ।

तैत्तिरीयाणां वेदलक्षणानुक्रमणिकायां तु -

"समानं च विलङ्घ्यं च नतं नतपरं तथा ।
अवग्रहविसर्गान्तो लक्षणमुच्यते ।।" इति कथनं प्राप्यते ।

तत्र च -

[क] समानं नाम - तत्तद् वेदसंहितासु संहितापाठे आकारपूर्वको घोषवद् व्यञ्जनोत्तरः अकारउकारपरो विसर्जनीयो येषु पदेषु लुप्यते तेषां पदानां गणना युक्तः पदपाठज्ञानोपयोगिग्रन्थः । पाणिनीय-व्याकरणशास्त्रेऽपि "वेदाध्यायः, वर्णापारः शन्तिपारः" इत्युदाहरणानि [3/2/1] प्राप्यन्ते । तत्र शन्तिपार इत्युदाहरणमेतत्

.... ऋग्लक्षणेऽपि

उपाङ्गे¹ । छन्दोभाषार्थं वेद-षडङ्ग-वाक्य-प्रातिशाख्यव्याख्यानपरं वेद-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे च . . .

भवनपुस्तकालयेऽस्ति । पुस्तकसङ्ख्या 4104, 4269 इति । यद्यपि द्वे एव पुस्तके खण्डिते तथापि द्वयोर्मिलितं पुस्तकं पूर्णं भवितुमर्हति ।

1- वेदोपाङ्गानां नामान्यत्रोक्तः पुराण-रामायण-महाभारतादिषु बहुषु स्थलेषु प्राप्यते । किन्तु कानि वेदोपाङ्गानीति विविक्त उल्लेखो दुर्लभः। शौनकीये चरणव्यूहे यजुर्वेदखण्डे तु "प्रतिपदमनुपदं छन्दोभाषा धर्मो मीमांसा-न्यायस्तर्क इत्युपाङ्गानि" इति षड् वेदोपाङ्गानि गणितानि । महीदासकृता अन्यास्तस्याभिप्रेताश्च तद्व्याख्यास्तु अनुपलब्धाः प्रतीयन्ते । कातीयचरणव्यूहे कातीय-गोभ-चरणव्यूह-प्रतिज्ञासूत्रे चोक्तानां अन्यानुपाङ्गानां गणना प्राप्यते । त्रिभाष्यरत्ने तैत्तिरीयप्रातिशाख्यव्याख्याने चोपलब्धौ -

"प्रतिपद पादकुर्द छन्दोभाषान्वितम् ।
मीमांसा-न्याय-तर्काश्च[धर्मश्च] उपाङ्गानि विदुर्बुधाः ॥"

इति श्लोकौ दृश्यते ।

नीतीपनिर्देशयुक्ते ग्रन्थे तु -

"उपाङ्गमयनं चैव मीमांसा न्यायविस्तरः ।
धर्मोत्सितार्थं च वेदवेदाङ्गिकं तथा ॥
निबन्धाः सर्वशास्त्रा[णि] च समावायसङ्गतिः ।
धर्मशास्त्रं मार्गिणामन्तःकरणान्वितम् ॥
इतिहासपुराणाख्यमुपाङ्गं च प्रकीर्तितम् ।"

इत्युक्तम् । तत्र "1. अयनम् = वेदान्तशास्त्रम्, 2. मीमांसा = जैमिन्या-

. . . . इत्यग्रपृष्ठेऽपि

सामयाचारिक-धर्मप्रतिपादनपरं धर्मसूत्रम्. तान्यपि श्रौत-गृह्यसूत्र-परिशिष्टानि तदितराः स्मृतिग्रन्थाः[1], श्रौतकर्मप्रयोगानुष्ठानकल्पाः, श्रुति-स्मृत्युक्तधर्म-स्वरूप-प्रयोजनादीनाम् धर्मसूत्रादि-ग्रन्थव्याख्यापनादिप्रयोजनके प्रबोधने तत्परं

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- गृह्यसूत्र-धर्मसूत्र-श्रौतसूत्र-गृह्यसूत्रपरिशिष्ट - स्मृतिग्रन्थेतादीनां श्रुत्यनुगामित्वस्य प्रामाण्यस्य च विषये धर्ममीमांसासूत्रे "अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्" इति [1/3/2]. "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति [1/3/3] इति च; मनुस्मृतौ च -

"यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।।" इति [2/7]

देवीभागवते च -

"स्मृतयश्च श्रुतेरर्थं गृहीत्वैव च निर्गताः ।
मन्वादीनां श्रुतीनां[स्मृतीनां ?] च ततः प्रामाण्यमिष्यते ।।
क्वचित् कदाचित् तन्त्रार्थकटाक्षेण परोदितम् ।
धर्मं वदन्ति सोऽशस्तु नैव ग्राह्योऽस्ति वैदिकैः ।।"
- इति [7/39/17-18]

स्मृतिप्रामाण्यविषये आचार्यकुमारिलभट्टोऽपि - "तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः । तत्र यावद् धर्ममोक्षसम्बन्धि तद् वेदप्रभवम्, यत् तु अर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम् । एषैवेतिहासपुराणयोरपि उपदेशवाक्यानां गतिः" इति तन्त्रवार्तिके [1/3/2. आनन्दाश्रम-संस्करणे 79 पृ0] प्राह ।

"श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" इति [रघुवंशे 2/2] वदता महाकविनापि श्रुत्यनुगामित्व एव स्मृतेः प्रामाण्यमिति सूचितमेव ।

स्त्रीशूद्राशक्तव्रात्यपतितादिधर्माणां प्रतिपादकं विशेषतः
श्रुतिस्मृत्यनुकूलशिष्टाचाररूपाणां शिष्टानुष्ठानां ^ स्त्री-शूद्राशक्तव्रात्यपतितानु-
ग्रहैकपरं पुराणम्, तथैव महाभारतादिक इतिहासवेदेति धर्मात्मकं कल्पसूत्रं
चतुर्थमङ्गम्। श्रुतिवाक्य-तात्पर्यादिनिर्णयोपयोगि-न्याय-प्रदर्शक धर्म-
मीमांसा कल्पोपबृंहकमुपाङ्गम् प्रवृत्तिधर्मविषयम्। ब्रह्म-मीमांसा चोपनिषद्-
वाक्य-तात्पर्यादिनिर्णयोपयोगि-न्याय-प्रदर्शक निवृत्तिधर्मपरतया धर्म-
मीमांसातः पृथग्भूताऽपि स्वरूपसादृश्यात् मीमांसात्वेनैकोपात्ता उपाङ्ग-
ज्ञेयाङ्गैकपरिगणितत्वात्। उभयोर्मीमांसयोर्वेदवाक्यतात्पर्यविचारपरतया
वेदैकोपचारः। लौकिक-दृष्ट-सिद्ध-पदार्थ-विवेक-पदार्थबोधनात्मका-
ऽन्यभावनादिदर्शनपरं सांख्य-योग-न्याय-वैशेषिक-लोकायत-शब्दादिदर्शं[2]
विद्याशास्त्रं च तर्काख्यम् आन्वीक्षिकीपर्यायं वेदापेक्षित-लौकिकार्थ-विवेक-
परतया वेदानुसारि वेदस्याङ्गोपकारकं पञ्चममङ्गम्।

तथेतिहासपुराणयोर्वेदोपबृंहकत्वं महाभारतादिषु "इतिहासेन
पुराणेन च वेदं उपबृंहयेत्, अन्यथा वेदाभिप्रायमबुद्ध्वा जना वेदमाक्षिपेयुः, वेदे

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी" - इति कौटलीयार्थशास्त्र-
वचनम् [1/2]
"आन्वीक्षिकी दण्डनीतिस्तु तर्कविद्यार्थशास्त्रयोः" - इत्यमरकोशवचनम्
[1/6/5]
न्याय-वैशेषिकयोस्तर्कत्वेन कथितम् प्रसिद्धं च [शुक्रनीतौ 4/286-89]
विद्यार्थेदमुक्तम्। तर्कस्य वेदार्थोपकारकत्वं च तन्त्रवार्तिके [आनन्दाश्रम-
संस्करणे 80-81 पृ०] प्रतिपादितम्।

भागवतकारेणाऽप्ययमर्थः स्फुटं कृतः[1] । पुराणेषु प्रोक्तानामन्यथाकृतीनां च सत्त्वमपि बल्लालसेनादिभिः[2] प्राचीनैः आधुनिकैः[3] च स्वीकृतम् ।

इतिहासपुराणस्य विशेषतः स्त्रीशूद्रादिवर्गानुपयोगितामुद्दे-श्यकत्वं च 'वेदश्रवणरहितानां स्त्रीशूद्रद्विजबन्धूनां श्रेयसे वेदोक्तधर्मादिज्ञानाय च व्यासेन भारतं विरचितम्'[4] इति वदता भागवतकारेण 'अल्पायुषोऽल्पबुद्धीन्-शक्तान् विप्रान् दृष्ट्वा. स्त्रीशूद्रद्विजबन्धूनां वेदश्रवणाभावं च विचार्य तेषामेव

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 'पुराणेषु क्वचिच्चैव तन्त्रदृष्टं यथातथम् ।
धर्मं वदन्ति तं धर्मं गृह्णीयान्न कथंचन ॥
वेदाविरोधि चेत् तन्त्रं तत् प्रमाणं न संशयः ।
प्रत्यक्षश्रुतिविरुद्धं यत् तत् प्रमाणं भवेन्न च ॥
सर्वथा वेद एवासौ धर्ममार्गप्रमाणकः ।
तेनाविरुद्धं यत् किंचित् तत् प्रमाणं न चान्यथा ॥'
- इति 11/1/24-26.

2- दानसागरे. उपक्रमणिकायाम्. श्लोकाः 59-67.

3- 'मार्कण्डेयपुराण एक अध्ययन' इति नाम्के ग्रन्थे बदरीनाथशुक्लमहाशयस्य प्राक्कथने, पृ० 9-10.

4- 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम् ।' इति
'भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥'
- इति च 1/4/25, 29.

हिताय व्यासेन पुराणानि विरचितानि[1]" इति वदता देवीभागवतकारेण, "वेदार्थविहितो धर्मः परमो धर्मः, पुराणादिषु स्मृतो धर्मोऽवरो धर्मः[2]" इति "श्रौतकर्मविधावशक्तश्चेत् स्मार्तं कर्म कुर्वीत[3]" इति च वदता व्यासेन, "वेदाऽध्ययनशून्यानां कृते पुराणान्तर्गता मन्त्रा उक्ताः, वैदिकः पुराणोक्तैर्मन्त्रैः कर्म न कुर्वीत[4]" इति वदता कमलाकरभट्टेन च स्फुटमुक्तमेव । वेदाध्ययनान-धिकारिभिस्तु स्मार्तागमानुसारमेव संस्कारादिकर्माणि कर्तव्यत्वात्[5], तथा-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ ।
पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे ॥
स्त्रीशूद्रद्विजबन्धूनां न वेदश्रवणं मतम् ।
तेषामेव हितार्थाय पुराणानि कृतानि च ॥" - इति 1/3/20-21.

2- "श्रुतः स परमो धर्मो यो वेदादधिगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥" - इति व्यासवचो वीरमित्रोदयपरिभाषाप्रकाशे, वाराणसी-संस्करणे पृ 29.

3- "श्रौतं कर्तुं न चेच्छक्तः कर्म स्मार्तं समाचरेत् ।" - इति माधवधृतं व्यास-वचनम् [पराशरमाधवीये, प्रथमेऽध्याये, पृ 293]

4- "वेदाक्षरविशून्यस्य पुराणान्तर्गताः पराः ।
श्लोकाः केचन सम्प्रोक्ताः स्नानसन्ध्यादिकर्मसु ॥
न वैदिकैः पुराणोक्तैर्मन्त्रैः कुर्यात् कदाचन ।
किन्तु कर्मापि तस्मात् वैदिकेनैव चाचरेत् ॥" इति कमलाकरी, 265-266.

5- "स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥" - इति अङ्गिरो-वचनं वीरमित्रोदये संस्कारप्रकाशे, वाराणसीसंस्करणे, पृ 135.

लौकिकार्थविज्ञप्त्यादिप्रदानेन[1] सार्थकत्वस्य, स्त्रीशूद्रासक्तजात्यपतितादीन् प्रति तु धर्मार्थकाममोक्षविषयाणां तेषां वचनानां विशेषतः सार्थकत्वस्य दर्शनात् च एतत्पुराणस्य विशेषतः स्त्रीशूद्रासक्तजात्यपतितादिबुद्धिवैशद्यकरत्वमवसीयते । साधारणजनानामपि कृते धर्म-श्रुतिरहितानामेवावगम्यत्वात् धर्म-मोक्ष-सम्बन्धि-क्रियाविधौ मन्दमेव प्रयोजनमितरत्पुराणेन वेदाद्यध्ययनादि-कृत्याधिकारिणां विज्ञानात्[2] । यानि तु श्रुति-स्मृत्योरपि पुराणानाम-धिकतरं माहात्म्यं प्रतिपादयन्तीव वचनानि[3] तानि सर्वाण्यपि धर्ममोक्षयोरेव

---

1- एतत्सम्बन्धे "यदेतन्मन्त्रब्राह्मणस्य लोकवृत्तमितिहासपुराणस्य लोकव्यवहार-व्यवस्थानं धर्मशास्त्रस्य विषयः" इति न्यायभाष्यकारवचनं [4/1/62] च स्मरणीयम् । पद्मपुराणवचनेन -

"यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
पुराणं च विजानाति यः स तस्माद् विचक्षणः ।।"

इति वचनेन च [5/2/50-51] पुराणविज्ञस्य लौकिकार्थबुद्धिविचक्षणत्वातिश-यमेव प्रतिपादितमिति विवेक्तव्यम् ।

2- पुराणानां धर्ममोक्षसम्बन्धिकर्तव्यार्थप्रकाशकत्वेऽपि तत्तु तात्पर्य-ज्ञानाय कश्चिदपेक्षितत्वं तु न निषिध्यते ।

3- [क] "श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम् ।" - इति देवीभागवते 11/1/21.

[ख] "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।।"
- इति मत्स्यपुराणे 53/3.

. . . . ब्रह्माण्डेऽपि

कारादिविरोधि-पौराणिकधर्माचरणानुरागाभ्युदाने तत्पराणीति बोद्धव्यानि. वेदातिरिक्तशास्त्रावमन्तृनिन्दकवचनानि[1] च वेदानुक्त-वेदप्रतिकूलधर्माणां प्रतिपादकानां स्मृतिपुराणादिवचनानां सर्वथा निराकरणविषयेऽनौचित्यस्य प्रतिपादकतया नेतव्यानि. न तु तादृशानां सर्वेषां धर्माणां वेदप्रत्यक्षानुक्त-परत्वेऽपि अनाचरणीयतायाः प्रतिपादकत्वेन स्वीकर्तव्यानि. तत्र तत्र वाक्य-शेषादिषु[2] वेदस्यैव धर्मे परमप्रमाणतायाः स्वीकृतत्वात्[3]. बहुविस्तरेषु विकीर्णेषु

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवावमन्यते ।
स सद्यः पशुतामेति सम्भवानेकविंशतिम् ।।" - इति अत्रिसंहितायाम्, श्लो- 11.

2- (क) "सर्वथा वेद एवासौ धर्ममार्गप्रमाणकः" - इति देवीभागवते 11/1/26.

(ख) "तस्मात् सर्वप्रयत्नेन वेदोक्तं धर्ममाचरेत्" - इति च तत्रैव 11/1/28.

(ग) "वेदोक्तमेव सद्धर्मं तस्मात् कुर्यात् नरः सदा" - इति च अग्रे तत्रैव, 11/1/32.

(घ) "यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः" - इति महाभारते, 12/269/59.

(ङ) "न वेदेन समं शास्त्रम्" - इति पद्मपुराणे, 4/96/37.

(च) "नास्ति वेदात् परं शास्त्रम्" - इति अत्रिसंहितायाम्, श्लो० 151.

(छ) "सर्वे विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ।।"
- इति महाभारते, 12/270/43.

3- "तस्मात् सर्वप्रयत्नेन वेदोक्तंधर्ममाचरेत् ।
स्मृतिः पुराणमन्यद् वा तन्त्रं वा शास्त्रमेव च ।।
तन्मूलत्वे प्रमाणं स्यात् नाऽन्यथा तु कदाचन ।"
- इति देवीभागवते, 11/1/28-29.

अन्यत्र चैतेषु पुराणेषु अनध्यायवर्ज्यत्वेनोक्तानां सर्वेषां कर्मणां वेदविद्याप्रद-
प्रतिषेधादिरूपत्वात्, अधीत्यधर्मविक्रयस्य निन्दितत्वाच्च[1] । एवं च सति स्व-स्व-वेदशाखानुसारं धर्मविहिताचारकृतानां द्विजानां सत्यपि क्रियताधीन धर्म-मोक्षविषयेऽपि इतिहासपुराणेन प्रयोजने लौकिकार्थबुद्धिजनकज्ञानस्य तैरेतस्तो-ऽपि लोकादेव ग्रहीतुं शक्यत्वाद् धर्म-मोक्षविषयकविवेचनं स्व-स्व-वेदशाखानु-धर्मोक्तादेव एवाधिगम्यत्वाद् इतिहासपुराणस्य विशेषतःकर्मविद्याशक्त-व्रात्यपतिताद्युद्देश्यकत्वं युक्तम् ।

अत्रेदमवधारणीयम् । यद्यपि केचिद् वृद्धयोगियाज्ञवल्क्यस्मृतौ सांख्य-योग-पाञ्चरात्र-पाशुपतागमानामपि[2] धर्मे प्रमाणतया उक्तत्वात्,

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- (क) "अनृतं पारदार्यं च तथाऽभक्ष्यस्य भक्षणम् ।
अगम्यागमनापेयं हिंसा स्तेयं तथैव च ॥
अधीत्यधर्माचरणं चैवं धर्मविनिन्दनम् ।
नैतानि विकर्माणि सर्वा तानि वर्जयेत् ॥"
- इति व्यासस्मृतौ, 3/11-12.

(ख) "अधीत्यधर्मविक्रयात् विप्रं नश्यति वै कुलम् ।"
- इति कूर्मपुराणे, 2/16/21.

2- "न वेदशास्त्रादन्यत् तु किञ्चिच्छास्त्रं हि विद्यते ।
निःसृतं सर्वशास्त्रं तु वेदशास्त्रात् सनातनात् ॥
दुर्बोधं तु भवेद् यस्मादध्येतुं नैव शक्यते ।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ॥

. . . . अङ्गिरस्मृत्येऽपि

महाभारतेऽपि साङ्ख्य-योग-पाशुपत-पाञ्चरात्राणां परमर्षि-हिरण्यगर्भ-श्रीकण्ठ-भगवत्[1]-प्रोक्ततायाः प्रतिपादितत्वात्, वृद्धपराशरस्मृतावपि पाञ्चरात्रस्य वेदाभिन्नतायाः प्रोक्तत्वात्[2], हेमाद्रिकृते विष्णुधर्मोत्तरेऽपि[3] तेषां साङ्ख्य-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत् ॥" - इति 12/1-4.

1- "सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥
पाञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् ।"
- इति 12/349/65-68.

2- "वैदिकं तु जपं कुर्यात् पौराणं पाञ्चरात्रिकम् ।
यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः ॥" - इति 4/106.

3- "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥
शीतातपयोः सर्वभावोपकरणेषु च ।
हेतुरावेक्ष्यवाद धर्मात् सारमेतत् प्रकीर्तितम् ॥

. . . . अग्रिमपृष्ठेऽपि

योग-पाञ्चरात्राणां धर्मे मोक्षे च प्रमाणतया उक्तत्वात्, कूर्मपुराणेऽपि पाशुपतस्य वेदसारतया उक्तत्वात्[1]. पुराणान्तर्गत-सांख्य-योग-पाशुपत-पाञ्चरात्रादीनां च पुराणस्याऽलङ्घनीयतया: प्रतिपादनेनाऽन्यत्राऽपि[2] स्वीकार्यतायाः प्रतिपादितत्वात् सांख्य-योग-पाशुपत-पाञ्चरात्रादीनां वेदाविरुद्धानां वैदिकत्वात्तद्-धर्मे प्रामाण्यमिति मन्यन्त इति तेषामपि धर्मान्तरत्वेनोल्लेखः क्वचिद् यद्यापाततः प्रतीयते, तथापि माध्यन्दिनीयशतपथब्राह्मण[3]-तैत्तिरीयारण्यकादौ[4] स्वाध्यायाऽध्ययनेऽध्येतव्येषु शास्त्रेषु सांख्य-योग-पाशुपत-पाञ्चरात्रादीनामनुक्तत्वात्, मुण्डकोपनिषदि प्रोक्ते ब्रह्मवादि-वेदितव्यपरापरविद्याप्रकारेष्वपि[5] तेषामनुपात्तत्वात्, वैदिकमार्गभिन्न-तान्त्रिकमार्गान्तर्गतानां तेषां वेदकल्पेऽनु-

---

पूर्वपृष्ठस्याग्रे . . . .

पताकेव सन्तो वेदमार्गस्य दीरितः ।"

- इति वीरमित्रोदये परिभाषाप्रकाशे काशिसंस्करणे, पृ० 25.

1- "निर्मितं हि मया पूर्वं व्रतं पाशुपतं परम् ।
गुह्याद् गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥" - इति 2/37/141.

2- "पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥"
- इति ब्रह्मोक्तयाज्ञवल्क्यसंहितायाम्, 1/47 (वृद्धगौतमस्मृतौ 3/60)

3- 11/5/6/4-11/5/7/9.

4- 2/11/2.

5- 1/1/4-5.

प्रयोगात्, वृद्ध-योगि-याज्ञवल्क्यस्मृतौ चतुर्दशेति धर्मस्थानपरिगणने कृते प्रतिपा-
तथैव "साङ्ख्यं योगः" इत्यादेः श्लोकस्य पाठात्, अनेकव्याख्यातृ प्रमाणितेषु
स्मार्तनिबन्धग्रन्थेषु वैदिकैः व्याख्यातृव्याख्यानेषु गौतम-बौधायना-ऽऽपस्त-
म्बादिधर्मसूत्रेषु मनुस्मृति-याज्ञवल्क्यस्मृतिप्रभृतिषु ग्रन्थेषु च पाशुपत-पाञ्चरात्रा-
गमादीनां धर्मशास्त्रत्वाऽनुपदिष्टत्वात्, महाभारत एव साङ्ख्य-योग-
पाञ्चरात्र-पाशुपत-ज्ञानानां वेदात् पृथक्तायाः[1] उक्तत्वात्, साङ्ख्य-योग-
पाञ्चरात्र-वेदारण्यकानां परस्पराङ्गतायाः सिद्धान्तस्य[2] च एकान्तिका-
नामनुष्ठेयधर्मान्तरत्वेनैव महाभारते प्रोक्तत्वात्[3], एकान्तिनां च महाभारतवका-
देव वेदोपनिषद्बाह्यतायाः प्रतीयमानत्वात्[4], सात्त्वतधर्मानुष्ठाने च धर्मान्याय-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नाना मतानि वै ॥"
- शान्ति 12/349/64.

2- "एवमेकं सांख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पाञ्चरात्रं च कथ्यते ॥"
- शान्ति 12/348/81-82.

3- "एष एकान्तिनां धर्मो नारायणपरात्मकः ।"
- शान्ति 12/348/82.

4- "साङ्गोपनिषदान् वेदान् ये विप्राः सम्यगास्थिताः ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ।
तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ॥"
- शान्ति 12/348/5-6.

पाशुपतयोगस्य च सांख्यतिलोकसिद्धान्तात्मवादिकापिलनाङ्‌गवर्णनादितो दूरं भिन्नत्वात्. योगादिशास्त्री चाष्टादशविद्या गणयित्वा तत्र चतुर्दशानां विद्यानामेव धर्मशास्त्रत्वं प्रतिपाद्य, धर्मोपचारिकधर्मयो: धर्म-मुख्यत्वयोश्च भेदं प्रदर्श्य, श्रुतिचोदनाविषयस्यैव , धर्मतां निर्धार्य, स्व-स्व-वेदाद्यानुमतिप्रतिपादितस्य धर्मस्याऽन्यानपेक्षतायाश्च प्रतिपादितत्वात्. आचार्य-कुमारिल-भट्टेन च -

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "शास्त्रं चतुर्दशविधमिति केचिन्मनीषिणः ।
अष्टादशविधं चैते पुनरन्ये मनीषिणः ॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वो वेद एव च ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशस्मृताः ॥
चतुर्दशानां विद्यानां धर्मशास्त्रत्वमीरितम् ।
नायुर्वेदादिकस्यैतत् तस्य दृष्टैकमूलतः ॥
नास्त्येव धर्मशास्त्रत्वं न धर्मः श्रुतिचोदितः ।
धर्मः स्याच्चोदनाप्रोक्तस्तद्भिन्नस्तूपचारतः ॥
लिङादिरूपा सा येषा युक्तदा श्रुतिचोदिता ।
श्रुत्यन्तर्गत-लिङ्-लोट्-तव्य-प्रत्ययचोदिते ॥
धर्मशब्दो मुख्यतः स्यादन्यत्र ह्युपचारतः ।
पुराणाद्युक्तकर्मापि नाना दानादिरूपकम् ॥
मुख्यत्वं वदन्त्येते न धर्मत्वं तु वैदिकाः ।
धर्मत्वं किल तेषां तु गौण्या वृत्त्या न मुख्यतः ॥

. . . . अग्निमुष्टेऽपि

वेदाधिकारी वेदोक्तधर्मं परित्यज्यान्यधर्मसमाचरणको सार्वज्ञोऽपि श्वयोनौ जन्म प्राप्नोतीत्युक्तत्वात्. द्विजातीनां शाक्त-शैव-वैष्णवादिमतानुसरणेन कम-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

वामं कापालकं चैव कौलकं भैरवागमः ।
शिवेन मोहनार्थाय प्रणीतो नान्यहेतुकः ॥
दक्षशापाद्भृगोः शापाद् दधीचस्य च शापतः ।
दग्धा ये ब्राह्मणवरा वेदमार्गबहिष्कृताः ॥
तेषामुद्धरणार्थाय सोपानक्रमतः सदा ।
शैवाश्च वैष्णवाश्चैव सौराः शाक्तास्तथैव च ॥

गाणपत्या आगमाश्च प्रणीताः शङ्करेण तु ।
तत्र वेदाविरुद्धोंऽशोऽप्युक्त एव क्वचित्क्वचित् ॥
वैदिकैस्तद्ग्रहे दोषो न भवत्येव कर्हिचित् ।
सर्वथा वेदभिन्नार्थे नाधिकारी द्विजो भवेत् ॥
वेदाधिकारहीनस्तु भवेत् तत्राधिकारवान् ।
तस्मात् सर्वप्रयत्नेन वैदिको वेदमाश्रयेत् ॥"
- इति देवीभागवते, ७/३९/२८-३३.

[ख] "भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥
- इति भागवते, ३/२/२८.

|- वेदोक्तं यः परित्यज्य धर्ममन्यं समाचरेत् ।
सार्वज्ञोऽपि श्वयोनौ जायते ध्रुवम् ॥"
- इति पराशरमाधवीये प्रायश्चित्तकाण्डे पुराणवचनम्, पृ० ४९३.

पाञ्चरात्रादितन्त्रग्रन्थानां वैदिकधर्मात्मकत्वेनोपदेशेऽपि नैव क्षतिरिति
बोध्यम् । वेदकल्पानुक्ताशुपतानाकाङ्क्षितानां लोके धर्मत्वेन प्रसिद्धानां
वेदाविरुद्धानां शिष्टाचरित-रामायणानुक्तार्थानां तु लौगाक्षिस्मृतिकल्पानुक्तं[1]
गौणधर्मत्वं भवेत्. देवीभागवतोक्त्यनुरूपं[2] धर्माभासत्वं वापि कथञ्चन भवेत् न
तु मुख्यवैदिकधर्मत्वमिति सुधीभिर्विवेक्तव्यम् । तथा -

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम् ॥"
- इति भागवते, 11/3/46-47.

[ख] "वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ।"
- इति च तत्रैव 11/11/37.

[ग] "वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥"
- इति च तत्रैव 11/27/7.

1- "पुराणोक्तधर्माणां नानादानादिकर्मणाम् ।
मुख्यत्वं वदन्त्येते न धर्मत्वं तु वैदिकाः ॥
धर्मत्वं किल तेषां तु गौण्या वृत्त्या न मुख्यतः ॥"
- इति स्मृतिसन्दर्भे, षष्ठे भागे, पृ॰ 275.

2- "श्रुतिस्मृतिभ्यां कथितो यस्तु स धर्मः प्रकीर्तितः ।
अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यते ॥
- इति 7/39/15.

नानाचरणादिभेदभिन्नाम्[1] आर्याणाम् । वेदश्चानेकशाखाभिन्नो बहुविस्तरः ।

तत्र प्रस्तुतेऽनुसन्धानप्रबन्धेऽनुसन्धातुः स्वशाखाम्नायं माध्यन्दिनीयं तत्सम्बद्धं शाङ्खायनं कौथुमं[2] च प्राधान्येनाऽऽधारीकृत्याऽन्यग्रन्थांस्तु यथावश्यं प्रमाणयन् शाङ्खायनाम्नातवैदिकयज्ञानां निरूपणं करिष्यते ।

<u>वैदिकयज्ञाः</u>

तत्र प्रवृत्तिधर्म-निवृत्तिधर्मयोर्मध्ये प्रवृत्तिधर्मरूपा वैदिका यज्ञाः । वेदे विहिता[3] वैदिकाः । यद्यपि पञ्चमहायज्ञादयोऽन्येऽपि यज्ञा वेदे विहिता वैदिकाः । सन्ति पञ्चमहायज्ञा एव, तथापि अग्निहोत्रादीनां वेदे साङ्गोपाङ्गं विहितानामेषाञ्च वैदिकत्वेन ग्रहणं क्रियते, तेषामेव वेदे साक्षात्

---

१- "साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" - इति निरुक्ते [1/6/4] अत्र आचार्ययास्को धर्मज्ञानार्थः साङ्गो वेद इति प्रबोधयति ।

२- यद्यपि "पञ्चशाखासु तण्ड्यजैमिनिकमौद्गायं शौनकायनं कौषीतकं च" इति प्रतिज्ञानामके तृतीयपरिशिष्टे उक्तं तथापि स्वोद्देश्यत्वात् तदनुरूपयोः कौथुमशाङ्खायनयोः परम्परानुसारं ग्रहणं कृतं वेदितव्यम् ।

३- यद्यपि "तत्र विहितः" इत्यादिकः पाणिनीयो योगो नोपलभ्यते, तथापि "तद्धितप्रकृताः पाणिनीयाः" इत्याभाष्यं स्मृत्वा "निवृत्तं कर्म वैदिकम्" [मनुस्मृतौ 12/88] इत्यादेः प्रयोगस्य बाहुल्यं च दृष्ट्वा एतादृशोऽर्थः कल्पितः ।

<u>औपनिषदमात्मानम्</u>

वैदिको निवृत्तिधर्मस्तु ब्रह्मात्मज्ञानपर: सर्वसन्न्यासरूप: प्राधान्येनोपनिषत्सु प्रकृष्टतया प्रतिपाद्यते । यद्यपि उपनिषदोऽपि वेदा एव तथापि गौणमुख्यन्यायेनोपनिषदां पृथगुल्लेख: । एतेन न्यायेनोपनिषदां पृथगुल्लेखस्तत्र तु विधिनिषेधात्मकस्वार्थप्राधान्येन कर्मकाण्डतया गृह्यमाणो वेदभागो वेदशब्देन उपासनात्मज्ञानपरो वेदभागश्चाऽऽरण्यकशब्देनोपनिषच्छब्देन रहस्यशब्देन वेदान्तशब्देन मोक्षशास्त्रशब्देन चाऽभिहितो भवति[1] । कुत्रचित्तु

- - - - - - - - - - - - - - - - - - - - - - - - -

1- [क] "यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चाऽऽख्यानमिदं विद्यान्नैव स स्याद् विचक्षणः ॥"
- इति महाभारते, 1/2/82.

[ख] "वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च ।"
- इति च तत्रैव 12/19/17.

[ग] "वेदोक्ताश्चैव ये धर्मा वेदान्ताधिगताश्च ये ।"
- इति च तत्रैव 12/54/19.

[घ] "अधीत्य वेदानखिलान् साङ्गोपनिषदस्तथा ।"
- इति च तत्रैव 12/231/7.

[ङ] "यदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
तदन्तेषु पुनर्व्यक्तं क्रमयोगेन लक्ष्यते ॥
- इति च तत्रैव 12/232/28.

[च] "यदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
वेदान्तेषु पुनर्व्यक्तं कर्मयोगेन लक्ष्यते ॥"
- इति च तत्रैव 12/238/11.

. . . . ऋग्मन्त्रेऽपि

वेदः क्रियाविधिनिषेधात्मकधर्मार्थप्राधान्येन शब्दप्राधान्येन च वेदशब्देनापर-विद्याशब्देन चोच्यते, परमार्थप्राधान्येन ब्रह्मात्मज्ञानप्राधान्येन चोपनिषच्छब्देन परविद्याशब्देन चोच्यते । तथा हि मुण्डकोपनिषदि- "तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा । यया तदक्षरमधिगम्यते"[1] इति । तत्र च शङ्कराचार्यपादस्येदं व्याख्यानमवधारणीयम्- "ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यात् मोक्षसाधनं च, या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ।[2]" इति

---

पूर्वपृष्ठस्याग्रे . . . .

[क] "न वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतश्रमः ।"

– इति महाभारते, 12/320/5.

[ख] "शैलेभ्यश्चैव वर्षेभ्यश्चतुर्वेदाद् गिरन्तु बहुन् ।
आरण्यकं कृतं देवो हरिर्नारायणो हरिः ॥"

– इति च तत्रैव 12/339/8.

[ग] "आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ।
समुद्धृतमिदं ब्रह्मन् कथामृतमिदं तथा ॥"

– इति च तत्रैव 12/343/13.

[घ] "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥

– इति मनु० 2/140.

1– 1/1/4-5.

2– मनु० – 12/95.

हि स्मर्यन्ते । कुदृष्टित्वात् निष्फलत्वादनादेया स्यात् । उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात् । ऋग्वेदादित्वे तु पृथक्करणमनर्थकम् । अथ कथं परेति । न । वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं नोपनिषच्छब्दराशिः । वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षितः । शब्दराश्यधिगमेऽपि यत्नान्तर-मन्तरेण गुर्वभिगमनादिलक्षणं वैराग्यं च नाक्षराधिगमः सम्भवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति" इति । अत एव च उपनिषच्छब्दः शङ्कर-भगवत्पादैरेव व्याख्यातः – "सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सतां संसारस्यात्यन्तावसादनात्, उप-नि-पूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद् ग्रन्थोऽप्युपनिषदित्युच्यते" इति बृहदारण्यकमुण्डकयोः । काठकोप-निषद्वल्लीवृत्त्युपक्रमेऽपि प्रतिबोधितं तत्र भवता । तदेतादृशपरविद्यापरोप-निषद्वेद्याक्षरविषयं विज्ञानं प्रस्तुतोऽनुसन्धानप्रबन्ध औपनिषदमाख्यानमभि-संधत्ते ।

<u>उपनिषदः</u>

परविद्यारूपोपनिषदो ग्रन्थरूपोपनिषत्प्रतिपाद्यत्वात् साम्प्रत-कालप्राप्याप्राप्यग्रन्थरूपोपनिषदां विषयेऽपि संक्षेपेण विचारः क्रियते ।

तत्र प्रतिशाखमेकैकोपनिषदिति प्रायेण जना मन्यन्ते । उक्तं च "मुक्तिकोपनिषद्" इत्याख्ये ग्रन्थे –

"एकैकस्यां तु शाखायामेकैकोपनिषन्मता"[1] इति।

तस्माद् वेदशाखासंख्याऽत्र विचारणीया।

तत्र पाणिनीयव्याकरणभाष्ये- "एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽऽथर्वणो वेदः"[2] इति एकं सहस्रम् एकं शतम् एकत्रिंशच्च वेदशाखा उक्ताः। शौनकीयचरणव्यूहे कात्यायनीयचरणव्यूहे च ऋग्वेदस्य पञ्चशाखाः, कृष्णयजुर्वेदस्य षडशीतिः शाखाः, शुक्लयजुर्वेदस्य पञ्चदश शाखाः, सामवेदस्य सहस्रं शाखाः, अथर्ववेदस्य नवैव शाखा उक्ता इति वेदानाम् एकं सहस्रम् एकं शतं पञ्चदश च शाखाः प्रोक्ताः, अथर्ववेदपरिशिष्टस्थे चरणव्यूहे तु "ऋग्वेदस्य सप्तशाखा भवन्ति" इति "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति" इति, "सामवेदस्य शाखासहस्रमासीद्" इति, "ब्रह्मवेदस्य नव भेदा भवन्ति" इति योजयता वेदानाम् एकं सहस्रं चत्वारिंशच्चैव शाखा गणिताः। "मुक्तिकोपनिषद्" इत्याख्ये ग्रन्थे तु -

"ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः।
नवाधिकशतं शाखा यजुषो मारुतात्मज॥
सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप।
आथर्वणस्य शाखाः स्युः पञ्चाशद् भेदतो हरे॥"

इति वेदानामेकं सहस्रमेकं शतमशीतिश्च शाखा उक्ताः। "शतोपनिषद्"

---

1- 1/14.

2- पस्पशाह्निके।

3- 1/12-13.

इत्याख्ये ग्रन्थे पुनः -

"एकविंशतिशाखायामृग्वेदः परिकीर्तितः ।
शतं च नवशाखासु यजुषामेव जन्मनाम् ॥
साम्नः सहस्रं शाखाः स्युः पञ्चशाखा ह्यथर्वणः[1] ।"

इति वेदानामेकं सहस्रमेकं शतं पञ्चविंशतिश्च शाखा गणिताः । पुराणेषु ग्रन्थान्तरेष्वपि वेदशाखानां विभिन्नाः संख्याः प्रतिपादिताः[2] । यावत्यस्तावत्यो वा वेदशाखाः स्युः, यावत्य एव वेदशाखास्तावत्य एवोपनिषदः स्युरिति तु पूर्वोक्त मतादायाति । वस्तुतस्तु एकस्यामेव माध्यन्दिनीयवाजसनेयिशाखायां मन्त्रोपनिषद् ईशावास्योपनिषदो ब्राह्मणोपनिषदो बृहदारण्यकोपनिषदश्च दर्शनात्, कृष्णतैत्तिरीयशाखायां च तैत्तिरीयोपनिषद् महानारायणोपनिषच्चेति द्वयोर्ब्राह्मणोपनिषदोर्दर्शनात् मन्त्रोपनिषदो मुण्डकोपनिषदो ब्राह्मणोपनिषदः प्रश्नोपनिषदश्च समानशाखीयतायाम् च शङ्करभगवत्पादानन्दज्ञानादिकेभ्यो[3]ऽवगम्यमानत्वाच्च यावत्संख्याका वेदशाखास्ततोऽपि अधिकसंख्याका उपनिषदः स्युरिति विभाव्यते ।

इदानीं तु उपलभ्यमानासु वेदशाखासु मध्ये ऋग्वेदे शाकलमन्त्रसंहिता, शाङ्खायनमन्त्रसंहिता (कौषीतकिमन्त्रसंहिता), ऐतरेयब्राह्मणा-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- पञ्चम्यां कण्डिकायाम् ।

2- "पुराणगत वेदविषयक सामग्रीका समीक्षात्मक अध्ययन" इति नाम्के ग्रन्थे, पृ 252-257.

3- प्रश्नोपनिषद्व्याख्यानोपक्रमो द्रष्टव्यः ।

ण्यकोपनिषदः, शाङ्खायनब्राह्मणारण्यकोपनिषदश्च, कृष्णयजुर्वेदे आत्रेय-
तैत्तिरीयसंहिताब्राह्मणारण्यकोपनिषदः, काठकसंहितोपनिषदौ, मैत्रायणीय-
संहितारण्यकोपनिषदौ, कपिष्ठलकठसंहिता च; शुक्लयजुर्वेदे च माध्यन्दिनीय-
वाजसनेयिमन्त्रसंहिता-शतपथब्राह्मणे, शतपथान्तर्गता बृहदारण्यकोपनिषच्च,
काण्ववाजसनेयिमन्त्रसंहिता-शतपथब्राह्मणे, शतपथान्तर्गता बृहदारण्यकोप-
निषच्च; सामवेदे च जैमिनीयमन्त्रसंहिता-[गानसंहिता]-ब्राह्मणोपनिषदः,
कौथुममन्त्रसंहिता-[गानसंहिता]-पञ्चविंशादिब्राह्मणछान्दोग्योपनिषदः,
अथर्ववेदे च पैप्पलाद-मन्त्रसंहिता-गोपथब्राह्मणे, शौनकसंहिता चेत्येव वेद-
शाखाः प्राप्यन्ते ।

एवमुपलभ्यमानासु वेदशाखासु -

[क] उपलभ्यमानशाखान्तर्गता उपनिषद एताः -

[1] ऐतरेयोपनिषद् ।

[2] शाङ्खायनारण्यकोपनिषद् [कौषीतकिब्राह्मणोपनिषद्]।

[3] तैत्तिरीयोपनिषद् ।

[4] काठकोपनिषद् ।

[5] मैत्रायणीयारण्यकोपनिषद् ।

[6] माध्यन्दिनीयेशावास्योपनिषद् ।

[7] माध्यन्दिनीयक बृहदारण्यकोपनिषद् ।

[8] काण्वेशावास्योपनिषद् ।

[9] काण्वबृहदारण्यकोपनिषद् ।

[10] केनोपनिषद् ।

[11] छान्दोग्योपनिषद् ।

[ग] अन्याश्च स्पष्टविज्ञायमानशाखाविशेषसम्बन्धाः प्रतिष्ठितमीमांसा- कुमारप्रभाकरैः परिगृहीता द्वावुपनिषदावेताः -

[1] बाष्कलमन्त्रोपनिषद् [ऋग्वेदबाष्कलशाखायाः]

[2] महानारायणोपनिषद् - यद्यपि तैत्तिरीयारण्यके महानारायणो- पनिषदस्ति, तथापि सा कर्मोपासना-ब्रह्म-काण्डेषु त्रिष्वपि यद् वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णत्वात् खिलकाण्डपरि- शिष्टत्वेनाम्नातेत्यभिप्रैति: तद्विदो आचार्यसायणेन "तदीयपाठभेदास्तु द्राविडेषु क्वचिद उपलभ्यते, तत्र यद्यपि शाखाभेदः कारणं तथापि तैत्तिरीयशाखाध्यापकैस्तत्तद्देशवासिभिः शिष्टैरादृतत्वात् सर्वोऽपि

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- जैमिनीयोपनिषद्ब्राह्मणे चतुर्थेऽध्याये दशमोऽनुवाकः केनोपनिषदस्ति । शङ्कराचार्येण च केनोपनिषद्भाष्यारम्भे "केनेषितमित्याद्योपनिषत् परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः" इत्युक्तम् । तत्र ग्रन्थान्ते "इति सामवेदीय तलवकारशाखोक्ता केनोपनिषद्" इति पो- स्तकः प्राप्यते । जैमिनीयशाखायां तु सर्वं ब्राह्मणं संस्थापकत्वेऽपि केनोप- निषद् नवमेऽध्यायेऽन्तर्भवति न तु दशमे । न च जैमिनीयोप- निषद्ब्राह्मणे केनोपनिषद् कस्य कस्याध्यायस्य प्रारम्भेऽस्ति । जैमिनीय- शाखायाः केनोपनिषद् तु जैमिनीयोपनिषद्ब्राह्मणस्य चतुर्थाध्यायस्य दशसु अनुवाकेषु दशमानुवाकात्मिकास्ति । तस्माज्जैमिनीयशाखातलव- कारशाखाभिन्नेति विज्ञायते । दृश्यते हि ग्रन्थान्तराणां प्रायेण शाखाभेदेऽपि अध्यायादिविभागभेदः शाखासु, यथा माध्यन्दिनबृहदारण्यके काण्वबृहदा- रण्यके च ।

(5) अद्वयतारकोपनिषद् - अ० शि० व्या०; उ० ब्र० व्या० ।

(6) अद्वैतोपनिषद् ।

(7) अध्यात्मोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या०

(8) अध्यात्मोपनिषद् - (द्वितीया, [illegible]काण्डान्तर्गता)

(9) अन्नपूर्णोपनिषद् - अ० शि० व्या०,उ० ब्र० व्या० ।

(10) अमृतनादोपनिषद् - श० दी०, ना० दी०, अ० शि० व्या०, उ० ब्र० व्या०।

(11) अमृतबिन्दूपनिषद् - श० दी०; उ० ब्र० व्या० ।

(12) अल्लोपनिषद् - दाक्षिणात्यैरस्वीकृता, उदीच्यैरङ्गीकृता ।

(13) अवधूतोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(14) अवधूतोपनिषद् - द्वितीया ।

(15) अवधूतोपनिषद् - तृतीया ।

(16) अवधूतोपनिषद् - चतुर्थी (वस्तुतः भिक्षुकोपनिषदेव) ।

(17) अव्यक्तोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(18) आचमनोपनिषद् ।

(19) आत्मपूजोपनिषद् ।

(20) आत्मबोधोपनिषद् - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

(21) आत्मोपनिषद् - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

(22) आदित्योपनिषद् - सूर्योपनिषदेव ।

(23) आरुणेयोपनिषद्, आरुणेय्युपनिषद्, आरुण्युपनिषद्, आरुणिकोपनिषद्
वा - श० दी०, ना० दी०, अ० शि० व्या०, च उ० ब्र० व्या० ।

(24) आर्षेयोपनिषद् ।

(25) आश्रमोपनिषद् ।

(26) इतिहासोपनिषद् ।

(27) उत्तरजाबालोपनिषद् (स्कन्दजाबालोपनिषद्)

(28) उत्तरनारायणोपनिषद् - महानारायणोपनिषदन्तर्गतोत्तरानुवाकौ।

(29) ऊर्ध्वपुण्ड्रोपनिषद् ।

(30) ऋग्वेदजाबालोपनिषद् ।

(31) एकाक्षरोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(32) कठरुद्रोपनिषद् - उ० ब्र० व्या० ।

(33) कठश्रुत्युपनिषद् ।

(34) कण्ठश्रुत्युपनिषद् ।

(35) कलिसन्तरणोपनिषद् (नामोपनिषद्) - अ० लि० व्या०, उ० ब्र० व्या० ।

(36) कात्यायनोपनिषद् ।

(37) कामराजकीलितोद्धारोपनिषद् ।

(38) कालाग्निरुद्रोपनिषद् - ना० दी०, अ० लि० व्या०, उ० ब्र० व्या० ।

(39) कालाग्निरुद्रोपनिषद् - द्वितीया (नन्दिकेश्वरपुराणान्तर्गता) ।

(40) कालिकोपनिषद् (आथर्वणसौभाग्यकाण्डे कालिकोपनिषद्)

(41) कालिमेधादीक्षितोपनिषद् ।

(42) कुण्डिकोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(43) कृष्णोपनिषद् - ना० दी०, अ० लि० व्या०, उ० ब्र० व्या० ।

(44) कैवल्योपनिषद् - श० दी०, ना० दी०, अ० लि० व्या०, उ० ब्र० व्या० ।

(45) केनोपनिषद् - भास्कररायभाष्ययुता ।

[46] कौषीतक्युपनिषद् - अ० दी०, उ० ब्र० व्या० ।

[47] क्षुरिकोपनिषद् [प्राणायामोपनिषद्] - ना० दी०, अ० शि० व्या०,
उ० ब्र० का० व्या० ।

[48] क्षिक्षीक्षितोपनिषदुक्तपरिव्राजकोपनिषद् [परिव्राजकोपनिषद्] ।

[49] गणपत्युपनिषद् [गणेशोपनिषद्, विघ्नेश्वरोपनिषद्, गणपत्यथर्वशीर्षम्]
- अ० शि० व्या०, अ० ब्र० व्या० ।

[50] गणेशपूर्वतापिन्युपनिषद् [वरदपूर्वतापिन्युपनिषद्]

[51] गणेशोत्तरतापिन्युपनिषद् [वरदोत्तरतापिन्युपनिषद्]

[52] गरुडोपनिषद् [गारुडोपनिषद्] - उ० ब्र० व्या० ।

[53] गर्भोपनिषद् [पैप्पलादं गर्भशास्त्रम्] - अ० दी०, ना० दी०, अ० -
शि० व्या०, उ० ब्र० व्या० ।

[54] गायत्रीरहस्योपनिषद् ।

[55] गायत्र्युपनिषद् ।

[56] गायत्र्युपनिषद् - द्वितीया ।

[57] गायत्र्युपनिषद् - तृतीया ।

[58] गारुडोपनिषद् [गरुडोपनिषदेव] - ना० दी० ।

[59] गारुडोपनिषद् - द्वितीया - अ० शि० व्या० ।

[60] गुह्यकाल्युपनिषद् - महाकालसंहितान्तर्गता ।

[61] गुह्यषोढान्यासोपनिषद् ।

[62] गोपालपूर्वतापिन्युपनिषद् - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

[63] गोपालोत्तरतापिन्युपनिषद् - अनातक्षुंकृत्युक्ता - ना० दी०,
अ० शि० व्या०, उ० ब्र० व्या० ।

[64] गोपीचन्दनोपनिषद् ।

[65] चक्रोपनिषद् ।

[66] चक्षुरुपनिषद् [चक्षुरोगोपनिषद्, अक्ष्युपनिषद्] ।

[67] चतुर्वेदोपनिषद् ।

[68] चाक्षुषोपनिषद् [अक्ष्युपनिषद्] ।

[69] चित्युपनिषद् [तैत्तिरीयारण्यकचतुर्थप्रपाठकः] ।

[70] चूलिकोपनिषद् [मन्त्रिकोपनिषद्] - ना० दी० ।

[71] छागलेयोपनिषद् ।

[72] जाबाल्युपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[73] तारसारोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[74] तुरीयातीतावधूतोपनिषद् [तुरीयातीतोपनिषद्] - अ० शि० व्या०, उ० ब्र० व्या० ।

[75] तुरीयोपनिषद् [माण्डूक्योपनिषन्मूलं भाति] ।

[76] तुलस्युपनिषद् ।

[77] तेजोबिन्दूपनिषद् - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

[78] त्रिपाद्विभूतिमहानारायणोपनिषद् - उ० ब्र० व्या० ।

[79] त्रिपुरातापिन्युपनिषद् [सुन्दरीतापिन्युपनिषद्, त्रिपुरासुन्दर्युपनिषद्] - उ० ब्र० व्या० ।

[80] त्रिपुरोपनिषद् [त्रिपुरोपनिषद्, त्रिपुरामहोपनिषद्, श्रीविद्योपनिषद्, श्रीऋग्वेदान्तर्गते पूर्वखण्डे कामकलोपनिषद्] - भास्कररायभाष्ययुता, - अ० शि० व्या० उ० ब्र० व्या० ।

[81] त्रिपुर्युपनिषद् [श्री० शंकराचार्यविरचिता] ।

[97] नारायणोपनिषद् [नारायणाथर्वशिरउपनिषद्, विष्णूपनिषद्] -
अ० लि० व्या०, उ० ब्र० व्या० ।

[98] निरालम्बोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

[99] निरुक्तोपनिषद् ।

[100] निर्वाणोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

[101] निर्वाणोपनिषद् - द्वितीया ।

[102] नीलरुद्रोपनिषद् - ना० दी० ।

[103] नृसिंहपूर्वतापिन्युपनिषद् - श० दी०, अ० लि० व्या०, उ० ब्र० व्या० ।

[104] नृसिंहषट्चक्रोपनिषद्[1] ।

[105] नृसिंहोत्तरतापिन्युपनिषद् - श० दी०, अ० लि० व्या०, उ० ब्र० व्या०।

[106] नेत्रोपनिषद् [चक्षुरुपनिषद्] ।

[107] पञ्चब्रह्मोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

[108] परब्रह्मोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

[109] परब्रह्मोपनिषद् - द्वितीया ।

[110] परमतत्त्वरहस्योपनिषद् ।

[111] परमहंसपरिव्राजकोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

[112] परमहंसोपनिषद् - श० दी०, ना० दी०, अ० लि० व्या०, उ० ब्र० व्या०।

[113] परिव्राजकोपनिषद् ।

[114] पारमात्मिकोपनिषद् [कन्याख्या][2] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1.2- अद्यारपुस्तकालयोपनिषद्ग्रन्थसूच्याम् अङ्कितोऽपि अयं ग्रन्थः
"अप्रकाशिता उपनिषदः" इति नामके ग्रन्थे मुद्रितोऽस्ति ।

(115) परायणोपनिषद् ।

(116) पाशुपतब्रह्मोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(117) पिण्डोपनिषद् - ना० दी० ।

(118) पीताम्बरोपनिषद् ।

(119) पैङ्गलोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(120) पैप्पलादोपनिषद् (प्रश्नोपनिषद्) ।

(121) प्रणवोपनिषद् ।

(122) प्रणवोपनिषद् - द्वितीया ।

(123) प्राणाग्निहोत्रोपनिषद् - ना० दी०, अ० शि० व्या०,उ० ब्र० व्या० ।

(124) बटुकोपनिषद्।

(125) बह्वृचोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(126) बाष्कलमन्त्रोपनिषद् - आनन्दतीर्थकृतटीकायुता ।

(127) बिल्वोपनिषद् ।

(128) बृहज्जाबालोपनिषद् ।

(129) ~~बिल्वोपनिषद् ।~~ बृहन्नारायणोपनिषद् (महानारायणोपनिषदेव) ।

(130) ब्रह्मजाबालोपनिषद् - महाराष्ट्रभाषामयी ।

(131) ब्रह्मबिन्दूपनिषद् - शं० दी०, ना० दी०, ~~और~~ अ० शि० व्या० ।

(132) ब्रह्मविद्योपनिषद् (प्रणवोपनिषद्) - ना० दी०, अ० शि० व्या०,
उ० ब्र० व्या० ।

(133) ब्रह्मोपनिषद् - शं० दी०, ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

(134) भस्मजाबालोपनिषद् - शिवानन्दकृतटीकायुता - अ० शि० व्या०,
उ० ब्र० व्या० ।

[135] भस्मजाबालोपनिषद् - द्वितीया [बृहज्जाबालोपनिषद्]

[136] भावनोपनिषद् - भास्कररायभाष्ययुता - अ० शि० व्या०, उ० ब्र० व्या०

[137] भिक्षुकोपनिषद् - उ० ब्र० व्या० ।

[138] मठाम्नायोपनिषद् - शङ्कराचार्यकृता ।

[139] मण्डलब्राह्मणोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[140] मनोविभागोपनिषद् [विभागोपनिषद्] ।

[141] मन्त्रिकोपनिषद् - रामानन्दीयदीपिकालङ्कृता, अ० शि० व्या०,
उ० ब्र० व्या० ।

[142] मन्त्रोपनिषद् [भगवत्सुरामानन्दकृता]

[143] महाक्रायणोपनिषद् [निरुत्तापिन्युपनिषद्]

[144] महावाक्यविवरणोपनिषद् ।

[145] महावाक्योपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[146] महोपनिषद् - श० दी०, ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

[147] मुक्तिकोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[148] मुद्गलोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[149] मृत्युलाङ्गूलोपनिषद् [मृत्युलाङ्गलोपनिषद्] ।

[150] मैत्रेय्युपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[151] मैत्र्युपनिषद् - द्वितीया ।

[152] यज्ञोपवीतोपनिषद् ।

[153] याज्ञवल्क्योपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[154] योगकुण्डल्युपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[155] योगकुण्डल्युपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[156] योगतत्त्वोपनिषद् - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

[157] योगतत्त्वोपनिषद् [द्वितीया] - अ० शि० व्या० ।

[158] योगराजोपनिषद् ।

[159] योगशिखोपनिषद् - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

[160] रहस्योपनिषद् ।

[161] राजश्यामलारहस्योपनिषद्[1] ।

[162] राधोपनिषद्[2] ।

[163] रामपूर्वतापिन्युपनिषद् - ना० दी०, विश्वेश्वरटीकायुता, अ०शि०व्या०

[164] रामरहस्योपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[165] रामोत्तरतापिन्युपनिषद् - ना० दी०, आनन्दवनकृताऽऽनन्दनिधिव्याख्या-टीकायुता - उ० ब्र० व्या० ।

[166] रुद्रहृदयोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[167] रुद्राक्षजाबालोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

[168] रुद्राथर्वशिरः [अथर्वशिरउपनिषद्] ।

[169] रुद्रोपनिषद्।

[170] लघुजाबालोपनिषद् ।

[171] लाङ्गूलोपनिषद् [हनुमत्स्तोत्रात्मिका] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

[1-2- अड्यारपुस्तकालयोपनिषद्ग्रन्थसूच्यामुल्लिखितोऽयं ग्रन्थः "अप्रकाशिता उपनिषदः" इति नामके ग्रन्थे मुद्रितोऽस्ति ।

(172) लिङ्गोपनिषद् ।

(173) वज्रपञ्जरोपनिषद्[1] ।

(174) वज्रसूच्युपनिषद् - शङ्कराचार्यकृतवज्रसूच्युपनिषद् - सुबोधिनीयुता, वज्रसूचीलघुटङ्कयुता, अ० लि० व्या०, उ० ब्र० व्या० ।

(175) वराहोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(176) वराहोपनिषद् (द्वितीया) - ऊर्ध्वपुण्ड्रविषया ।

(177) वनदुर्गोपनिषद्।

(178) वासुदेवोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(179) विद्योपनिषद् (विद्यान्तोपनिषद्, वेदान्तविद्यान्तोपनिषद्)

(180) वृद्धजाबालोपनिषद् ।

(181) शरभोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(182) शाट्यायनीयोपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(183) शाण्डिल्योपनिषद् - अ० लि० व्या०, उ० ब्र० व्या० ।

(184) शारीरकोपनिषद् - अ० लि० व्या० उ० ब्र० व्या० ।

(185) शिवसङ्कल्पोपनिषद् ।

(186) शिवसङ्कल्पोपनिषद् (द्वितीया)[2] ।

(187) शिवाथर्वशीर्षम् (अथर्वशिरउपनिषद्) ।

(188) शिवोपनिषद् (शिवागमसङ्ग्रहः)

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1•2- अड्यारपुस्तकालयोपनिषद्ग्रन्थसूच्याम् नोक्तोऽप्ययं ग्रन्थः "अप्रकाशिता उपनिषदः" इति नाम्नि ग्रन्थे मुद्रितोऽस्ति ।

[189] शिवोपनिषद् - द्वितीया [अथर्वशिर उपनिषद्]

[190] शिवोपनिषत्स्तोत्रम् - श्रीशिवेन विरचितम् ।

[191] शुकरहस्योपनिषद् - अ० लि० व्या०,उ० ब्र० व्या० ।

[192] शौनकोपनिषद् ।

[193] श्यामोपनिषद् ।

[194] श्रीकृष्णपुरुषोत्तमसिद्धान्तोपनिषद् ।

[195] श्रीचक्रोपनिषद्[1] ।

[196] श्रीजाबालदर्शनोपनिषद् [दर्शनोपनिषद्] ।

[197] श्रीबालात्रिपुरसुन्दर्युपनिषद् ।

[198] श्रीविद्यातारकोपनिषद् ।

[199] श्रीविद्याम्नायोपनिषद् ।

[200] श्वेतमृत्तिकोपनिषद् [अथर्वशिरसि प्रोक्ता श्रीमाध्योपयुक्तोप-
निषदि श्वेतमृत्तिकोपनिषद्] ।

[201] षोढोपनिषद् ।

[202] संहितोपनिषद् ।

[203] सङ्कर्षोपनिषद्[2] ।

[204] सदानन्दोपनिषद् ।

[205] सन्न्यासोपनिषद् - ना० दी० ।

---

1·2- अद्यारपुस्तकालयोपनिषद्ग्रन्थसूच्यामुल्लिखितौ एतौ ग्रन्थौ "अप्रकाशिता उपनिषदः" इति नामके ग्रन्थे मुद्रितौ स्तः ।

(206) सन्न्यासोपनिषद् (द्वितीया) - अ० शि० व्या०, उ० ब्र० व्या० ।

(207) सरस्वतीरहस्योपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(208) सर्वसारोपनिषद् (सर्वोपनिषद्, शङ्कराचार्यकृत सर्वोपनिषत्सारश्च) - ना० दी०, अ० शि० व्या०, उ० ब्र० व्या० ।

(209) सामरहस्योपनिषद् (सामरहस्य[1] ?)

(210) सावित्र्युपनिषद् - उ० ब्र० व्या० ।

(211) सिद्धान्तशिखोपनिषद् ।

(212) सिद्धान्तसारोपनिषद् ।

(213) सीतोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

(214) सुदर्शनोपनिषद्[2] ।

(215) सुबालोपनिषद् - सुदर्शनाचार्यविवरणयुता, अ० शि० व्या०, उ० ब्र० व्या० ।

(216) सुमुख्युपनिषद् ।

(217) सुवर्णघर्मोपनिषद् (तैत्तिरीयारण्यकतृतीयप्रपाठकः) ।

(218) सूर्यतापिन्युपनिषद्[3] ।

(219) सूर्योपनिषद् (सूर्याथर्वशिरः, सूर्याथर्वाङ्गिरसम्, आदित्योपनिषद्) - अ० शि० व्या०, उ० ब्र० व्या० ।

(220) सौभाग्यलक्ष्म्युपनिषद् - लघ्वाख्या, उ० ब्र० व्या० ।

(221) स्कन्दोपनिषद् - अ० शि० व्या०, उ० ब्र० व्या० ।

---

1·2·3- अड्यारपुस्तकालयोपनिषद्ग्रन्थसूच्यामुल्लिखितोऽयं ग्रन्थः "अप्रकाशिता उपनिषदः" इति नाम्के ग्रन्थे मुद्रितः प्रकाशितश्चास्ति ।

अथ वैदिकयज्ञानां हविर्याग-सोमयागानाम् इष्टिपशु-सोमात्मकानां नित्यतया विधीयमानानां क्रमेण प्रतिपादनं क्रियते, नित्यानां वैदिकयज्ञानामेव मुख्यताऽस्मान्-सम्बद्धतया: प्रतीयमानत्वात्[1] ।

नित्यतया विहिता वैदिकयज्ञाश्च अग्न्याधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणं, चातुर्मास्यानि, निरूढपशुबन्धः, अग्निष्टोमश्चेति कात्यायनश्रौतसूत्र-वशिष्ठधर्मसूत्र-गौतमधर्मसूत्रादिवचनानां विचारणाद् विज्ञायते[2] ।

---

1- "नित्यकर्मभिः श्रेयः स्वर्कीर्तिः स्वर्गश्च" - इति वैखानसश्रौतसूत्रे 20/1; बौ० ध० सू० 2/2/4/23.

2- यद्यपि सत्याषाढश्रौतसूत्रे "तेषामग्निहोत्रं दर्शपूर्णमासौ च नियतौ. सोमेज्या ब्राह्मणस्य" इति प्रोक्तम् [3/1]. वैखानसश्रौतसूत्रे च "अध्ययनमग्न्याधेयं तदर्थं सदाग्निहोत्रं दर्शपूर्णमासावग्निष्टोमः पुत्र इति" [20/1] इति नित्यानि कर्माणि उक्तानि; अग्निहोत्रादिभिन्नाश्च स्वतन्त्रे आग्रयणे अपि न भक्ताः [का० श्रौ० सू० 4/6/12-13; स० श्रौ० सू० 3/8/23; वै० श्रौ० सू० 8/2];

"नानिष्ट्वा नवसस्येष्ट्या पशुना चाग्निमान् द्विजः ।
नवान्नमद्यात् मांसं वा दीर्घमायुर् जिजीविषुः ॥
नवेनानर्चिता ह्यस्य पशुहव्येन चाग्नयः ।
प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्धिनः ॥"

इति मनुस्मृतिवचनात् [4/27-28] अवश्यमावर्जिते निरूढपशुबन्धश्च

. . . . आग्रयणेऽपि

तथा हि कात्यायनश्रौतसूत्रे- "फलयुक्तानामारम्भे यथाकामी फलार्थित्वात्, न नियम-निमित्ता-ऽग्निहोत्र-दर्शपूर्णमास-दाक्षायणा-ऽऽग्रयण-पशुषु प्रवृत्तेः, सोमे चैके, चातुर्मास्येषु चर्तुश्रुतेः, नियतकालपाठात्, दर्शनाच्च, नोत्कर्षयोगात्, स्यात् त्रिंशद्[1]" इति ।

वसिष्ठधर्मसूत्रे च - "अथापि च ब्राह्मणोऽग्नीनादधीत, दर्शपूर्णमासा-ऽऽग्रयणेष्टि-चातुर्मास्य-पशु-सोमैश्च यजेत, नैयमिकं ह्येतदृणसंस्तुतं च, विज्ञायते हि त्रिभिरृणैर्ऋणवान् ब्राह्मणो जायत इति यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इति, एष वा अनृणो यज्वा यः पुत्री ब्रह्मचर्यवानिति[2]" इति ।

बोधायनधर्मसूत्रेऽपि - "अग्न्याधेयप्रभृत्यथेमान्यजस्राणि भवन्ति यथैतदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणमुदगयनदक्षिणायनयोः पशुचातुर्मा-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

चाऽनारम्भकत्वं प्रतीयते, "उपक्रमादितरे नियम्येरन्" इति सत्याषाढः सूत्रयतीति [3/1]। अथवा चातुर्मास्यानामनारम्भः प्रतीयत इति चाऽऽहिताग्नेरग्निहोत्रं दर्शपूर्णमासौ चैव नित्यतया विहितत्वेन प्रतीयेते; मनुस्मृतावपि शिलोञ्छवृत्तेरग्निहोत्रपरायणस्य गृहस्थस्य तु पार्वायणान्तीयेष्टिमात्रनिर्वापो-ऽनुज्ञातो दृश्यते [4/10]; तथापि कात्यायनश्रौतसूत्रवसिष्ठधर्मसूत्रबोधायनधर्म-सूत्रादिमहाग्रन्थसंवादाद्, धर्ममीमांसासूत्रे [6/2/31] च "ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगाद्" इति दर्शनाच्चैते नित्यतया विहिता वैदिकयागा इत्याभिधीयते ।

1- 1/2/10-17. 2- 1/41-43.

यानि चतुर्भि वै षड्होता वसन्ते ज्योतिष्टोम इत्येवं प्रेम्णायतम्[1]" इति ।

पुरुषार्थत्वेनोपलक्षितत्वात् नित्यतया प्रतिपादितत्वेनाङ्गी-गम्यमानाः "अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, निरूढपशुबन्धः, सौत्रामणी, दर्विहोमाः (पिण्डपितृयज्ञादयः) (इति सप्त हविःसंस्थाः), अग्निष्टोमः, अत्यग्निष्टोमः, उक्थः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामः (इति सप्त सोमसंस्थाः)[2]" इत्येते वैदिकयज्ञा गौतमधर्मसूत्रे प्रोक्ताः ।

मनुस्मृतौ च -

"अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ।
दर्शेन चार्धमासान्ते पौर्णमासेन चैव हि ॥
सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः ।
पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः[3] ॥" इति

याज्ञवल्क्यस्मृतौ च -

"त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद् द्विजः ।
प्राक्सौमिकीः क्रियाः कुर्याद् यस्यान्नं वार्षिकं भवेत्[4] ॥

---

1- 2/2/4/23.

2- 1/8/18.

3- 4/25-26.

4- मनुस्मृतावपि -

"यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥
अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि न तस्याप्नोति तत्फलम् ॥"



इति (11/7-8)

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः[1] ।
हीनकल्पं न कुर्वीत सति द्रव्येऽफलप्रदम्[2] ॥" इति

शङ्खश्च -

"त्रैवार्षिकाधिकान्नस्तु पिबेत् सोममकल्मषः ।
इष्टिं वैश्वानरीं कुर्यात् तथाऽल्पधनो द्विजः[3] ॥" इति

मुण्डकोपनिषदि च -

"यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति[4] ॥"
इति

एवं च सति कात्यायनश्रौतसूत्रे नित्यत्वोक्तानामेव वैदिकयागानां विकल्पतया संक्षिप्तानि स्वरूपाणि प्रदर्श्यन्ते तेषामेव प्रसिद्धत्वात् ।

सोमयागविकल्पानां पुरुषमेध-सर्वमेध-अश्वमेधानां सोमयागा-ङ्गभूतस्याग्निचयनस्य च विकल्पतोऽप्यस्मादन्यतायाः प्रतीयमानत्वात्

---

1- मनुस्मृतौ च -
"इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ॥" इति [11/27]
2- 1/124-126.
3- कात्यायनश्रौतसूत्रदेवयाज्ञिकभाष्ये 1/2/12; शङ्खस्मृतौ 5/16-17.
4- 1/2/3.

तेषामपि समुल्लेखोऽत्र प्रबन्धे करिष्यते । अन्येषां वैदिकयागानां तु प्रासङ्गिक-त्वेन तत्रैवानुक्रमणिकायां परमसंक्षेपेणोल्लेखो विधास्यते ।

तत्रापि अग्निहोत्रस्य, पूर्णमासेष्टेः, अग्निष्टोमस्य च सोमस्य वैदिकयागानां स्वरूपस्य परिचयस्य परमोपयोगित्वात् तेषां किञ्चिदपि विस्तरेण परिचयः उपस्थापयिष्यतेऽन्येषां तु संक्षेपेणैव ।

<u>**अग्न्याधानाधिकारः**</u>

श्रौताग्न्याधानं यद्यपि न स्वतन्त्रो यागस्तथापि सर्वश्रौतयोग-शेषत्वात् प्राथमिकत्वाच्चात्र प्रथमं तदेव वर्ण्यते ।

अग्न्याधानं च गार्हपत्य-आहवनीय-अन्वाहार्यपचन-नामाग्नीनां सम्पादनाय तत्तद्देशे यथाविधि अग्नीनां स्थापनमेव ।

तत्र "ब्राह्मणस्य वसन्तः क्षत्र॰ ग्रीष्मो विशां वर्षाः । तस्माद् ब्राह्मणो वसन्त आदधीत ब्राह्मणं हि वसन्तः । तस्मात्क्षत्रियो ग्रीष्म आदधीत क्षत्रं हि ग्रीष्मः । तस्माद् वैश्यो वर्षास्वादधीत विड्ढि वर्षाः[2]" इत्यादिकाद् वचनजाताद् ब्राह्मण-क्षत्रिय-वैश्यानामाधाने-

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- "सा च यज्ञक्रियैकवेदिकीत्याख्या । तत्र प्रकृतिरग्निहोत्रं दर्शपूर्णमासावग्निष्टोम इति । अन्या विकृतयः" इति आधान-पद्धतिभूमिकायां याज्ञिकेन केनापि विवृतम् । "पौर्णमासेनेष्टि-पशुसोमा उपदिष्टाः" इति आश्वलायनः [2/1/1]

2- मा० श० प० ब्रा० - 2/1/3/5.

ऽधिकारः । शूद्रस्यापि रथकारस्याऽऽधानेऽधिकारोऽस्ति, विशेषवचनात्-स्यादि[1] । ब्राह्मणादीनामपि शरीरकाङ्गल्यवतां संकुलानाम्[2] अपि तेषां शौण्ड्याणां[3] कुण्डाराणां[4] अन्यतमेऽपि[5] आधानेऽधिकारो विद्यते ।

तत्र प्राचीनानां वैदिकप्रजानामिदं प्रथा विद्यते यत् प्रायः सर्वेऽपि द्विजकुमारा आचार्यकुलाय वेदानधीयते स्म[6] ।

किन्तु छान्दोग्योपनिषदो वचनात् केचन कुलेषु जाता केचन द्विजा वेदानधीत्य ब्रह्मबन्धव एव भवन्ति स्मेति च विज्ञायते[7] । तत्र एव-शब्दस्य प्रयोगात् केचन तु आचार्यकुलायाऽऽचार्याद् गायत्र्युपदेशं लब्ध्वा

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० - 1/1/8, आ०श्रौ०सू० - 6/1/44.

2- आ०श्रौ०सू० - 6/1/33-35, बौ०श्रौ०सू० - 1/1/5.

3- "अङ्गहीनाऽश्रोत्रियषण्ढशूद्रवर्जम्" - इति का० श्रौ० सू० 1/1/5;
"विद्यावत्त्वाद्यभावान्नाधिकारः शाकल्यादि" - इति शाबरभाष्ये 6/8/12;
"न ह्यविद्वान् विहितोऽस्ति" - इति च आ० श्रौ० सू० 3/8/18.

4- "क्षौमे वसानौ जायापती अग्निमादधीयाताम्" - इति आप०श्रौ०सू० 5/4/10;
"आधाने च भार्यासंयुक्तम्" - इति आ० श्रौ० सू० 6/8/13.

5- "तेषामेव ब्राह्मणादीनां यथा येषु अकाङ्गल्यमविकृतिकं द्रव्यवत्ता शरीरकाङ्गल्यं च" - इति सा० श्रौ० सू० 3/1.

6- पा० गृ० सू० - 2/2/1-4, 2/5/36-43, 2/6/1-8;
आ० ध० सू० - 1/1/1/19-1/1/2/10.

7- "श्वेतकेतुर्हारुणेय आस । तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्, न वै सोम्यास्मत् कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति" - इति छा० 6/1/1.

निरग्निं गायत्रीमात्रं कृत्वैवाऽपि समावर्तन्ते स्मेति प्रतीयते । आश्वलायनोपनिषद्-व्याख्ये ग्रन्थे "य उपनयनादूर्ध्वं निरग्निकारकब्रह्मचारी गायत्रीमन्त्रे स गायत्रः"[1] इति वचनं प्राप्यते । कात्यायनस्मृतावप्ययमर्थः प्रतिपादितोऽस्तीति तद्-वचनोदाहरणपूर्वकं माधवेनाऽपि पराशरस्मृतिव्याख्यानेऽयमर्थः प्रतिपादितोऽस्ति[2] । "अष्टवर्षीस्त्रया गृहेऽपि उपनेता भवन्ति"[3] इति माध्यन्दिनीयशतपथश्रुतिलिङ्गा-देवायमर्थोऽवगम्यते । "उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः"[4] इति प्रतिपादयद् बौधायनसूत्रवचनमपि एतदनुमन्यत एव । पराशरस्मृतौ च -

"तस्माद् वृत्तावार्थस्य शुद्धीतेन ब्राह्मणेन विपश्चितः ।
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते[5] ॥"

इति वचनमुपलभ्यते । अत्रिस्मृतावपि -

"अनधीत्यैव वेदोऽपि तत्क्रियामन्त्रमात्रतः ।
कृत्वा कर्माणि नित्यानि ज्योतिष्टोममुखानि वै ॥
ब्राह्मणो ब्रह्मसायुज्यं लभते नात्र संशयः[6] ।" इति;

"क्वौ तु केवलं तिष्ठेद् गायत्रीकर्ममात्रतः ।
तदेकदेशतयापि क्रियानुकरणादपि ॥

---

1- उपनिषत्संग्रहे - पृ० 651.
2- द्वितीयाध्यायव्याख्याने ।
3- 13/4/3/3.
4- 1/11.
5- 12/32.
6- श्लो० 431-432.

ब्राह्मण्यं तस्य पूज्यं स्यान्न विचार्यं प्रयत्नतः ।
न निषेध्यं विशेषेण गोपनीयतमं भवेत्[1] ॥"

इति च वचनं प्राप्यते ।

एवं च प्राचीने कालेऽपि निर्धनकुटुम्बे जाता अलब्धसदाचार्या-नुशिष्टयो मन्दा व्यङ्गा विकलाङ्गा वाऽपि द्विजकुमारा गायत्रीग्रह-णमात्रेणापि सनाथीकृताः स्म । एतादृशा गायत्रीग्रहणमात्रं कृत्वा समावृत्ता गार्ह-स्थ्यं प्रपन्ना आश्रमान्तरालस्था वाऽपि पुरुषा नूनं वार्तावृत्तयो[2] भवन्ति स्म । न केवाऽमी श्रौताग्न्याधानादिकं कर्तुं पारयन्ति स्म[3] ।

ये तु निर्धनकुटुम्बे जाता अपि लब्धसदाचार्याः कुशिक्षिता वा मेधाविनो वा द्विजकुमारास्ते तु वेदाङ्गं वेदं स्वशाखीयं वेदं वा सम्पूर्णतया-

---

1- श्लो० 268-270.

2- (क) "गृहस्था अपि चतुर्विधा भवन्ति वार्तावृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति । तत्र वार्तावृत्तयः कृषिगोरक्ष-वाणिज्यमगर्हितमुपयुञ्जानाः" इति आश्रमोपनिषदि पराशरस्मृति-द्वितीयाध्यायान्तव्याख्यास्थ-माधवधृतकात्यायनस्मृतौ च, "वार्तावृत्तिः कृषिगोरक्षवाणिज्योपजीवी" इति वैखानसधर्मसूत्रे 1/5.

(ख) "षट्कर्मको भवत्येषाम्" - इति मनुस्मृतावपि (4/9) वार्तावृत्ति-गृहस्थ उक्तः ।

3- शालीनवृत्तीनां गृहस्थानामेव अग्न्याधान-दर्शपूर्णमासयाग-चातुर्मास्य याग-पशुबन्धयाग-सोमयागान् विशेषेण प्रतिपादयद् वैखानसधर्मसूत्रं (1/5) वार्तावृत्तीनां गृहस्थानां श्रौताग्न्याधानाद्यभावमनुमापयति ।

ऽधीयते स्म । ततो विद्यां व्रतं च सम्पूर्य समावर्तन्ते स्म । केचन तु पुनर्वेद-ग्रहणलब्धाः समाप्तवेदाः प्राक्तनमार्जितभावा अपि दारिद्र्यादिदुःखव्याधि-दर्शनादिसंजातवैराग्याः सन्तः स्नाता अपि गुरुकुलादावृत्य गुरुणानुज्ञाता नैष्ठिकब्रह्मचर्यं[1] वन्याश्रमान्दाराश्रमानुकरणाः अतितीव्रवैराग्यात्[2] ब्राह्मणास्तु[3] अनु प्रव्रज्यां वाऽपि प्रपद्यन्ते स्म । वैराग्याभावे तु निर्धनाः स्नातका धनागमे गार्हस्थ्यं कांक्षमाणाः स्नातकधर्मांस्तु[4] पालयन्तः स्वाध्याय-मधीयाना धनागममुदीक्षमाणाः स्वधर्मनिष्ठा आश्रमान्तरालस्थाः कन्यालाभाय स्पृहयन्ति स्म[5] । विधुरादीनां दुःखादि-सम्बद्ध-रहितानां चाऽन्यतमाश्रम-प्रतिपत्तिरहितानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति किं वा नास्ति?[6]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- गौ० ध० सू० - 1/3/1-8; व० ध० सू० - 7/1-17;
आ० ध० सू० - 2/9/1-6; महाभारते - 12/234/4, 12/321/25.

2- "स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति जाबालोपनिषदि चतुर्थे खण्डे।

3- "ब्राह्मणस्याश्रमाश्चत्वारः क्षत्रियस्याद्यास्त्रयो वैश्यस्य द्वावेव । तदाश्रमाश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति" - इति वैखानसधर्मसूत्रे 1/1.

4- स्नातकधर्माश्च गृहस्थसाधारणा गौतमधर्मसूत्रे प्रोक्ताः 1/9/2-74; बौ० ध० सू० - 1/3.

5- "अनाप्ते कन्यायाः स्नातकव्रतं चरेदपि वा क्षत्रियायां पुत्रमुत्पादयेत शूद्रायां वेत्येके" - इति पैठीनसिवचनं पराशरमाधवीये प्रथमे भागे पृ० 494.

6- ब्र० मी० सू० भा० - 3/4/36.

स्वाध्याय तत्साध्यानि नित्यानि नैमित्तिकानि यथाकामं काम्यानि च कर्माणि कुर्वाणा गार्हस्थ्यं निर्वहन्ति स्म ।

उपर्युक्तार्थसमर्थनसमर्थाऽध्ययनाधानादिपर्याः स्वाध्यायाभावादि-निमित्ताऽनध्ययनाऽनाधानादिव्यवस्था चापि निर्दिष्टा वसिष्ठादिभिः प्रतीयते। तथा हि -

[क] "कामिनोऽस्पृश्यानुत्तमग्न्याधेयाय नाऽनाहिताग्निः
स्यात् । अन्नं च सोमपानाय नाऽसोमयाजी स्यात् ।
युक्तः स्वाध्याये प्रजनने यज्ञे च ।"
– इति वसिष्ठधर्मसूत्रे[1] ।

[ख] "यः शक्नोति यष्टुं तस्य यजेतेति वाचको भवति ।
यो न कथंचिदपि शक्नोति यागमभिनिर्वर्तयितुं तं
नाधिकरोति यजेतेति शब्दः । यस्तु केनचित्
प्रकारेण शक्नोति न तं वर्जयित्वा प्रवर्तते ।"
– इति शाबरभाष्ये[2] ।

[ग] "ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ।
दममेव महाराज धर्ममाहुः पुरातनम् ॥

स्वाध्यायाभ्यसनं चैव तत्र कर्म समाप्यते ।
तं चेद् वित्तमुपागच्छेद् वर्तमानं स्वकर्मणि ॥

अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ।
कुर्वीतापत्यसन्तानमथो[3] दद्याद् यजेत च ॥

---

1- 8/9-11.  2- शा० भा० सू० – 6/1/40.

3- "तदस्माऽप्येतत्पूजामेव परीक्षमाणास्ते । यस्तु हि पूजा भवत्यमुं
. . . . अग्निमुखेऽपि

।ग। "द्रव्यादानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च शूद्रात् ।
अन्यत्रापि शूद्राद् बहुपशोर्हीनकर्मणः ।
शतगोरनाहिताग्नेः ।
सहस्रगोरसोमपात् ।
सप्तमीं चाभुक्त्वानिचयाय ।
अप्यहीनकर्मभ्यः ।"

— इति गौतमस्मृतौ[1] ।

।घ। "अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः ॥
असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः ।
अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात् ॥"

— इति कौटलीयेऽर्थशास्त्रे[2] ।

।ङ। "न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः"

इति छान्दोग्योपनिषद्वाक्यव्याख्याने "न अनाहिताग्निः शतगुः" इति शङ्करभगवत्पादोऽपि पूरयति स्म[3] ।

।च। "यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥
अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि न तस्याप्नोति तत् फलम् ॥"

— इति मनुस्मृतौ[4] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 2/9/24-29.　　2- 3/16/143-144.
3- 5/11/5.　　4- 11/7-8.

तस्मात् त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं च धर्मार्थमनित्यं जीवनं यतः ॥"

- इति भविष्यपुराणवचनं गृहस्थरत्नाकरे[1] ।

[ख] "धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ॥"

- इति भागवते[2] ।

[ग] "अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥"

- इति च भागवते[3] ।

[घ] "देवानृषीन् नृभूतानि पितॄनात्मानमन्वहम् ।
स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् ॥
यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसम्पदः ।
वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥"

- इति च भागवते[4] ।

[ङ] "यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ।
धनेनापीडयन् भृत्यान् न्यायेनैवाहरेत् क्रतुन् ॥"

- इति च भागवते[5] ।

[च] "नाहि सम्पादकाभावात् योऽग्नीन् नाधातुमर्हति ।
यजेत् वा न यजेत् स याति नरकान् बहून् ॥

---

1- पृ० 475.　　2- 8/19/37.
3- 10/84/37.　　4- 7/14/15-16.
5- 11/17/51.　　6- पूर्वोद्धृतवाक्ये

तस्मात् सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः ।
आधायाग्नीन् विशुद्धात्मा यजेत परमेश्वरम् ॥"

- इति कूर्मपुराणवचनं पराशरमाधवीये[1]।

[ङ] "पाकसंस्था हविःसंस्थाः सोमसंस्थाश्च संस्थिताः ।
एते यज्ञा मनुष्याणां धर्मार्थौ धनार्जने ॥"

- इति विष्णुपुराणवचनं गृहस्थरत्नाकरे[2]।

[च] "धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥"

- इति व्यासवचनं सुभाषितरत्नभाण्डागारे[3]।

[छ] "वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥"

- इति मनुस्मृतौ[4]।

[ज] "यो वैदिकमनादृत्य कर्म स्मार्तादिकम् ।
मोहात् समाचरेद् विप्रो न स पुण्येन युज्यते ॥
प्रधानं वैदिकं कर्म गुणभूतं तथेतरम् ।
गुणनिष्ठः प्रधानं तु हित्वा गच्छत्यधोगतिम् ॥"

- इति गर्गवचनं पराशरमाधवीये[5]।

---

1- प्रथमेऽध्याये - पृ० 152.

2- पृ० 474.

3- सामान्यप्रकरणे - पृ० 163 श्लो० 4622.

4- 4/14.

5- प्रथमेऽध्याये, आचारकाण्डे - पृ० 292-293.

[क] "पञ्चैव महायज्ञास्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति । अहरहर्भूतेभ्यो बलिं हरेत्तथैतं भूतयज्ञं समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतं मनुष्ययज्ञं समाप्नोत्यहरहः स्वधा कुर्यादोदपात्रात्तथैतं पितृयज्ञं समाप्नोत्यहरहः स्वाहा कुर्यादा काष्ठात्तथैतं देवयज्ञं समाप्नोति ।"

– इति माध्यन्दिनीयशतपथब्राह्मणे[1] ।

[ख] "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद् देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ।"

– इति पारस्करगृह्यसूत्रे[2] ।

[ग] "यस्य नित्यानि लुप्तानि तथैवागन्तुकानि च ।
विप्रस्यापि न स स्वर्गं गच्छेत्तु पतितो हि सः ॥
तस्मात् कन्दैः फलैर्मूलैर्मधुनाप्यथवा वा ।
नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेत् ॥"

– इति बौधायनवचनम्[3] ।

[घ] "अभार्यो योऽगृहीताग्निर्विधुरः स्नातकोऽपि वा ।
व्याहृतिभिः समस्ताभिर्व्यस्ताभिश्च ततः परम् ॥
हुत्वा तु शाकलैर्मन्त्रैः प्राजापत्यं तु तत्परम् ।
स्विष्टकृच्च हुनेदन्ते देवबोधनमीरितः ॥

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 11/5/6/1-2.    2- 2/9/16.

3- काशी महायज्ञविनिर्णयपञ्चिकायाम् पृ 7.

पूर्ववद् वर्णं हरेत् न कुम्भीपाकं व्रजेत् न कुम्भीपाकमनीयात् । तस्मादेवं न कुम्भीपाकी भवति ॥" - इति कालीकुलक्रमोत्थानपरिशिष्टे[1] ।

[प] "अन्नपर्णस्थिताः प्रोक्ताः शीलस्मार्तानुकल्पकाः ।
स्मार्तधर्मदः शीतः स्मार्तस्त्वाश्रमधर्मदः ।
आचारधर्मदश्चानुकल्पकोऽपीदिवौकसाम् ॥"

- इति काण्वपरिशिष्टे[2] ।

[फ] "यत् फलं लोभयोगेन प्राप्नोति धनवान् द्विजः ।
तस्माद् पञ्चमांशमवाप्नोति दरिद्रस्तदयाप्नुयात् ॥"

- इति पुराणवचनं पराशरमाधवीये[3] ।

[ब] "वर्धयित्वा धनं यस्तु तस्माद् ग्रासमपि च ।
न दद्यात् सङ्ग्रहपरो धनिकः स उदाहृतः ॥

पोष्यवर्गकुटुम्बस्य निर्वाहो यावता भवेत् ।
तावदेव तु यस्तु लभते प्रतिवार्षिकम् ।
धनं यस्य तु नास्त्येव मध्यमः स उदाहृतः ॥

धनं पूर्वापरं यस्य नास्ति वृत्तिःपरा ।
अधिकारार्जको यः स्यात् स महाधन उच्यते ॥

सदाचाररतो विप्रो धनार्जनपराङ्मुखः ।
कुटुम्बात्मनिमित्तकः स दरिद्र इति स्मृतः ॥

---

1- वाराणसीस्थसरस्वतीभवनपुस्तकालयस्थवैदिकपुस्तकेषु 4436 प्रतिसंख्यके हस्तलिखितपुस्तके ।

2- तत्रैव पुस्तकेषु 4096 प्रतिसंख्यके हस्तलिखितपुस्तके - 2/36-37.

3- आचारकाण्डे [1/50] - पृ 363.

वाजपेयिक्रतुभिः केचिद् निहतास्त्रिदिवं गताः ।
केचिदुन्मृतैः शिष्टाः स्वर्गमार्गे समाश्रिताः ॥

केचिदध्ययने युक्ता वेदव्रतपराः शुभाः ।
बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः ॥

वाजिनाश्वरे युक्ता निहता नाकेषु जनैः ।
स्वर्गो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः ॥

एवं बहुविधैर्लोके धर्मद्वारैरनावृतैः ।
ममापि मतिराविग्ना मेघलेखेव वायुना ॥"

- इति महाभारते[1] ।

(ख) "अजायं ब्राह्मणोऽग्नीनादधीत, दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्य पशुसोमैश्च यजेत, नैमित्तिकं इष्टिपूर्वकं च । विज्ञायते हि त्रिभिः ऋणैः ऋणवान् ब्राह्मणो जायत इति । यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इति । एष वा अनृणो यज्वा यः पुत्री ब्रह्मचारीवानिति ।"

- इति वशिष्ठधर्मसूत्रे[2] ।

(ग) "सर्वधर्माधिकारी स्यादाहिताग्निर्द्विजो यदि ।
वाक्यात् निर्धनोऽपि यज्ञेषु नित्यं पापभयाद् द्विजः ॥"

- इति प्रजापतिवचनं पराशरमाधवीये[3] ।

(घ) "कृतदारोऽग्निमात्मनीभ्यां कुर्वीत गृहे वसेत् ।
स्वकृतं वित्तमासाद्य वैतानाग्नीन् न हापयेत् ॥

---

1- 12/334/9-16.

2- 11/41-43.

3- आचारकाण्डे - पृ० 152.

स्मार्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु ।
कर्म कुर्यात् प्रतिदिनं विधिवत् प्रतिपर्व च ॥"

— इति वेदव्यासस्मृतौ[1] ।

(ख) "वर्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः ।
इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा ॥"

— इति मनुस्मृतौ[2] ।

(ग) "अथ वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वातिपातयेत् ।"

— इति श्रुतिः शाबरभाष्ये[3] ।

(घ) "यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति"

— इति मुण्डकोपनिषदि[4] ।

(ङ) "तस्मादप्येतर्हि कदा च यज्ञ उपनमेदथाग्नी आदधीत, न श्वः श्वमुपासीत को हि मनुष्यस्य श्वो वेद ।"

— इति माध्यन्दिनशतपथब्राह्मणे[5] ।

उपर्युक्तेषु वचनेषु स्पष्टं पर्यालोचितेषु सत्सु च प्रतिपर्वसम्पादनीय-सोमयागात्मकयागसम्पादके स्वायत्ते धने सति सर्वोऽपि द्विजः अवश्यं श्रौताग्नी-नादधीत; द्विजन्मा तु प्रतिपर्वसम्पादनीयसोमयागात्मकयागसम्पादके धनेऽनु-

---

1- 2/16-17.
2- 4/10.
3- 6/3/3.
4- 1/2/3.
5- 2/1/3/9.

पठितेऽपि तत्र न्यायेनोपागमनमुदितमाना अन्वाधानाग्निहोत्रदर्शपौर्णमासा-दिनागालम्भावसम्पादके सने सत्यपि श्रौताग्नीनादधीरन्निति यत्रथा वेद-विदां सम्मतित्वगम्यते ।

"यस्य नित्यानि लुप्तानि[1]" इत्यादिकं वचनमपि अग्न्याद्या-धानाग्निहोत्रपौर्णमासदर्शयागतोभ्यागादिकर्म निर्वर्तयितुं शक्तं प्रत्येव प्रवर्तते । अथवा एतद् वाक्यं द्रव्यान्तराभावे जलमात्रमात्रस्य दानेनापि काष्ठकण्डमात्रस्य स्वनेनापि गृहस्थमात्रावश्यं निर्वर्तनीयान् पञ्चमहायज्ञानेव नित्यानीत्युक्त्वा विधिकरोतीति निश्चीयते। बोधायनगृह्यपरिभाषासूत्र एव च "आप्युदाहरि-

"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ।।" इति

औपासनो वा नित्यो कार्यः इति न दुर्ब्राह्मणो भवति[2]" इति वाक्यस्य श्रौता-ग्न्याधानाभावेऽपि दोषाभावस्य प्रतिपादितत्वात् ।

यच्च "त्रैवार्षिकाधिकान्नो यः[3]" इत्यादीनि वाक्यानि विश्वरूप-मेधातिथि-विज्ञानेश्वर-कुल्लूकभट्ट-मिकाण्डकण्ठनापराकभास्करमिश्रप्रभृतिभिः काम्यसोमयागविषयतया नीतानि च तदपरोक्षेयु। तत्प्रकरण एवं मनुस्मृतौ -

"इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ।।

---

1- बाम्नाति महायानाग्निहोत्रविन्दुकायाम् - पृ० 7.
2- 1/10/5-6.
3- याज्ञवल्क्य० - 1/125-126; मनु० - 11/7-8.

ऽनवबोधात्, देवयाज्ञिकभाष्ये धृतेन -

"वैवाहिकाधिकाग्निस्तु पिबेत् सोममनिन्दितः ।
इष्टिं वैतानिकीं कुर्यात् सोमवान्यजनो द्विजः[1] ॥"

इति स्मृ•वचनेन स्फुटं वैवाहिकाधिकाग्न्यनुकूलोमथानियाया वन्धनत्वेनैवा-नेष्टेर्विधानात्, विष्णुधर्मसूत्रे च -

"गृहाश्रमी वैवाहिकाग्नौ पाकयज्ञान् कुर्यात् ।
सायम्प्रातश्चाग्निहोत्रं देवताभ्यो जुहुयात् ।
चन्द्रार्कसन्निकर्षविप्रकर्षयोर्दर्श-पूर्णमासाभ्यां यजेत ।
प्रत्ययनं पशुना ।
शरद्-ग्रीष्मयोराग्रायणेन ।
व्रीहि-यवयोर्वा पाके ।
वैवाहिकाग्न्यधिकाग्न्यः प्रत्यब्दं सोमेन ।
वित्ताभावे इष्ट्या वैश्वानर्या[2] ।"

इति स्फुटं नित्यप्रकरणे स्फुटतया वैवाहिकाग्न्यधिकाग्न्योरेव प्रत्यब्दं तेन नियतस्य सोमस्यानुविधानाच्च ।

"आदध्याग्निं निर्धनोऽपि धर्मार्थी[3]" इत्यत्र निर्धनशब्दोऽपि सर्वाङ्ग-सम्पूर्णाग्न्याधानादिनित्यकर्मसम्पादनार्थधनरहितार्थको यथाकथञ्चिदग्न्या-धानादिनित्यकर्माभिनिर्वर्तनाक्षमार्थ एवेति विज्ञायते, तथा निर्धनत्वेन गृहेन-पत्नीपरिवारादिरहितत्वेऽग्न्याधानाग्निहोत्रादिसम्पादनासम्भवात् आधानाना-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- कात्यायनश्रौतसूत्रभाष्ये - 1/2/12, स्मृ•चन्द्रिका - 5/16-17•
2- एकोनषष्टितमेऽध्याये ।
3- पराशरमाधवीये आचारकाण्डे प्रजापतिवचनम् - पृ० 151•

मन्त्रकाण्डाध्ययनादिव निर्धनत्वादिना तत्तत्क्रतुकर्मादेरशक्तानां द्विजानां तत्तत्क्रतुकाण्डाध्ययनादेव तत्तत्क्रतुगमनादेव च तत्तत्क्रतुफलसिद्धेः कृतत्वाच्च[1] ।

एवं च सति यद्यपि -

"चूर्णोऽपि कुलीने मैत्रीदृष्ट्या क्रियादिकम् ।
कठालाद् प्रतिगृह्यापि यजेतान्यत्र कर्मभिः[2] ॥"

इति त्रिकाण्डमण्डनापरनामधेयेनाऽऽपस्तम्बसूत्रध्वनितार्थकारिकाकारेण भास्कर-मिश्रेण तन्मध्येऽनुज्ञातमिदं तदपि सति धने नित्यानामन्यापत्कालाया बोधन एव तत्परं विशिष्टयोजनार्थमिवादरम्भेति मन्तव्यम्, कृतापत्कार्यस्य तु -

"न यज्ञार्थं धनं शूद्राद् विप्रो भिक्षेत कर्हिचित् ।
यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते[3] ॥"

"ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥

तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम् ।
पदा मस्तकमाक्रम्य दाता दुर्गाणि सन्तरेत्[4] ॥"

इत्यादिभिर्वचनैः[5] सर्वथा विरुद्धत्वात्; एतद्विषये शास्त्रमर्यादाः -

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०श०प०ब्रा० - 11/5/7/3; याज्ञवल्क्यस्मृतौ, आचाराध्याये - श्लो०47; तै०ब्रा० - 3/8/18/6, 3/11/8/6; पा० व्या०भाष्ये, प्रथमाह्निके ।
2- त्रिकाण्डमण्डने - 1/109/110.
3- मनु० - 11/24.
4- मनुस्मृतौ - 11/42-43.
5- (क) "चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात्" इति याज्ञ० 1/127.

• • • •अग्निमुखेऽपि

"ये शूद्रादपि शूद्रार्थेनाधानं तु निषिध्यते ।
प्रवृत्तकर्मणो नित्यकर्मार्थे न निषिध्यते[1] ।।"

इति व्यवस्थाया रेणुदीक्षितेन प्रदर्शितत्वाच्च ।

रेणुदीक्षितोक्तव्यवस्थायाः शास्त्रसम्मतत्वं च गौतमधर्मसूत्रे[2], मनुस्मृतौ[3], महाभारते[4], किमण्डकडन एव चापि[5] उपक्रान्तव्याख्यानाविरोधेन

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

[ख] "शूद्रान्नं यागे परिहरेत्" - इति विष्णुधर्मसूत्रे एकान्नषष्टितमेऽध्याये ।
[ग] "न भिक्षेत धनं शूद्रात्" - इति याज्ञ•स्मृतौ 5/17.
[घ] "नरकात्मा धनं जाया शूद्रं यस्य कुटुम्बम् ।
तस्याग्निहोत्रं स्मार्थं नरकायैतत् स्मृतम् ।।"
- इति मातृदत्ताचार्यधृता श्रुतिः [सत्याषाढश्रौतसूत्रव्याख्याने 7/7]

1- कात्यायनसूत्रकारिकायाम् - 1/56.
2- "द्रव्यादानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च शूद्रात्" - इति 2/9/24.
3- "यज्ञश्चेत् प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ।।
यो वैश्यः स्याद् बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात् तस्य तद् द्रव्यमाहरेद् यज्ञसिद्धये ।।
आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ।।"
- इति 11/11-13.

4- 12/165/8.
5- "आवश्यके तु सोमादौ सर्वकर्मापरस्थिते ।
कुर्याद्व्यतिरिक्ताङ्गद्रव्याभावे हि चोदयेत् ।।" - इति 1/111-112.

च निर्मन्थ्यावेव कस्यचिदेवाङ्गस्य शूद्रादपि आदानस्य विधानात् स्फुटं भवति ।

<u>अग्न्याधानकल्पम्</u>

<u>तत्राग्न्याधाने संक्षेपतः पदार्थक्रम एवं भवति</u> -

1• यजमानकर्तृकमृत्विग्वरणम्, 2• अध्वर्युकर्तृकमरणिकरणम्, 3• यजमानकर्तृकं सम्भारसम्भरणम् (सम्भाराश्च हिरण्यशकलानि, ऊषाः, वालुकाः, शर्करा इत्यादयः), 4• यजमानर्त्विक्कर्तृकमग्न्यागारकरणम् (गार्हपत्यागारकरणम्, आहवनीयागारकरणम्, दक्षिणाग्निखरकरणम्, सभ्याग्निखरकरणं च), 5• यजमानस्य वपनं नखनिकृन्तनं पत्न्या नखनिकृन्तनम्, उभयोः स्नानं क्षौमवासःपरिधानं च, 6• अध्वर्युकर्तृकमग्निमन्थनम्, 7• (पञ्चभूसंस्कारपूर्वकं) गार्हपत्यखरे अग्नेराधानं च, 8• यजमानस्य दिवा भोजनमेव रात्रौ वेच्छया, 9• यजमानकर्तृकं देवपित्राह्वानम्, 10• यजमानस्य पूर्वेणाहवनीयद्वारेण प्रवेशः, पत्न्या दक्षिणेन गार्हपत्यद्वारेण प्रवेशः, 11• यजमानस्य पत्न्याश्चाग्नेः पश्चादुपवेशनम्, 12• अध्वर्युकर्तृकमरणिप्रदानम्, 13• बाहुपक्षेपः, 14• चातुष्प्राश्यौदनार्थं तण्डुलनिर्वापः, 15• चातुष्प्राश्यपचनम्, 16• समिदाधानम्, 17• ऋत्विग्भिर्ऋत्विजां चातुष्प्राश्यौदनाशनम्, 18• यजमानकर्तृकं चातुष्प्राश्यपचनदक्षिणादानम्, 19• यजमानस्य पत्न्याश्च जागरणमग्निधारणं च, 20• उषोदयकालेऽध्वर्युकर्तृकमग्न्युपशमनम्, दक्षिणतः क्षेपणं वा, 21• गार्हपत्यखरे (पञ्चभूसंस्काराः) सम्भारावापः, 22• आहवनीयखरे (पञ्चभूसंस्काराः) सम्भारावापः, 23• दक्षिणाग्निखरे (पञ्च भूसंस्काराः)

दक्षिणं जान्वालभ्य "अक्रोधनोऽमुत्सर्गः, नित्यनैमित्तिक-काम्य-कर्मानुष्ठानार्थमहं भीताभ्निनाधास्ये, तत्र त्वं मे ब्रह्मा[2] भव" इति ब्रह्माणं[3] वृणीते, ततः पुनरन्यस्य ब्राह्मणस्य दक्षिणं जान्वालभ्य "अक्रोधनोऽमुत्सर्गः, नित्यनैमित्तिक-काम्य-कर्मानुष्ठानार्थमहं भीताभ्निनाधास्ये, तत्र त्वं मे होता[4] भव" इति होतारं[5] वृणीते, ततः पुनरन्यस्य ब्राह्मणस्य दक्षिणं जान्वालभ्य "अक्रोधनाक्रमंद्, नित्यनैमित्तिक-काम्य-कर्मानुष्ठानार्थमहं भीताभ्निनाधास्ये, तत्र त्वं मेऽध्वर्युः[6] भव" इत्यध्वर्युं वृणीते, ततः पुनरन्यस्य ब्राह्मणस्य दक्षिणं जान्वालभ्य"

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- अग्न्याधाने ऋत्विजां वरणस्य पद्धतिः कात्यायनश्रौतसूत्रे नैव निर्दिष्टा, आश्वलायनसूत्रे [1/23], बोधायनश्रौतसूत्रादिषु च निर्दिष्टा, साऽपि पूर्णतयोपलब्धा नास्ति, अत प्रायेण देवयाज्ञिकपद्धत्यनुसारेणैव ऋत्विग्वरणपद्धतिर्निर्दिष्टा मया ।

2- वेदत्रयविहितकर्मकुशलः पूर्णाहुत्याद्यन्वारम्भादिकर्मणां कर्ता ऋत्विग् ब्रह्मेत्युच्यते। सर्वैर्ब्रह्मेति आपस्तम्बपरिभाषाप्रश्ने ।

3- वासिष्ठं ब्रह्माणं वृणुयादिति बोधायनश्रौतसूत्रे प्राप्यते, धर्मनिर्णयसूत्रे तु नायं नियम इत्युक्तम् [6/6/29]

4- सामिधेन्यनुवाक्यापुरोनुवाक्यायाज्यापाठादिकर्मणां कर्ता ऋत्विग् होता ।" "ऋग्वेदेन होता करोति" - इत्यापस्तम्बपरिभाषाप्रश्ने ।

5- वैश्वामित्रं होतारं वृणुयादिति बोधायनश्रौतसूत्रे, धर्मनिर्णयसूत्रे चायं नियमः खण्डितः [6/6/26]

6- पूर्णाहुत्याधानादीनां यजुर्वेदप्रोक्तानां प्रमुखाणां कर्मणां कर्ता ऋत्विगध्वर्युः, "यजुर्वेदेनाध्वर्युः करोति" इति आपस्तम्बपरिभाषाप्रश्ने। "अध्वर्युरध्वरं युनक्ति, अध्वरस्य नेता, अध्वरं कामयत इति वापि वाऽधीयाने युरुपबन्धः" इति निरुक्ते 1/3/3.

पचनस्वेऽपि गार्हपत्यागारान्तरेव चरेत् । ततो गार्हपत्यागारात् पूर्वस्यां दिशि पूर्वापरद्वारं प्राग्वंशाहवनीयागारं कुर्वन्ति[1] ।

ततोऽग्न्यगारयोर्मध्ये पूर्वापरायतां रज्जुरेखां कृत्वा गार्हपत्य-खरस्थानस्य परितो यथासम्भवं भूमिं परित्यज्यैतद्रज्जुरेखामध्यस्थकं मण्डलं गार्हपत्यखरं चतुर्दशाङ्गुलरज्जुकोटिकेन[2] परिलिख्य साधयन्ति । ततो गार्हपत्यखरमध्यादष्टसु एकादशसु द्वादशसु स्वाभिमतसंख्याकेषु[3] वा प्रक्रमेषु[4] पूर्वापर-रज्जुरेखायामेवाऽऽहवनीयखरस्य मध्यं कृत्वा चतुरश्रारत्निमात्रमाहवनीयखरं[5] साधयन्ति । ततो गार्हपत्याहवनीयखरमध्ययोरन्तरं पञ्चसु भागेषु षट्सु वा विभज्य तदेकभागमात्रां रज्जुं वर्धयित्वा तां रज्जुं त्रिषु भागेषु विभज्य रज्जवन्त-

---

1- का० श्रौ० सू० - 4/7/8-10.

2- त्रिविक्रमाचार्यो गार्हपत्यादिखरपरिमाणविधौ -

"अरत्निमात्रचतुरश्रस्तु पूर्वस्याग्नेः खरो भवेत् ।
रथचक्राकृतिः पश्चाच्चन्द्रार्धं च दक्षिणः ॥"

इत्युक्तम् [श्लो० 63]। एवं चारत्निका चतुरश्रेण तुल्योन्मानमण्डल-लेखनाय चतुर्दशाङ्गुलरज्जुकोटिक आवश्यक इति बोध्यम् ।

3- का० श्रौ० सू० - 4/8/17। वैखानसश्रौतसूत्रे तु ब्राह्मणादीनां यथाक्रमं विकल्पा उक्ताः [1/1] ।

4- "आधाने पदिकं कुर्याद् त्रिपदः सौमिको भवेत्
अग्नौ च त्रिपदं कुर्यात् [illegible] ॥"

5- "परिमण्डलं गार्हपत्यस्य त्रिव्यरत्निमात्रं चतुरश्रमाहवनीयस्यार्धचन्द्रवद् दक्षिणाग्नेः सभ्यावसथ्ययोर्गार्हपत्यवद्" इति [illegible] [8/23] ।

पश्चो गार्हपत्याहवनीयायतनमध्यकीलयोरारभ्य पश्चिमे त्रिवृतीये समादाय दक्षिणत आकृष्य तद्विवृतीयपातस्थिते द्वौ चिह्नं कृत्वा[1] तयोरन्तरतः शार्ङ्ग-बाहुगुणयुक्ते स्थाने मध्यं कृत्वा तदुपरि एकाग्निकोणत्वङ्गुलाङ्गुलकण्टकेन वृत्तं विलिख्य पूर्वापरायतां व्यासरेखां कृत्वोत्तरार्धस्य मण्डलार्धस्य त्यागं कृत्वा दक्षिणार्धं मण्डलार्धमन्वाहार्यपचनायतनं कुर्वन्ति[2] । तत आहवनीयं पूर्वं समचतुरस्रौ गार्हपत्यायतनसहितं[3] सभ्याग्न्यायतनं च कुर्वन्ति ।

ततो यजमानः क्षेत्रमनु करो न वा वपते[4], नखानु निकृन्तति, स्नाति, एवं पत्नी च क्षौरकर्मवर्जम् । ततो यजमानः क्षौमे वस्त्रे वाससी परि-धत्ते, यजमानपत्नी च[5] ।

---

1- गार्हपत्याहवनीययोरन्तरालं षड्ढा सप्तधा वागन्तुकं कृत्वा त्रिकृत्वापर-त्रिवृतीयलक्षणेन दक्षिणायतने दक्षिणाग्निः" - इति का०श्रौ० 1/27.

2- दक्षिणाग्न्यायतनलक्षणे च -

"अग्नेर्दक्षिणतः शार्ङ्गबाहुगुणे मध्यं ततो लिखेत् ।
वृत्तमेकोनविंशत्या प्राची व्यास मध्यगा भवेत् ।।
उदगर्धं त्यजेच्चार्धं दक्षिणाग्नेर्दक्षिणस्य तु ।"
- इति कर्कशुल्बार्थश्लोकः 38.

3- सभ्यस्याकारपरिमाणादिकं त्रिविधसमारचे -

"गार्हपत्यवत्सेनापि तुल्यः सभ्यस्तथा भवेत् ।
तुल्यं सभ्यस्वरूपेणापि कुर्यादावसथ्यस्य च ।।" इति श्लो० 64.

4- का०श्रौ० 4/7/11. 2/1/9; त्रिविधसमारचे च -

"श्रौताधाने तथेष्टौ च विकल्पो वपने स्मृतः ।
स्मार्ताधाने तु पक्षादौ वपनं नैव विद्यते ।।" इति श्लो० 180.

5- का० श्रौ० सू० - 4/7/12.

ततोऽध्वर्युर्गार्हपत्यागारेऽग्निमन्थनसम्भाराणि निधाय वैश्यकुलाद् वाऽग्निमाहृत्य अम्बरीषाद् वाऽग्निमाहृत्य महानसादेव वाऽग्निमाहृत्य[1] गार्ह-पत्यस्थले पञ्चभूसंस्कारान् कृत्वाग्निमादधाति ।

ततो यजमानो दिवाऽश्नात्येव रात्रौ भैक्ष्यमश्नाति न वा[2] ।

तत उपास्तमयसमये यजमान आहवनीयागारात् पूर्वस्यां दिशि उपविश्य [प्राङ्मुखः] [illegible] "देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे । यस्यास्मि न तमन्तरेमि स्वम्म इष्टं स्वम्म श्रान्तं[६] स्वं[६] हुतमस्तु" इति देवान् पितॄंश्चाह्वयति[3] । पत्न्यपि तत्समीप उपविशति ।

ततो यजमानः पूर्वेणाहवनीयागारद्वारेण प्रविशति पत्नी च दक्षिणेन गार्हपत्यागारद्वारेण । ततो यजमाने आहवनीयागारपश्चिमद्वारेण निर्गम्य गार्ह-पत्यागारपूर्वद्वारेण गार्हपत्यागारं प्रविष्टे यजमानः पत्नी च गार्हपत्याग्निरजतात् पश्चात् प्राङ्मुखावुपविशतः । तत्र पत्नी दक्षिणत उपविशति ।

ततोऽध्वर्युर्यजमानाय शमीगर्भस्याश्वत्थस्याश्वत्थस्यैव वाऽपि अरणी प्रयच्छति । पत्नी तु यजमानहस्तादधरारणिं गृहीत्वाऽङ्के निदधाति[4], यजमानो-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 4/7/14-15.

2- ,, - 4/7/16.

3- ,, - 4/7/17.

4- द्वितीयमतार्थे -

"अधरारणिं पत्नी बिभृयादुत्तरां पतिः ।
अग्न्याधेये ततः पत्न्या निर्मन्थ्यः सोऽग्निरुच्यते ।।"
- इति श्लो० 70.

निधिषु । "अस्मिन्नद्धथा जुहोतन"[1] इति मन्त्रेण प्रथमां समिधमादधाति । ततः उपविश्य "सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे"[2] इति मन्त्रं जपति । तत उत्थाय "तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य"[3] इति मन्त्रेण द्वितीयां समिधमाधाय "उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम"[4] इति मन्त्रेण तृतीयां समिधमादधाति ।

ततश्चत्वार एव ऋत्विजो गार्हपत्यागारं प्रत्युपविश्य तं चातुष्प्राश्योदनं निष्पादयन्ति ।

ततः ऋत्विग्भ्यश्चतुर्भ्यो राद्धो ब्रह्मौदन इति यजमानकमाह ।

ततो यजमान ऋत्विग्भ्यश्चातुष्प्राश्योदनाकर्षणिमत्त्वेन निष्क-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

तु "ओमिति परमाक्षरस्य योगिनामालम्बनभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्याक्षरादिगुणयुक्तस्य ब्रह्मर्षिश्छन्दो गायत्री परमात्मा देवता ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिपुष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु विनियोगः" इति कात्यायनशुक्लमाध्यन्दिनवाजसनेयसर्वानुक्रमणिका (५/१) वचनात् श्रौतयागप्रयोगकालेऽपि सर्वेषां मन्त्राणामादौ ओङ्कारस्य प्रयोगः प्राप्नोति तर्हि न कर्तव्य एवेति अस्माकमपि प्रतिभाति ।

1- मा० वा० शु० य० वे० मा० सं० - 3/1.
2- ,, - 3/2.
3- ,, - 3/3.
4- ,, - 3/5.

हिरण्यं निधाय तदुपरि अग्रान् न्युप्य तांश्च चतुष्कोणाकारान् कृत्वा तन्मध्ये वाल्वजकरान् न्युप्य तानपि चतुरश्राकारान् कृत्वा तदुपरि[illegible]पंक्तिं शर्कराः वेणुना चतुष्कोणाकारेण निदधाति । ततो दक्षिणाग्निस्थले च पञ्चहस्तकारान् कृत्वा पूर्ववत् सिकताभिरुप्य यजमानेनान्वारब्धो मध्ये हिरण्यं निधाय तदुपरि अग्रान् न्युप्य तानर्धचन्द्राकारान् कृत्वा तन्मध्ये वाल्वजकरान् न्युप्य तानपि पूर्ववदर्धचन्द्राकारान् कृत्वा तदुपरितो द्वाविंशतिं[1] शर्कराः वेणुना निदधाति ।

ततोऽध्वर्युरेवाग्नीध्रमग्न्यानयेति प्रेष्यति ।

अग्नीध्रस्तमानीय गार्हपत्यस्थलसमीपे पुरस्तात् प्रत्यङ्मुखं स्थापयति ।

ततः पूर्वं समुदिते गार्हपत्यस्थलस्योत्तरेण प्राङ्मुखो यजमानोऽग्निमन्थनयन्त्रं धारयति । ततः प्रत्यङ्मुखी[2] पत्नी नेत्रेण[3] चात्रं[4] निर्वेष्टयित्वा मथ्नाति। ततोऽध्वर्युः प्रत्यङ्मुखो[5] मथ्नाति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अग्निमन्थनस्वरूपं त्रितीयप्रकाशे [24-41]. छन्दोगपरिशिष्टे [1-7]

2- प्रत्यङ्मुखताविषये त्रितीयप्रकाशे -

"प्राङ्मुखी पितरो यत्र प्राङ्मुखेन हुते
प्राक् प्रतीतानि पात्राणि कस्मात् प्रत्यक् प्रमन्थनं प्रमथ्यते ?
रक्षोवाहुलकं दृष्ट्वा भीतः प्रत्यङ्मुखो द्रवेत् ।
तन्निरुध्य पुनरादातुं तस्मात् प्रत्यक् प्रमथ्यते ।।"

- इति कर्मप्रदीपे, श्लो० 45-46.

3- सर्वैर्गोवालैः कृतो व्यामप्रमाणो रज्जुः मन्थनरज्जुरित्युच्यते ।

4- चात्रं नाम प्रमन्थयोतः काष्ठविशेषः ।

5- देवयाज्ञिकपद्धत्यनुसारम्. त्रितीयप्रकाशे तु "अध्वर्युः प्राङ्मुखो मथ्नीयात्"
- इति श्रूयते. श्लो० 43.

अग्नौ जाते यजमानोऽध्वर्यवे वरम् (अभीष्टं वस्तु) प्रयच्छति । जातमग्निं च शुष्कगोमयचूर्णकेषु करीषे निधाय तमभिप्राण्य "प्राणमृतो दधे"[1] इति मन्त्रेण निरवति, "अमृतम्प्राण आदधे"[2] इति मन्त्रेणोच्छ्वासेनाग्निं गृह्णाति च ।

ततोऽध्वर्युरग्निं दारुभिः प्रज्वाल्य प्रज्वलन्तमेव तं गार्हपत्यायतने "भूर्भुवः[3] आदित्यानान्त्वा[4] देवानाम् व्रतपते व्रतेनादधे" इति मन्त्रेण धर्मोविते[5] अन्येन वा मन्त्रेण[6] आधापयति ।

ततोऽध्वर्युरेवापरिमितकाष्ठस्य निर्मन्थ्यस्य कुम्भाग्निं गार्हपत्येऽधिश्रयति । ततः प्रदीप्तमग्निमध्वर्युरेवोद्यच्छति ।

अग्नीध्रायतनस्थो भवति ।

अध्वर्युर्ज्वलन्तमग्निं सोपयमनीकमादायाहवनमनुगच्छति ।

अग्नीध्राहवनीयायतनसमीपे प्राचोपविश्याहवनस्य पूर्वदक्षिणपादेनाहवनीयायतने न्युप्तान् सम्भारानधिष्ठाय पादाऽऽक्रम्योत्थायाहवं प्राञ्चं नीत्वा

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 4/8/26।     2- तत्रैव - 4/8/27।

3- मा०वा०शु०य०वे०मा०सं० - 3/5; का०श्रौ०सू० - 4/9/1।

4- का० श्रौ० सू० - 4/9/1।     5- तत्रैव - 4/9/1-3।

6- "अग्निं प्राञ्चमुद्धृत्यासीनो प्राङ्मुखाद् गार्हपत्यमादधाति प्रथमाभ्यां व्याहृतिभ्यां भृगूणां त्वा देवानामिति भार्गवस्याङ्गिरसां त्वा देवानामित्याङ्गिरसस्यादित्यानां त्वेत्यन्यां ब्राह्मणानाम्"
- इति वैखानसश्रौतसूत्रे 1/11।

प्रदक्षिणमावर्त्य प्रत्यङ्मुखमाहवनीयायतनस्य पूर्वतः स्थापयति ।

ततोऽध्वर्युः सम्भारेषु स्थितमश्वपदचिह्नमग्निना निक्षिप्य कुम्भिनोपस्थापितमग्निं "भूर्भुवः स्वः । आदित्यानान्त्वा देवानाम् व्रतपते व्रतेनाऽऽदधे"[1] इति मन्त्रेण यथोक्तेन उक्तेन वा मन्त्रेण[2] तत्राऽऽदधाति[3] ।[4]

ततो यजमानः परिक्रम्याग्नेः पुरस्तात् प्रत्यङ्मुख उपविश्य अस्य पूर्वार्धं गृहीत्वा "द्यौरिव भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे"[5] इति यजुर्जपति[6] । तत उत्थाय "आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः ॥ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रति वस्तोरहद्युभिः"[7] इति तिसृभिः सार्पराज्ञीभिः ऋग्भिरग्निमुपतिष्ठते ।

ततोऽध्वर्युर्गार्हपत्यात् कर्षेणाग्निमादाय ज्वलन्तं तं "भूः ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 4/9/12; मा० श० प० ब्रा० - 2/1/5/25-27.

2- का० श्रौ० सू० - 4/9/1.

3- ,, - 4/9/1-3.

4- एतद्विषये वैखानसश्रौतसूत्रे तु "पुरस्तात् प्रत्यङ्मुखं स्थित्वा ... हृतिभिः यथाव्याख्यानेन. . . आहवनीयं ज्वलन्तमग्निमुद्धृत्यैव सम्भारेष्वश्वस्य पद आदधाति" - इत्युक्तम् [1/13]

5- मा० वा० शु० य० वे० मा० सं० - 3/5.

6- माध्यन्दिनीयशतपथब्राह्मणे तु अयं जप वैकल्पिकतया प्रतिपादितः 2/1/5/28.

7- मा० वा० शु० य० वे० मा० सं० - 3/6-8.

आदित्यानान्त्वा देवानां व्रतपते व्रतेनादधे[1] इति मन्त्रेण यथोचितं वचनेन वा मन्त्रेण दक्षिणाग्निस्थाने आदधाति[2] । यदि यजमानो दक्षिणाग्निमाहर्तुं करिष्यनु भवति तर्हि अध्वर्युर्वा तुषपक्वमग्निं गार्हपत्यायतनात् दक्षिणत उपसंहृत्य स्थापितं अरणिदा तं प्रज्वाल्य काष्ठशकलैर्वर्धमानं तं पूर्वोक्तेन मन्त्रेण दक्षिणाग्निस्थाने स्थापयति ।

ततः अन्वाधानं[3] करिष्यन्नध्वर्युरग्नीधमाजमानीयेति प्रेष्यति ।

अग्नीदाजमानीय अन्वाहार्यसमीपे पुरस्तात् प्रत्यङ्मुखमश्वं स्थापयति ।

ततः अन्वाहार्यस्यान्तरेण प्राङ्मुखो यजमानोऽग्निमन्थनयन्त्रं धारयति । ततः प्रत्यङ्मुखी पत्नीनेत्रेण वामं निः संवेष्ट्य मन्थति । ततोऽध्वर्युः प्रत्यङ्मुखो मन्थति ।

---

1- दक्षिणाग्न्याधानविषये वैखानसश्रौतसूत्रे तु "लौकिकं मथितं वाग्निमाहृत्य दक्षिणया द्वारोऽनुगुप्तयाऽग्नीध्रो द्वितीयया व्याहृत्या अन्वाधानेन. . . .तत्कालेऽन्वाहार्यपचनमादधाति"
- इति विधानं प्राप्यते [1/12]

2- दक्षिणाग्न्याधानविषये कात्यायनश्रौतसूत्रे "दक्षिणाग्निमादधाति" इति सूत्रम् [4/9/15] अस्ति। माध्यन्दिनीयशतपथब्राह्मणे तु दक्षिणाग्न्याधानविषये अग्न्याधानप्रकरणे नैव सूचितः। "आग्नी आदधीत" [2/1/3/9] "आ वै ब्रह्मणाग्नी धास्यामो" [2/2/2/12] "अग्नी आदधस्व" [2/2/2/20] इति च तत्र प्रयोगः ।

3- अन्वाधानं 'रात्रौ' अधिवासमित्येति अनन्तरं अग्निमथादेवाद्यो मन्यन्ते इति वेबस्टर् पद्यात् - पृ० 370.

अग्नौ जाते यजमानो गां दीयध्वमिति ऋत्विजः प्रेष्यति । जातमग्निं च शुक्लोर्णास्तुकीर्णे कर्षे निधाय पूर्ववद् निरवसति, उपवसति च ।

ततो ब्रह्मादयश्चत्वार एव ऋत्विजो विहारपश्चोत्तरत आनडुहं चर्मास्तीर्य च तन्मध्ये कांस्यपात्रं न्युब्जीकृत्य निधाय एतेन पञ्च कार्दकानादाय गां परिकृत्य "अमेन जयामि विकेभ जीवेः" इत्युक्त्वा क्रमेण कांस्यपात्रपृष्ठे[1] कार्दकान् क्षिपन्ति[2] ।

ततो यजमानो देवने परिकृतां गां "ब्रह्मणे होत्रेऽध्वर्यवेऽग्नीध्रे च नवविभागेनाऽहं सम्प्रददे[3]" इति उक्त्वा ऋत्विग्भ्यो ददाति ।

च ऋत्विजश्च "द्यौस्त्वा[4]" इत्यादिना मन्त्रेण[5] प्रतिगृह्णन्ति ।

ततोऽध्वर्युरग्निमर्कमादायाग्निं दारुभिः प्रज्वाल्य ज्वलन्तं तं "भूर्भुवः । आदित्यानामस्त्वा देवानाम् व्रतपते व्रतेनादधे" इति मन्त्रेण यथोचितं अन्येन वा मन्त्रेण सभ्यवरे आदधाति ।

- - - - - - - - - - - - - - - - - - - - - - - - -

1- एव देवनप्रकारो देवयाज्ञिकेन स्वकीयपद्धतौ प्रतिपादितः ।
2- कात्यायनश्रौतसूत्रे [15/7/5-19]. बौधायनश्रौतसूत्रे [2/8/9]. आपस्तम्बश्रौतसूत्रे [18/18/16] च देवनं प्रतिपादितम् । तत्र देवनप्रकारस्तु स्फुटतया न ज्ञायते ।
3- एतद् दानवाक्यं देवयाज्ञिकेन प्रदर्शितम् ।
4- पारस्करगृह्यसूत्रे - 3/15/21.
5- देवयाज्ञिकेनोक्तम् ।

ततः सर्वानग्नीन् प्रदक्षिणमावर्त्य विमुद्गृह्णाति[1] ।

अथाग्निं यजमानोऽभ्युषित वसति[2] ।

ततोऽध्वर्युः पूर्णाहुतिहोमाय पात्रान्तरादाज्यस्थाल्यामाज्यं निर्वपति । आज्यस्थालीं गार्हपत्येऽधिश्रयति । आदिदं स्रुवं दर्भैः सम्मार्ष्टि । स्रुचं[3] च दर्भाग्रैरन्ततः प्राङ्, मूलैर्बाह्यतः प्रत्यङ् सम्मार्ष्टि । तत आज्यमुद्वासयति । आज्यं पवित्राभ्यामुत्पुनाति पश्यति च । ततो यथाऽऽज्यस्य स्रुचो स्कन्दनं न भवेत् तथा स्रुचा अग्रतः भाजनादिकं निधाय स्रुवेणाज्यस्थाल्या आज्यमेकादशकृत्वः गृहीत्वा स्रुचं पूर्णां करोति । तत एतां पालाशीं दक्षिणमुखोत्थाय गत्वाऽऽहवनीयस्योत्तरत उपविश्याहवनीयं परिस्तीर्योत्थाय दक्षिणमाजायोपविश्य दक्षिणं जान्वाच्याग्निं मनसा ध्यायन् यजमानेनान्वारब्धः "स्वाहा" इति जुहोति[4] । "इदमग्नये न मम" इति यजमानस्त्यजति[5] ।

ततो यजमानो वरं ददामीति वदन् वाचं विसृजते ।

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 4/10/2.

2- ,, - 4/9/16.

3- पूर्णाहुत्यर्थं स्रुक् पालाशी भवतीति देवयाज्ञिकः, सोमकमन्थाद् वैकङ्कती स्रुक् भवतीति कर्कः ।

4- का० श्रौ० सू० - 4/10/5.

5- यजमानकर्तृकत्यागवाक्यानि सूत्रे ऋचो यद्यप्यनुक्तान्यपि सूत्रान्तरवशाद् देवयाज्ञिकादिभिः प्रदर्शितानि, किन्तु श्रौते अर्थप्रकाशकानि प्रतीयन्ते ।

वीतपक्वपन्नाभुक्कानानि यावज्जीवं वर्जयति[1] । तत्कालं बहुवारं निरात्रं वापि ब्रह्मचार्यग्निनित्यधारी क्षीरहोम्यग्निमुखायी च भवति[2] ।

<u>अग्निहोत्रसमयः</u>

अमावास्यादिषु सोमपूर्वाग्न्याधानं कुर्वाणः यजमानः साङ्गा-ग्न्याधानसमाप्तिदिनसायंकालात् प्रभृति सायम्प्रातर्नित्यमग्निहोत्रं[3] कुरुते । पौर्णमास्यामिष्टिपूर्वाधानं कुर्वाणः यजमानस्तु साङ्गाग्न्याधानसमाप्तिदिने साङ्गाग्न्याधानसमाप्त्यनन्तरमेवान्वारम्भणीयेष्टिं विधाय नित्याग्निहोत्रं प्रारभमाणः सायमग्निहोत्रं हुत्वा श्वोभूते प्रातरग्निहोत्रं च हुत्वा विहृतावग्नी अप्रवृज्य[4] पूर्णमासेष्ट्यर्थमग्न्युद्धरणान्वाधानादिकं कृत्वा ततः पौर्णमासेष्टिं कुरुते । सोमपूर्वाग्न्याधानं कुर्वाणः यजमानस्तु साङ्गाग्न्याधानसमाप्त्यनन्तरं[5] सोम-यागमनुष्ठाय सोमयागसमाप्तिदिनसायङ्कालात् प्रभृत्येव सायम्प्रातर्नित्यमग्निहोत्रं प्रारभते ।

---

1- का० श्रौ० सू० - 4/10/15; आप० श्रौ० सू० - 5/25/2-20.
2- ,, - 4/10/16.
3- आप० श्रौ० सू० - 5/22/2, 10, 13; 5/24/9.
4- तत्रैव - 5/24/9 - 5/25/1; अग्निहोत्रचन्द्रिकाया इष्टिपूर्वाधान-निरूपणप्रकरणं कूर्वन्तु च (पृ० 211-220) द्रष्टव्यम्; देवत्रिकाण्ड-सूत्रकृता तु "पौर्णमास्यामादधानः पूर्णाहुत्याधायाग्न्याधेयेष्टिं निरूप्य हुत्वा जुहुयादग्निहोत्रमुपतिष्ठमानो वसति श्वोऽन्वारम्भणीयां पौर्णमासीं च" इति 4/7/1.
5- का० श्रौ० सू० - 7/1/2-3; बौ० श्रौ० सू० - 5/4/6.

अथ सायमग्निहोत्रे[1] पदार्थक्रम एवं भवति -

1- सत्स्वग्नौ यजमानस्योऽग्न्युद्धरणेच्छः[2], 2- अनस्तमिते[3], गार्हपत्यादाहवनीयस्योद्धरणम्[4], 3- दक्षिणाग्नेः[5] उद्धरणं न वा[6], 4- यजमानस्य प्रवेशः[7], आहवनीयमुदक्षिणं[8] परीत्य स्वस्थान उपवेशनं[9] च, 7- पत्न्याः प्रवेश उपवेशनं च, 8- आहवनीयात् पश्चात् कूर्चस्य स्थापनम्, 9- आहवनीयस्य परिस्तरणम्, 10- गार्हपत्यस्य परिस्तरणम्, 11- दक्षिणाग्नेः परिस्तरणम्, 12-

---

1- प्रातरग्निहोत्रपदार्थक्रमोऽप्यत्र टिप्पणीषु प्रदर्शयिष्यते ।

2- यजमानस्य स्वयमग्निहोत्रकर्तृकेऽग्नीनामनुद्धृते चोद्धरणेच्छाभावः ।

3- प्रातरग्निहोत्रे सूर्येऽनुदित एव गार्हपत्यादाहवनीयस्योद्धरणं भवति ।
- का० श्रौ० सू० 4/15/1.

4- सायमग्निहोत्रेऽग्निमुद्धृत्य सन्ध्याकाल आस्तमिते होमः, प्रातरग्निहोत्रे तु अनुदित एव सूर्ये सन्ध्याकाल एवानुदित एव सूर्येऽग्निमुद्धृत्यानुदित एव सूर्येऽग्निहोत्रहोम इत्यनुदितहोमिनामाचारः ।

5- दक्षिणाग्नेरुद्धृते (का० श्रौ० सू० 4/13/4) कुशाग्रहणाभावः ।

6- खनीयाभावे दक्षिणाग्नेरनुद्धरणमिति - मा०श्रौ०प०प्रा० 2/5/2/6-8.

7- यजमानस्य सायमग्निहोत्रकर्मणि प्रवेशोऽग्न्युद्धरणात् प्रागेव भवति ।

8- प्रातरग्निहोत्रे तु प्रदक्षिणं पर्यङ्कणं भवति ।
- का० श्रौ० सू० 4/15/2.

9- उपवेशनानन्तरं प्रातरग्निहोत्रे यजमानस्य सन्नयनम् (का० श्रौ० सू० 4/15/4) वाचनं भवति; व्याख्यानविधेः प्रातरग्निहोत्रप्रकरणे पाठे प्रयोजनान्तरस्याभावात्पाठक्रमाद्यमानत्वादिदमाचमनं प्रातरग्निहोत्रविषयं प्रतीयते ।

31- स्रुचःप्रत्यक्संस्थमुन्मार्जनम्. 32- परिधेस्य बहिर्वै उदक्तो निमार्जनम्. 33- पुनः स्रुचोऽङ्गुष्ठोत्तानेन हस्तेन प्रत्यक्संस्थमुन्मार्जनम्. 34- उत्तानस्य हस्तस्य कुर्वन्त्य दक्षिणतो भूमौ निधानम्. 35- अपामुपस्पर्शनम्. 36- अनामिकया स्रुचः पयसो द्विः प्राशनम्. 37- निर्लेहः. 38- उत्सेचनम्. 39- निषेचनम्. 40- स्रुक्स्रुवस्य प्रतपनम्. निधानं च. 41- समिदाधानम्.[1] 42- पर्युक्षणम्. 43- यजमानस्य वाग्विसर्गः.[2] 44- आहवनीयस्य समीपे आसनं तत्परित्यागं च. 45- गार्हपत्यसमीपे शयनमासनं वा.[3] 46- निष्क्रमणम्. 47- निष्क्रामतो मनसा दक्षिणाग्नेरुपस्थानं च.[4] इति ।

<u>सायमग्निहोत्रस्य तन्त्रतः प्रयोग एवं पद्धति</u>

यदि यजमानस्य लघुत्वेनाशक्तत्वेन वा यजमानादन्योऽध्वर्युः

---

1- अतः परं सायमग्निहोत्र एव विकल्पेन वाग्यमः [का०श्रौ०सू० 4/12/11] "भूर्भुवः स्वः" इति मन्त्रेण वा [का० श्रौ० सू० 4/12/12] आहवनीयं गार्हपत्यं च क्रमेण यजमान उपतिष्ठते ।

2- प्रातरग्निहोत्रे वाग्विसर्गानन्तरं यजमानो मन्त्रजापं आचामति ।
- का० श्रौ० सू० 4/15/5.

3- का०श्रौ०सू० - 4/15/29-31.

4- प्रातरग्निहोत्रे तु अतः परं भोजनात् प्रागेव सभ्याग्निसमीपे मुहूर्तमुपविश्य "अनाहतो साङ्गमनाय सभ्याय नमः" इति वदति [का० श्रौ० सू० 4/15/32] ततः कौम्यौऽग्निभ्यो भस्मोद्धृत्य यत्र राशिः कृतो भवति तत्समीपं गत्वा "अहो परिस्राय नमः" इति च वदति
- का० श्रौ० सू० 4/15/33.

पुत्रो भ्राता शिष्यादिको वाऽग्निहोत्रस्य कर्तास्ति तर्हि यजमानोऽनस्तमित एव सूर्ये तं कर्तारम् "उद्धर" इति प्रेष्यति । ततः कर्ता गार्हपत्यादाहवनीयं यथाक्रमं दक्षिणाग्निं चोद्धरति । [ततः कर्ता सायंसन्ध्यामुपास्ते] । यजमाने एव कर्तरि सति तु प्रेषो न भवति ।

ततो यजमानो दक्षिणेन द्वारेण प्रविश्य[1] गार्हपत्यदक्षिणाग्न्योरन्तराले स्थितेन मार्गेण तयोर्दक्षिणतः स्थितेन मार्गेण वा[2] आहवनीयं प्रति गत्वाऽऽहवनीयमुदक्षिणं[3] परीत्याऽऽगत्य स्वस्थाने उपविशति[4] । पत्न्यपि यजमानवदेव तेनैव प्रविश्याहवनीयमप्रदक्षिणं परीत्य गार्हपत्यात् पश्चात् दक्षिण पूर्वाभिमुखी उपविशति ।

ततोऽध्वर्युः पुत्रादिको वा यजमान एव वाऽऽहवनीयात् पश्चात् प्रागग्रानुदगग्रान् वा बाहुमात्रानसमदग्रान् कुशान् निधाय दर्भैराहवनीयस्य परिस्तरणं प्रादक्षिण्येन कुरुते । तत्र प्रथमं प्रागुदग्रैर्दर्भैः, ततो दक्षिणतः प्रागग्रैर्दर्भैः, ततः पश्चादुदगग्रैर्दर्भैः, तत उदक् प्रागग्रैर्दर्भैः परिस्तरणं कुरुते । तदनन्तरमेवमेव गार्हपत्यस्य परिस्तरणं कुरुते, ततो दक्षिणाग्नेरप्युक्तरीत्या तथापि परिस्तरणं कुरुते । ततः प्रथममाहवनीयस्य पर्युक्षणमग्न्यादिकमुदकलेपं कुरुते, तत आहवनीयादारभ्य

---

1- का० श्रौ० सू० - 4/13/28.
2- ,, - 4/13/12-13.
3- प्रातरग्निहोत्रे तु गार्हपत्यं प्रदक्षिणं परीत्योपविशति यजमानः । - का० श्रौ० सू० 4/15/2.
4- अतः परं प्रातरग्निहोत्र एव यजमानः समन्वारब्धो वाचायमतीति प्रतीयते । - का० श्रौ० सू० 4/15/4.

गार्हपत्यं यावद् प्रतीचीमुदकधारां सन्ततां निनयन् गच्छति, ततो गार्हपत्यस्य प्रदक्षिणं पर्युक्षणं कुर्यात्[1] । ततो यदि दक्षिणाग्निरपि उद्धृतः स्यात् तस्यापि पर्युक्षणं कुर्यात् ।

ततोऽध्वर्युर्यजमानादिको वाऽग्निहोत्रस्य कर्ताऽग्निहोत्रीं धुक्ष्वेति कंचनाशूद्रं दोग्धारं प्रेष्यति ।

ततो यजमानो वाचं यच्छति[2] ।

दोग्धा चाग्न्यगारस्य दक्षिणतः प्राङ्मुख उदङ्मुखो वा पुंवत्सामग्निहोत्रीं गामवधाय वत्सं संसृज्याऽपनीयाशूद्रघटितायामूर्ध्वकपालायां मृन्मय्यां पयःस्थाल्यां गां पयो दोग्धि[3] ।

ततोऽग्निहोत्रस्य कर्ताऽध्वर्युर्यजमानादिको वा गोः समीपे गत्वा पयःस्थालीमादायाऽऽहवनीयं पूर्वेणागत्य गार्हपत्यात् पश्चादुपविश्य गार्हपत्यस्योत्तरतोऽङ्गारान् निरूह्य तेष्वङ्गारेषु पयःस्थालीमधिश्रयति । ततो दर्भोल्मुकं ज्वालयित्वा तेन स्थालीस्थं पयोऽवज्योत्य दर्भाग्रेणापः प्रत्यानीय पुनस्तथैवाऽवज्योत्य हस्ताभ्यां पयःस्थालीं समादायोदगुद्वासयति, ततो विसृज्य पुनः पयःस्थालीं हस्ताभ्यां समादाय पुनस्तत्रैव उद्वासयति। पुनरपि ततो विसृज्य पुनः

---

1- प्रातरग्निहोत्रे तु प्रथमं गार्हपत्यस्य पर्युक्षणं गार्हपत्यात् प्रभृत्याहवनीयं यावदुदकधारया निनयनं तत आहवनीयस्य पर्युक्षणमिति क्रमो भवति ।

- का० श्रौ० सू० 4/15/7.

2- का०श्रौ०सू० - 4/14/3। (अध्वर्युरेव वाचं यच्छतीति कर्कानुसारी विद्याधरः)

3- तत्रैव - 4/14/1.

पयस्थालीं हस्ताभ्यां समादाय पुनरप्युत्तरत उद्वासयति ।

ततः स्रुचं समिधं[1] वैकङ्कतं स्रुवञ्च गार्हपत्ये प्रताप्य स्तम्बेन सम्मार्ष्टि । ततः पुनः प्रतपति ।

ततोऽध्वर्युर्यजमानादन्यो वाऽग्निहोत्रस्य कर्ता "उन्नेष्यामि"[2] इति यजमानस्याऽनुज्ञां प्रार्थयते[3] । यजमानश्च तिष्ठन्नु "ओ३मुन्नय"[4] इत्यनुजानाति ।

ततोऽध्वर्युरन्यो वाऽग्निहोत्रस्य कर्ता सव्येन पाणिनाऽग्निहोत्रहवणीं वैकङ्कतीं स्रुचमादाय दक्षिणेन वैकङ्कतं स्रुवमादाय पयस्थालीतोऽग्निहोत्रहवण्यां चतुरः[5] पय उन्नयति । ततः स्रुचं पयस्थाल्यामेव निदधाति । ततः प्रादेशमात्रीं वार्ष्णीं समिधं स्रुग्दण्डोपरि अङ्गुल्यान्तरितां धारयन्तीं स्रुचं गार्हपत्यस्योपरि समीप एव नीचैः कृत्वा ततो मुखमात्रे स्रुचमानीय तां तत्रैव धारयन्नाहवनीयं प्रतिष्ठते । तत्र गार्हपत्याहवनीययोर्मध्ये देशं प्राप्य स्रुचं नीचैः [नाभिदघ्ने] कृत्वा पुनरप्युद्धृत्य मुखमात्रे एव धारयित्वाऽऽहवनीयं गत्वा तत्समीपे वायव्यां दिशि प्राङुपविश्य दक्षिणं जान्वाच्य सव्येन पाणिना स्रुचं गृहीत्वा दक्षिणेन पाणिना "अग्निज्योतिषन्त्वा वायुमतीम्प्राणवतीं "स्वर्ग्याम्" स्वर्गायोपदधामि भास्वतीम्"[6] इति मन्त्रेण[7] समिधमाहवनीये आदधाति । ततो

---

1- का॰श्रौ॰सू॰ - 4/14/6.    2- तत्रैव - 4/14/8.
3- यजमानः स्वयमेवाग्निहोत्रं कुर्यात्तर्हि अनुज्ञाप्रार्थनाऽनुज्ञा च न भवतः ।
4- का॰ श्रौ॰ सू॰ - 4/14/9.
5- पञ्चावत्तिनः पञ्चवारं पय उन्नयन्ति ।
6- का॰ श्रौ॰ सू॰ - 4/14/13.
7- प्रातरग्निहोत्रेऽपि पयमेव मन्त्रः, नापि तत्राग्निस्थाने सूर्यपदप्रयोगः ।

इति त्यागं कृत्वा[1] स्रुच्युत्तराहुतिं पूर्वाहुतितोऽधिकामग्नेरुत्तरभागे पूर्वाहुत्याः संगं कुर्वन् जुहोति । द्वितीयाहुतितोऽपि भूयिष्ठं पयः स्रुचि परिशेषयति । ततः स्रुवमुदीचीं विकर्षन् कूर्चे निदधाति । ततः स्रुग्मध्येन हस्तेन प्रत्यञ्चमनुमृज्य "नमो देवेभ्यः"[2] इति मन्त्रेण कूर्चस्योत्तरभागे पयोलेपं निमार्ष्टि । तत उत्तानेन हस्तेन कुशान् प्रत्यक् संमृज्य कूर्चस्य दक्षिणतो भूमौ "नमः पितृभ्यः"[3] इति मन्त्रेण उत्तानमेव हस्तं निदधाति । ततो दक्षिणहस्तेनाप उपस्पृशति ।

ततोऽग्निहोत्रस्य कर्ता स्रुचमादाय स्वार्थमग्निहोत्रशालातो बहिर्गत्वोपविश्याऽनामिकया स्रुवस्थं पयो गृहीत्वा प्राश्य पुनरनामिकयैव पयो गृहीत्वा प्राश्नाति[4]। ततः स्रुवस्थं सर्वं पयो मुखं संयोज्य जिह्वयैव निर्लेढि[5] ।

ततोऽग्निहोत्रस्य कर्ता आहवनीयाग्निहोत्रशालां प्रविश्य[6] आहवनीयसमीपे समुपविश्य दक्षिणहस्तेनोदस्थालीमादाय स्रुवमुदकेन पूरयित्वा "देवान् जिन्व"[7]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अग्निहोत्रस्य प्रजापतेः कृते स्मार्तोऽपि त्यागो मनस एवोक्तः प्रतीयते, न वाचिकः ।

2- का० श्रौ० सू० - 4/14/20.

3- तत्रैव ।

4- मा०श्रौ०प०सू० - 2/3/1/21; का०श्रौ०सू० - 4/14/25-27.

5- "अग्निहोत्रहवण्याश्च नैव लेढापरिग्रहः" इति आदित्यपुराणे कलिवर्ज्यपाठादिदानीन्तना अग्निहोत्रकर्त्री न निर्लिहन्ति ।

6- "[illegible] "उत्सृज्याचामति निर्लेढि" इति [मा०श्रौ०प०सू० 2/3/1/2 का०श्रौ०सू० 4/14/27] वचनाद् अर्थतस्य प्रवेशोऽर्थसिद्धः ।

7- का० श्रौ० सू० - 4/14/27.

इति मन्त्रेणाहवनीयस्योत्तरतः स्रुवेणोदकमुत्सिञ्चति । ततः पुनः स्रुवमुदकेन पूरयित्वा "पितॄन् जिन्व"[1] इति मन्त्रेणाहवनीयस्य दक्षिणतः स्रुवेणोदकमुत्सिञ्चति । ततः पुनः स्रुवमुदकेन पूरयित्वा "सप्तर्षीन् जिन्व"[2] इति मन्त्रेणाहवनीयात् प्रागुदीच्यां दिशि स्रुवेणोदकमूर्ध्वमुत्क्षिपति ।

ततः पुनः स्रुवमुदकेन पूरयित्वा स्रुवस्थाने प्राक्संस्थमुदकांशं वा "अग्नये पृथिवीक्षिते स्वाहा"[3] इति मन्त्रेण प्रथमं स्रुदकतृतीयभागं भूम्यां निनयति; ततः "पृथिव्याममृतञ्जुहोमि स्वाहा"[4] इति मन्त्रेण द्वितीयं स्रुदकतृतीयभागं निनयति; ततः "अपोऽमृतञ्जुहोमि स्वाहा"[5] इति मन्त्रेण तृतीयं स्रुदकतृतीयभागं निनयति ।

ततोऽग्निहोत्रस्य कर्ता स्रुक्स्रुवमाहवनीये प्रताप्य निदधाति ।

ततोऽग्निहोत्रस्य कर्ता पर्युक्षणेन सौचु क्रिमनु[6] "समिद्धमसि समिधो ऽग्ने दीदिहि समिद्धोऽस्यग्ने दीदिहात्"[7] इति मन्त्रेण[8] त्रिरिद्धः समिध मादधाति[9] ।

---

1/2- का० श्रौ० सू० - 4/14/27.

3/4/5- .. - 4/14/28.

6- माध्यन्दिनीयशतपथब्राह्मणानुसारं ये नित्याग्निहोत्रे दक्षिणाग्निविहरणं न कुर्वन्ति [2/3/2/6-8] तेषां नित्याग्निहोत्रे दक्षिणाग्निसम्बद्धाः सर्वाः क्रिया लुप्येरन् ।

7- का० श्रौ० सू० - 4/14/30.

8- एतदनन्तरं एकेन वाक्येनैकां समिधमादधीत अनेन मन्त्रेण सकृत् त्रिः समिधो वादधीतेति देवयाज्ञिकः, द्वितीय एव पक्ष इति कर्कः ।

9- एतदनन्तरं वात्सप्रोपस्थानं विहितमपि तस्य वैकल्पिकत्वात् [का०श्रौ०सू० - 4/12/1-12] त्यक्तम् ।

ततोऽग्निहोत्रस्य कर्ता येन क्रमेण यथा च पूर्वं पर्युक्षणं कृतं तेनैव क्रमेण तथैव च सर्वेषा-
मग्नीनां पर्युक्षणं करोति[1] ।

ततोऽग्निहोत्रस्य कर्ता वाग्विसर्गं[2] कुरुते[3] ।

ततोऽग्निहोत्रस्य कर्ता आहवनीयस्य समीपे आस्ते[4], "इन्द्राया-
हवनीयाय नमः[5]" इति तमुपास्ते च । ततो गार्हपत्यस्य समीपे गत्वा शेते, आस्ते
वा[6], "यमाय राज्ञे नमः[7]" इति तमुपास्ते च ।

ततो यजमानो यथाप्रविष्टं निष्क्रामति[8] । यद्यपि अपराग्नी
अन्तरेण प्रविष्टस्तदापि अपराग्नी दक्षिणेनैव निष्क्रामति[9], निष्क्रामंश्च "ऋताय

---

1- का० श्रौ० सू० - 4/13/19.
2- ,, - 4/13/31.
3- प्रातरग्निहोत्रे वाग्विसर्गानन्तरं मन्त्रमाचामन्ति [का०श्रौ०सू० 4/15/5], एतस्याचमनस्य प्रातरग्निहोत्रप्रकरणे पाठस्य प्रयोजनान्तरस्याऽनवगम्यमानत्वादिदमाचमनं प्रातरग्निहोत्र एवेति प्रतीयते ।
4- का० श्रौ० सू० - 4/15/29.
5- एष मन्त्रो देवयाज्ञिकेन पद्धतौ प्रोक्तः, स्वव्याख्याने पद्धतौ चेदापि तूष्णीमासनीयमुपस्थानमित्यपि उक्तं तेनैवेति वस्तुत एष मन्त्रोऽनावश्यक एव विभाव्यते, कुत्रापि [मा०श०ब्रा० 2/3/2/1-2] मन्त्रविधानं नास्ति ।
6- का० श्रौ० सू० - 4/15/30.
7- एषोऽपि मन्त्रो देवयाज्ञिकेन प्रोक्तो वस्तुतोऽनावश्यक एव प्रतीयते ।
8- एष निष्क्रमणविधिर्देवयाज्ञिकेन पद्धतौ प्रोक्तः ।
9- एषोऽपि विधिस्तेनैव तथोक्तः ।

भैक्षायान्वाहार्यपचनाय नमः[1] इति मन्त्रेण दक्षिणाग्निमुपस्थति[2] ।

इति सायमग्निहोत्रप्रयोगः संक्षेपेण प्रदर्शितः । प्रातरग्निहोत्रगता विशेषास्तु सायमग्निहोत्रपदार्थटिप्पणीषु सायमग्निहोत्रप्रयोगटिप्पणीषु च प्रदर्शिता एव । तस्मान्न पृथक् प्रातरग्निहोत्रप्रयोगः प्रदर्श्यते ।

## अथ पूर्णमासेष्टि[3]-प्रयोगः[4]

तत्र पूर्णमासेष्टौ पदार्थक्रम एवं भवति -

1- अग्न्युद्धरणम्, 2- अन्वाधानम्, 3- मांस-मैथुन-वर्जन-

---

1- एकोऽपि मन्त्रो देवताविशेषैः प्रोक्तो वस्तुतोऽन्वाहार्यक एवाकाम्यते ।

2- का०श्रौ०सू० - 4/15/31; मा०आ०प०सू० - 2/3/2/4.

3- यद्यपि श्रुतौ दर्शपूर्णमासादर्शस्यैव प्रयोगस्तथापि न तत्र प्रातिपदिकस्य पूर्वं प्रयोगात् तथाकृतः, प्रयोगे तु पूर्णमासेष्टेरेव प्राथम्यम् आधानानन्तरं पूर्णमासेष्टेर्विधानात् [आप० श्रौ० सू० - 5/24/9-5/25/1]

4- यद्यपि "अन्वारम्भणीया .... दर्शपूर्णमासारम्भे" [का०श्रौ०सू० 4/5/21] इत्यादिकाद् वचनात् पूर्णमासदर्शयागयोः प्रथमात् प्रयोगात् प्राक्, अन्वारम्भमपि दर्शपूर्णमासप्रकृतिकानामिष्टीनां पशुबन्धानां च प्रथमात् प्रयोगात् प्राक् [तत्रैव कर्कभाष्ये] अन्वारम्भणीयेष्टिं कुर्वीत, तत्र च पूर्णमासेष्टेर्व्रतसम्पादनीयत्वे [मातृकापूजाभ्युदयिकश्राद्धानन्तरं] पौर्णमास्यामेव, अतः सम्पादनीयत्वे तु प्रतिपदि एवान्वारम्भणीयेष्टिं कुर्वीत; अग्न्युद्धरणादिकमपि कर्मान्तराऽन्वारम्भणीयेष्टिवत् पूर्णमासेष्टिवदेव भवति; किन्तु अर्थात् पात्रासादनम्,

..... अग्निमुखेऽपि

सङ्कल्पः, ४- वपनं न वा. ५- चरुनिर्वपनम्.[1] ६- व्रतोपायनीयाशनम्.[2]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

आग्नावैष्णव एकादशकपालः पुरोडाशः, सरस्वत्यै चरुः, सरस्वते द्वादशकपालः पुरोडाश इति त्रीणि हवींषि, विंशतिकाष्ठ इध्मः, अन्वाहार्यस्थाने वत्सतरी मिथुनौ गावौ वेति विशेषः, तथापि सा पूर्णमासेष्टिस्थाने तुल्येति न पृथक् प्रदर्श्यते ।

1- बौधे तु चरुनिर्वपनाद् नित्याद् वैश्वदेवाच्च पश्चादमावास्यायामपराह्णे पिण्डपितृयज्ञो भवति । तत्र च सङ्कल्पः, दक्षिणाग्नेः परिस्तरणम्, दक्षिणाग्निमभितो दक्षिणसंस्थमेक्षणः पात्रासादनम्, चरुकरणम्, मेक्षणेन "अग्नये कव्यवाहनाय स्वाहा" इति चरोर्दक्षिणाग्नौ होमः, "सोमाय पितृमते स्वाहा" इति पुनश्चरोर्होमः, दक्षिणाप्रवणाया रेखायाः करणम्, रेखाग्रे उल्मुकस्य निधानम्, अवनेजनदानम्, सकृदाच्छिन्नानां दर्भाणां रेखायामास्तरणम्, चरोस्त्रीन् विभागान् कृत्वा तैस्त्रीन् पिण्डान् [illegible] यजमानपितृ-पितामह-प्रपितामहेभ्यो दानम्, जपः आतमनादुदङ् भूत्वाऽऽसनम्, पुनर्दक्षिणामुखो भूत्वा जपनम्, पिण्डेषु पूर्ववदवनेजनदानम्, नीवीं विस्रस्याञ्जलिकरणम्, अथ पिण्डेषु सूत्रदानम्, उदपात्रमादाय पिण्डेषु निषेचनम्, पिण्डानां यजमानाय दानम्, पिण्डानामवघ्राणम्, सकृदाच्छिन्नानामग्नौ प्रहरणम्, उल्मुकस्य चाग्नौ प्रहरणम्, पत्नी पुत्रकामा चेत् तस्यै [illegible] मध्यमपिण्डस्य प्रदानम्, तस्याः समन्त्रकं तत्प्राशनम्, पिण्डयोः पिण्डानामेव वाऽग्नौ आधानम्, ब्राह्मणेन भक्षणम्, अप्सु प्रक्षेपणं वेति पदार्था भवन्ति ।

2- दर्शे तु सान्नाय्यपक्षे व्रतोपायनीयाशनानन्तरं पलाशशाखाच्छेदनादिकं भवति ।

7- व्रतोपायनम्. 8- सायमग्निहोत्रहोमः.[1] 9- कृष्णाञ्जनं न वा.[2] 10- आहवनीयागारे गार्हपत्यागारे वापि यजमानस्य शयनम्. 11- प्रातरग्निहोत्र-होमः. 12- कपालानामुपकल्पनम्. 13- ब्रह्मवरणम्. 14- ब्रह्मणो जपः, 15- वाचस्पतिहोमः.[3] 16- ब्रह्मसदनं प्रतिगमनम्. ब्रह्मसदनेक्षणम्. तृणस्य प्रासनम्. ब्रह्मसदने समुपवेशनं च, 17- अध्वर्युकर्तृका प्रणीताप्रणयनानुज्ञा प्रार्थना. 18- ब्रह्मकर्तृकाऽनुज्ञा. 19- अध्वर्युकर्तृकं प्रणीताप्रणयनम्. 20- आहवनीय-गार्हपत्य-दक्षिणाग्नीनां परिस्तरणम्. 21- पात्रासादनम्. 22- शूर्पाग्निहोत्रहवण्योः प्रतपनम्. 23- हविर्ग्रहणम्. 24- हविरासादनम्. 25- पवित्रकरणम्. 26- अग्निहोत्रहवण्यामपामानयनं पवित्रनिधानमुदिङ्गनं च, 27- हविः प्रोक्षणायानुज्ञायाः प्रार्थना. 28- ब्रह्मकर्तृकानुज्ञा. 29- अध्वर्युकर्तृकं हविः प्रोक्षणम्. 30- पात्रप्रोक्षणम्. 31- प्रोक्षणीनिधानम्, कृष्णाजिनस्यादानमवधूननमास्तरणं च. 32- उलूखलनिधानम्. 33- हविरावापः, कण्डनारम्भश्च, 34- हविष्कृदाह्वानम्. 35- आग्नीध्रकर्तृकं दृषद उपलायाश्च कुट्टनम्. 36- पत्न्या आग्नीध्रो वा हविषः कण्डनम्. 37- अध्वर्युकर्तृकं शूर्पस्यादानम्. हविषो निष्पवनम्.

- - - - - - - - - - - - - - - - - - - - - - - - -

1- सान्नाय्यपक्षे तु सायमग्निहोत्रानन्तरं वत्सार्थमनुकूलवत्सापाकरणादिकं दोहन-कपालान्तकं पिधानपर्यन्तं वत्सापाकरणादोहनान्तं कर्म भवति ।

2- सद्यस्कालायां पौर्णमास्यां तु व्रतोपायनानन्तरं सायमग्निहोत्रहोमस्तु कृष्णाञ्जनाग्न्यगारशयनप्रातरग्निहोत्रहोमा न भवन्ति, ब्रह्मवरणादिकमेव भवति ।

3- वाचस्पतिहोमो यजमानकर्तृक इति कर्मानुसारिणि कातीयेष्टिदीपके नित्यानन्दः, ब्रह्मकर्तृक इति देवयाज्ञिकः ।

तुषाणामुत्करे प्रासनं च. 38- हविर्वीक्षणम्, 39- पत्न्या अग्नीधो वा हविषः फलीकरणम्, 40- अग्नीत्कर्तृकं कपालोपधानम्, अध्वर्युकर्तृकं हविषः पेषणं च, 41- अग्नीत्कर्तृकम् उपलानां निनामभिश्रयणम्, 42- प्रोक्षणीनामुत्करे निना- मानम्, 43- अध्वर्युकर्तृकं पिष्टसंयवनम्, 44- पिष्टपिण्डस्य कर्म विभजनं[1] च, 45- अग्नीत्कर्तृकमाज्यस्याधिश्रयणम्, अध्वर्युकर्तृकं पुरोडाशपिण्डयोरधि- वृञ्जनम्, पुरोडाशयोः प्रथनम्, अभिमर्शनं च, 46- अङ्गुलीनां पात्र्याश्च प्रक्षा- लनम्, 47- पर्यग्निकरणम्, 48- पुरोडाशश्रपणम्, 49- पात्र्यङ्गुलिप्रक्षालन- जलस्याप्त्येभ्यो निनयनम्, 49- अन्वाहार्याधिश्रयणम्, 50- वेदिमानम्, 51- स्फ्यादानम्, 52- स्तम्बयजुर्हरणम्, 53- अग्नीत्कर्तृकमुत्करात् स्फ्यग्रहणं च, 54- अध्वर्युकर्तृका वेदिपूर्वपरिग्रहणानुज्ञा प्रार्थना, 55- ब्रह्मकर्तृका अनुज्ञा, 56- अध्वर्युकर्तृकं वेदिपूर्वपरिग्रहणम्, 57- अग्नीत्कर्तृकं[2] वेदिकरणम्, वेदेः परि- लवनम्, उत्करस्य करणं च, 58- अध्वर्युकर्तृका वेद्युत्तरपरिग्रहणानुज्ञाप्रार्थना, 59- ब्रह्मकर्तृकानुज्ञा, 60- अध्वर्युकर्तृकं वेद्युत्तरपरिग्रहणम्, 61- अग्नीत्कर्तृकं[3] प्रोक्षणीधारणम्, 62- अध्वर्युकर्तृकः[4] प्रोक्षणीरासादयेत्यादिकः प्रैषः, 63- स्रुग्ग्रहणादिकम्.

---

1- अलोमाजिनो ब्रह्मत्वाग्नीषोमीयपुरोडाशाभावे [आप०श्रौ० परि- भाषा90, का०श्रौ० 5/4/4] एवं विभजनं न भवति ।

2- वेदिखननमध्वर्युकर्तृकमिति कर्कानुसारिणि कातीयेष्टिदीपके नित्यानन्दः, अग्नीत्कर्तृकमिति देवयाज्ञिकः।

3- एतत् प्रोक्षणीधारणमध्वर्युकर्तृकमिति कर्कः, अग्नीत्कर्तृकमिति देवयाज्ञिकः ।

4- एष प्रैषोऽध्वर्युकर्तृक इति हरिस्वामिनः, अनन्तयाज्ञिक-देवयाज्ञिकादयश्च.

. . . . अग्रिमपृष्ठेऽपि

किञ्चिद्ध्यानम्, चिरवेणां देवानां प्रार्थनम्, अग्ने प्रार्थनम्, स्रुगादापनयनं च.
124- अध्वर्युकर्तृकं स्रुवद्ग्रहणम्, स्रुगभ्युदादानम्, यजतिकोद्गमनं च. 125- प्रथम-प्रयाजः समिद्यागः [अध्वर्युकर्तृकमाश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृकः समिद्यागप्रैषः, होतृकर्तृकः समिद्याज्यापाठः, वषट्कारानुमन्त्रणम्[1] वाक्यात्मन्यच अध्वर्युकर्तृकं प्रथमा जुहूवा अवदानं जुहूभागचतुर्थांशस्याग्नेये प्रक्षेपः, यजमानकर्तृकं प्रथमप्रयाजानुमन्त्रणम्]. 126- द्वितीयप्रयाजस्तनूनपाद्यागो नराशंसयागो वा[2]. 127- तृतीयप्रयाज इड्यागः. 128- चतुर्थप्रयाजो बर्हिर्यागः. 129-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- यद्यपि कात्यायनेष्टिदीपके नित्यानन्देन वषट्कारानुमन्त्रणं न प्रदर्शितम्, तथापि कातीयहोमपरिशिष्टे "वषट्कार मा म आयुः प्रमोषीरोजोजः सहोजो मयि प्राणापानौ पातमिति वागिति वा वषट्कृत्य वषट्कृत्यानुमन्त्रयेतात्मानं वा-लभेत" इति विधानात् [5/4] वषट्कारानुमन्त्रणमावश्यकम् ।

2- यजमानकर्तृकस्त्यागः श्रुतिषु श्रौतसूत्रेषु चाविहितत्वादनावश्यकोऽपि पद्धतिकारैः -

"आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग यदि सन्धाय न भवेति कथंचन: ॥
अवत्तं तु त्यजेदग्नौ मनसा वचसाऽपि च ।
ततश्च प्रक्षिपेदग्नाविति धर्मः सनातनः ॥
अत्यक्त्वा जुहुयाद् यस्तु मोहेनाविष्टमानसः ।
देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा ॥
यद् किञ्चिज्जुहुयादग्नौ तद् सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद् यस्तु नरकं स तु गच्छति ॥"

- इत्यादिस्मृतिवचनात् प्रतिपादितः स्मार्त एव ।

पञ्चप्रयाजाङ्ग्यादियागः, 130- अध्वर्योर्हविः समीपे गमनम्, प्रयाजशेषेण जुह्वां ध्रुवायाः पुरोडाशयोश्चाभिघारणं च, 131- आग्नेयाज्यभागयागः [अध्वर्युकर्तृक आग्नेयाज्यभागपुरोनुवाक्याप्रैषः, होतृकर्तृक आग्नेयाज्यभाग पुरोनुवाक्यापाठः, अध्वर्युकर्तृकं ध्रुवाया आज्यस्य जुह्वामानयनं ध्रुवाया आप्यायनं यजतिदेशे प्रतिगमनम् आश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृकोऽग्निं यजेति प्रैषः, होतृकर्तृक आग्नेयाज्यभागयाज्यापाठः, वषट्कारानुमन्त्रणम्, आत्मालम्भः, यजमानकर्तृकस्त्यागः[1], अध्वर्युकर्तृक आहवनीये हविषः प्रक्षेपः]. 132- सौम्याज्यभागयागः. 133- प्रधानयाग आग्नेययागः [अध्वर्युकर्तृकं हविः समीपे गमनम्, आग्नेययागपुरोनुवाक्याप्रैषः, होतृकर्तृक आग्नेययागपुरोनुवाक्यापाठः, अध्वर्युकर्तृकं जुह्वामुपस्तरणम्, आग्नेयपुरोडाशादवदानम्, प्रत्युपस्तरणम्, ततोऽभ्यञ्जनम्, यजतिदेशे प्रतिगमनम्, आश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृक आग्नेययागयाज्याप्रैषः, होतृकर्तृक आग्नेययागयाज्यापाठः, वषट्कारानुम-

---

1- यजमानकर्तृकस्त्यागः श्रुतिषु श्रौतसूत्रेषु चाविहितत्वादनावश्यकोऽपि पद्धतिकारैः -

"आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग एवमिन्द्राय न ममेति यथार्थतः ॥
अदत्तं तु यदोदन्नं ममता यत्नतोऽपि च ।
तत्र च प्रति पैदग्नाविति धर्मः सनातनः ॥
अत्यक्त्वा जुहुयाद् यस्तु मोहितान्धितमानसः ।
देवा हव्यं न गृह्णन्ति कव्यान्न पितरस्तथा ॥
यत् किञ्चिज्जुहुयादग्नौ तत् सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद् यस्तु नरकं स तु गच्छति ॥"

- इत्यादिस्मृतिवचनात् प्रतिपादितः स्मार्त एव ।

ऋत्विग्भ्य आदेशनम्, यजमानकर्तृकं जपनम्, भागकर्षणम्, चतुरवत्तकर्षणम्, आत्मासान-
जपनम्, छादनर्मणि च, 150- ऋत्विक्कर्तृकं चतुर्विकभागभक्षणम्. 151- अग्नी-
त्कर्तृकं षडवत्तभागभक्षणम्. 152- ऋत्विक्कर्तृकमिडाभक्षणम्. 153- यजमानकर्तृक-
मिडाप्राशनम्, सौंवो मार्जनम्, अध्वर्युकर्तृक 154- अध्वर्युकर्तृकं प्रस्तरे पवित्रयोर्निधानम्.
155- ब्रह्मभाग-यजमानभाग-कर्षणम्. 156- यजमानकर्तृकं स्वभागस्य बर्हिषि
निधानम्. 157- ब्रह्मकर्तृकं स्वभागस्य प्राशित्रभागे निधानम्. 158- अध्वर्युकर्तृकम्
अन्वाहार्यस्योद्वासनं वेदिं प्रतिष्ठापनम्, वेदां निधानम्, आलम्भनं च. 159- यज-
मानकर्तृकमन्वाहार्यदक्षिणादानम्. 160- ब्रह्मादिकर्तृकमन्वाहार्यदक्षिणाप्रतिग्रहणम्.
161- अध्वर्युकर्तृकमन्वाहार्यदीनामुद्धासनम्. 162- अनुयाजार्थमुल्मुकयोरङ्गारयोरा-
हवनीये प्रक्षेपः, ब्रह्मणः प्रस्थानानुज्ञायाः प्रार्थनम्, अग्निसम्मार्जनायाग्नीध्रे प्रैषश्च.
163- ब्रह्मकर्तृकमनुज्ञानम्. 164- अग्नीत्कर्तृकं समिदाधानम्. 165- होतृकर्तृकं समि-
दनुमन्त्रणम्. 166- अग्नीत्कर्तृकमग्निसम्मार्जनम्. 167- प्रथमोऽनुयाजो बर्हिर्यागः
[अध्वर्युकर्तृकमौपभृतस्याज्यस्य जुह्वामानयनम्, पर्यस्तिकोत्क्रमणम्, आश्रावणम्, अग्नी-
त्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृको बर्हिर्यागयाज्यापाठार्थः प्रैषः, होतृकर्तृको बर्हि-
र्यागयाज्यापाठः, वषट्कारानुमन्त्रणम्, आत्मालम्भः, अध्वर्युकर्तृको जुह्वाज्य-
तृतीयभागस्याहवनीये प्रक्षेपः]. 168- द्वितीयोऽनुयाजो नाराशंसयागः, 169-
तृतीयोऽनुयाजः स्विष्टकृद्यागः। ~~170~~-169- अध्वर्युकर्तृकमुद्गमनम्. 170- औप-
भृतोपयमनम्. 171- स्रुग्व्यूहनम्, 172-परिध्यञ्जनम्. 173- आश्रावणम्, 174-
अग्नीत्कर्तृकं प्रत्याश्रावणम्, 175- अध्वर्युकर्तृकः सूक्तवाकप्रैषः, प्रस्तरादानादिकं च.
176- होतृकर्तृकः सूक्तवाकपाठः, 177- अध्वर्युकर्तृकं प्रस्तरस्याहवनीये प्रक्षेपणम्.
178- अग्नीत्कर्तृकोऽनुप्रहरणप्रैषः, 179- अध्वर्युकर्तृकं प्रस्तरतृणानुप्रहरणम्. 180-

अग्नीत्कर्तृकोऽग्नीत्कर्तृकः संवदन्प्रेषः, 181- अध्वर्युकर्तृकः प्रश्नः, 182-
अग्नीत्कर्तृकमुत्तरम्. 183- अध्वर्युकर्तृकं श्रावणम्, 184- अग्नीत्कर्तृकं प्रति-
श्रावणम्, 185- अध्वर्युकर्तृकः शंयुवाकप्रैषः, 186- होतृकर्तृकं शंयुवाकवचनम्.
प्रस्तरस्य वेदिदर्भाणां निधानं च, 187- अध्वर्युकर्तृकं परिध्यनुप्रहरणम्, 188-
संस्रवणम्. स्रुग्विमोकानम्, जुहूपभृद्व्यूहनम्, वेदालम्भश्च, 189- हविषां
पत्नीसंयाजार्थं गार्हपत्यं प्रतिगमनं तत्परिक्रमणे उपवेशनं च, 190- सोम्य-
यागः [अध्वर्युकर्तृकः सोमपुरोनुवाक्याप्रैषः, होतृकर्तृकः सोमपुरोनुवाक्यापाठः,
अध्वर्युकर्तृकं जुहूवा स्रुवेण आज्यस्य ग्रहणम्, आश्रावणम्, अग्नीत्कर्तृकं प्रत्या-
श्रावणम्. अध्वर्युकर्तृकः सोमयाज्याप्रैषः, होतृकर्तृकः सोमयाज्यापाठः, वषट्कारा-
नुमन्त्रणम् आज्यालम्भः, अध्वर्युकर्तृको हविषो गार्हपत्येऽग्नौ प्रक्षेपः]. 191-
त्वष्टृयागः, 192- अन्तर्धानिकप्रयोगः, 193- देवपत्नीयागः, 194- अन्त-
र्धानिकापनयनम्. 195- अग्निगृहपतियागः, 196- आज्येडाभक्षणादिकम्.
197- अग्न्यादभ्यात्प्रीतिमद्देवताकः संस्रवहोमः, 198- दक्षिणाग्नौ अग्निरक्षो-
पतिहोमः, 199- सरस्वत्यै आग्निगन्धे होमः, 200- पिष्टलेपहोमः, 201-
पत्नीकर्तृको वेदिविमोको योक्त्रविमोकश्च, 202- होतृकर्तृकं वेदस्तरणम्, आस्तीर्ये
संस्थाप्य आहवनं निर्गमं च, 203- अध्वर्युकर्तृकः समिष्टयजुर्होमः, बर्हिर्होमश्च,
204- अध्वर्युकर्तृकं प्रणीतानिनयनम्, 205- कपालक्षेपः, 206- पूर्णपात्रनिनयनम्.
207- यजमानकर्तृकं पूर्णपात्रनिनीतजलस्पर्शो मुखमार्जनं च, 208- यजमानकर्तृकं विष्णु-
क्रमणम्. 209- यजमानकर्तृकमेव स्वभागावेक्षणम्, सूर्यावेक्षणम्. प्राच्यावेक्षणम्, सौ-
क्षणम्. स्वावृदावर्तनम्, गार्हपत्योपस्थानम्. पुनः स्वावृदावर्तनम्, प्राग्गमनम्.
आशीःप्रार्थनम्, व्रतविसर्जनम्. स्वभागप्राशनम्. स्थ च, 210- ब्रह्मकर्तृकं स्वभागप्राश

211- अध्वर्युकर्तृको ब्राह्मणतर्पणप्रैषः, यजमानकर्तृकं ब्राह्मणतर्पणम्, 212- ब्रह्मकर्तृकं कर्मापवर्गेऽभिधानम्[1], इति ।

पूर्णमासेष्टिप्रयोगश्चैवं[2] भवति

उपवसथदिने यागदिन एव वाऽध्वर्युर्यजमानो वा[3] आहवनीयवर्जं पञ्चभू-संस्कारान् कृत्वा[4] पूर्णमासेष्ट्यर्थं गार्हपत्यादाहवनीयमुद्धरामीति मनसि सङ्कल्प

---

1- "संस्थिते यज्ञे ब्राह्मणान्तर्पयितवै ब्रूयात्" इति [मा०श्रौ०सू० 1/7/3/28]. श्रुतेः कर्मापवर्गेऽभिधानानन्तरमेव ब्राह्मणतर्पणप्रैषः करणीय इति प्रतीयते. तथापि वैशिष्ट्यबुद्ध्यै यज्ञस्य तौ स्थलत्वात् शाखान्तराच्चैवं क्रियते ।

2- पञ्चदश्याः प्रथमे पादे पर्व भवति तर्हि पूर्वां चतुर्दशीं युक्तां स्वीकृत्य तामेव चतुर्दशीं पौर्णमासीकृत्य तत्राऽग्न्यन्वाधानादिकं व्रतग्रहणादिकं च कुर्वीत पञ्चदश्यां पूर्णमास्यां कुर्वीताथवा पञ्चदश्यामेवाग्न्यन्वाधानादिकं व्रतग्रहणादिकं च कृत्वा तत्र एव पूर्णमासयागं कुर्वीत. यदि पञ्चदश्यां द्वितीयादिपादे पर्व भवति तर्हि पञ्चदश्यामेवाऽग्न्यन्वाधानादिकं कृत्वा प्रतिपदि पूर्णमासयागं कुर्वीत इति "पूर्वां पौर्णमासीमुत्तरां वोपवसेत्" इति. "युक्ते वा" इति च सूत्रयोः [का०श्रौ०सू० 2/1/1, 2/1/16] तद्भाष्यादीनां च पर्यालोचनात् प्रतीयते ।

3- का० श्रौ० सू० - 2/1/2.

4- "परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमादधाति" [पारस्करगृह्यसूत्रे 1/1/2] इत्युक्ताः पञ्च भूसंस्काराः "अग्न्यर्थाः इति कर्कोपाध्यायाः । तेन गृह्याग्नेः स्थापनं यत्र तत्रैते कर्तव्याः, अतः श्रौताग्निस्थापनेऽपि कर्तव्याः" इति गदाधरः । वस्तुतस्तु अग्निविहरणे पञ्चभूसंस्कारा अनावश्यकाः प्रतीयन्ते ।

गार्हपत्यात् कांस्ये ज्वलन्तमग्निमुद्धृत्य नीत्वा आहवनीयायतने प्राञ्चं स्थापयति[1] । एवमेव केनचित्पात्रेण दक्षिणाग्निमुद्धृत्य[2] दक्षिणाग्न्यायतने स्थापयति । ततः षड् समिधो दक्षिणहस्तेन गृहीत्वा स्रुचं च सव्यहस्तेन गृहीत्वा[3] आहवनीयसमीपे गत्वा [प्राङ्मुखः "ममाग्ने[4] वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम" इति मन्त्रेण प्रथमां तूष्णीं द्वितीयां समिधमादधाति । एवमेव गार्हपत्ये दक्षिणाग्नौ च । अथवा भूरिति गार्हपत्ये एकां समिधं तूष्णीं द्वितीयाम्, भुव इति दक्षिणाग्नावेकां तूष्णीं द्वितीयाम्, स्वरिति आहवनीये एकां तूष्णीं द्वितीयामादधाति[5] । अथवा तूष्णीमेव द्वे समिधौ गार्हपत्ये[6] तत आहवनीये ततो दक्षिणाग्नावादधाति[7] ।

ततः पूर्णमासकर्मपर्यन्तमहं मांसमैथुने वर्जयिष्ये इति यजमानः सङ्कल्पं कुरुते तन्मन्त्रानुच्चारयति च । ततो यजमानः शिखावर्जं केशाननुवापयते न वा । श्मश्रु च

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अग्नीनामजस्रत्वे [का०श्रौ०सू० 4/13/5] तु एतद् विहरणं नैव भवति ।
2- चातुष्प्राश्यपचनस्यैवान्वाहार्यपचनत्वे [का०श्रौ०सू० 4/8/13] तु तस्य नित्यं धारणीयत्वात् [का०श्रौ०सू० 4/13/4] एतद्विहरणमपि नैव भवति ।
3- "दक्षे सव्ये वेदेनोपयमनम्, स्रुवेणान्यत्र" [का०श्रौ०सू० 1/10/6-7] इति परिभाषयात्र स्रुचोपग्रहणं प्राप्तं मन्यन्ते ।
4- का० श्रौ० सू० - 2/1/3.
5- ,, - 2/1/6.
6- ,, - 2/1/7.
7- इदं समिदाधानकर्म "अन्वाधानम्" इत्युच्यते । एवमन्वाहितानामग्नीनां कर्मपर्यन्तं धारणं भवति ।

तत आहवनीयागारे गार्हपत्यागारे वा भूमावेव कटादिकमास्तीर्य यजमानः शेते ।

ततः प्रातरपि विहृते एवाग्नौ यजमानः स्वयमेवाग्निहोत्रं जुहोति ।

ततः पूर्णमासेष्टितन्त्रं प्रक्रमते[1] ।

तत्र यजमानः आसनान्युपकल्पयति[2] ।

ततो विहारस्योत्तरत उदङ्मुख उपविश्य यजमानस्तत्रैव प्राङ्मुखमु-पविष्टं ब्रह्माणं "भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे[3]" इति वृणीते ।

ततो ब्रह्मा "अहं भूपतिरहं भुवनस्य पतिरहं महतो भूतस्य पति-र्भूर्भुवः स्वर्देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप् प्रजा-पतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम्[4]"

---

1- "उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमति प्रागुदयादमावास्यायाः"
- इत्यापस्तम्बः 1/15.

2- आसनानि च ब्रह्मयजमानयोः कृते, ब्रह्मो-पवेशनार्थमाहवनीयस्य दक्षिणत एकम्, तस्य पश्चिमतो यजमानोपवेशनार्थमेकम्, अपरं पत्न्याश्चोपवेशनाय गार्हपत्यस्योत्तरत एकमाहवनीयस्योत्तरत-श्चैकमिति बौधायनि ।

3- का० श्रौ० सू० - 2/1/18.

4- ,, - 2/1/19.

इति जपति ।

ततो ब्रह्मा[1] "वाचस्पते यज्ञं गोपाय[2]" इति प्राह ।

ततश्च ब्रह्मा उत्थायाहवनीयं पूर्वेणापरेण वा प्रदक्षिणतः आगत्य ब्रह्मासनं प्रतिगच्छति । ब्रह्मासनसमीपे उत्तरतः प्राङ्मुखः स्थित्वा "अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः[3]" इति मन्त्रेण ब्रह्मसदनमीक्षते । ततो ब्रह्मसदनादेकं तृणं गृहीत्वा नैर्ऋत्यां दिशि "निरस्तः परावसुः सह तेन यं द्विष्मः[4]" इति मन्त्रेण निरस्यति । ततो ब्रह्मा "इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्यै[5]" इति मन्त्रेण ब्रह्मसदने आहवनीयाभिमुख उपविशति ।

आनुयाजप्रसवाद् ब्रह्मा वाचं यच्छति[6], अध्वर्युश्च[7] ।

ततोऽध्वर्युर्वारणं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तेनोदपात्रेण सह तं चमसमासिच्य गार्हपत्यमुत्तरेण पूर्वमुखं स्वस्ते आसने निधाय "कृतस्त्वा भूत करिष्यामि[8]" इति मन्त्रेण चमसमुदकमानयते । ततो "ब्रह्मन्नपः प्रणेष्यामि[9]" इति ब्राह्मणमनुज्ञां प्रार्थयते, "यजमान, वाचं यच्छ[10]" इति यजमानं चाह ।

---

1- वाचस्पतिर्वै ब्रह्मा प्राहेति देवयाज्ञिकः, यजमान इति कर्कः ।

| | | | | | |
|---|---|---|---|---|---|
| 2- | का०श्रौ०सू० | - 2/1/20. | 3- | का०श्रौ०सू० | - 2/1/22. |
| 4- | .. | - 2/1/23. | 5- | .. | - 2/1/24 - 2/2/1. |
| 6- | .. | - 2/2/2. | 7- | .. | - 2/2/7. |
| 8- | .. | - 2/3/1. | 9/10- | .. | - 2/3/2. |

ततो ब्रह्मा "प्रणय यज्ञं देवतावर्धयत्वन्नाकस्य पृष्ठे यजमानो-ऽस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च धेहि[1]. ओ३म् प्रणय"[2] इति प्रणीताः प्रणीति[3] (प्रणीताप्रणयनमनुजानाति) ।

ततोऽध्वर्युर्गार्हपत्यस्योत्तरतो निहितं चमसमादाय गत्वाऽऽहवनीय-मुत्तरेण बर्हिर्वेदि दर्भेषु प्रणीताचमसं "कस्त्वा युनक्ति स त्वा युनक्ति कस्मै-त्वा युनक्ति तस्मैत्वा युनक्तु"[4] इति मन्त्रेण निदधाति, दर्भैराच्छादयति च।

ततोऽध्वर्युराहवनीयं परिस्तृणाति, ततो गार्हपत्यं ततो दक्षिणा-ग्निम् (गार्हपत्ये हविषां श्रपणीयत्वादिन्धनेन तं प्रज्वलयति च) ।

ततोऽध्वर्युर्यजमानो वा गार्हपत्याग्नेर्दक्षिणाग्नेर्वा पश्चादुत्तरतो वा प्राक्संस्थमुदक्संस्थं वा शूर्पाग्निहोत्रहवणि, स्फ्यकपालम्[5], शम्याकृष्णाजिनम्, उलूखलमु-सलम्, दृषदुपलम्[6], उदकमण्डलुः, पवित्रार्थकुशौ च, पवित्रच्छेदनकुशांश्च आज्यनिधानपात्रं

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- एतावन्तं मन्त्रमुपांशु पठति, "उपांशु प्रयोगः श्रुतेः" (का०श्रौ०सू० 1/3/10) इति वचनात् ।
2- "ओ३म् प्रणय" इति उच्चैरुच्चारयति, "न सम्प्रैषाः" (का०श्रौ० सू० 1/3/11) इति वचनात् ।
3- का० श्रौ० सू० - 2/2/8.
4- मा० वा० शु० य० वे० मं० सं० - 1/6.
5- कपालानामनेकत्वेऽपि तत्समुदायस्यैकत्वमादायैवमुक्तं बोध्यम् ।
6- एतदन्तानि पञ्च युग्मानि एवमेव समाम्नातानि (ना०श्रौ०प०सू० 1/1/1/22; का० श्रौ० सू० 2/3/8) इति एतेषां पदार्थानामेवमेव युग्मता सम्पा-

. . . अग्रिमपृष्ठेऽपि

न्यै योक्त्रमुक्तं वस्त्रान्तरेणावेष्टितं स्थापयति । तदभावे गार्हपत्यस्य पश्चिमत एव प्राग्ग्राकुशां बाहुविच्छिन्नाग्रकुशां पात्रीं स्थापयति[1] ।

ततोऽध्वर्युः "कर्मणे वां वेषाय वाम्"[2] [आदत्ते][3] इति मन्त्रेण शूर्पमग्निहोत्रहवणीं चादत्ते[4], हविरासादनपर्यन्तं हविष्कृदाह्वानपर्यन्तं वा वाचं च यच्छति ।

ततोऽध्वर्युः "प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः"[5] इति मन्त्रेण "निष्टप्तं रक्षो निष्टप्ता अरातयः"[6] इति मन्त्रेण वा शूर्पाग्निहोत्रहवण्यौ गार्हपत्ये प्रतपति । ततोऽप उपस्पृशति[7] ।

ततोऽध्वर्युः शूर्पाग्निहोत्रहवण्यौ गृहीत्वैवोदकमनु पादाय

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. पात्र्या अप्रस्तावात् स्फ्यस्य प्रैषे देवयाज्ञिकेनान्यथा प्रतिपादितमपि "स्फ्यमुपर्यधस्तादुपोह्य गृह्णीयात्" इति श्रुतेः [मा० श० प० ब्रा० 1/1/2/8] हविर्ग्रहणकाले तथा करणीयमिति प्रतीतेः, देवयाज्ञिकपद्धत्युदाहृतोऽस्तरीय-पुनस्तु देवयाज्ञिकोक्तमनुक्तम् ।
2. मा० वा० शु० य० वे० मा० सं० - 1/6.
3. एतदध्याहृतम् ।
4. अत्र आदत्त इति नित्यानन्दप्रयोगे पाठः, "आङो दोऽनास्यविहरणे" इति [1/3/20] पाणिन्युक्तेः ।
5. मा० वा० शु० य० वे० मा० सं० - 1/7.
6. तत्रैव ।
7. एतदप उपस्पर्शनं मन्त्रस्य रक्षो देवताकत्वस्याभावात् कात्यायनपरिभाषया [का०श्रौ०सू० 1/10/14] कर्मापेक्षं भाति, अथवा वार्त्तिकं रक्षोदैवत्वं मन्त्रस्य ।

तूष्णीं हविर्गृहीत्वा "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नीषोमाभ्यां जुष्टं गृह्णामि[1]" इति मन्त्रेणाग्नीषोमीयपुरोडाशाय[2] प्रथमं मुष्टिमग्निहोत्रहवण्यां प्रक्षिपति । एवं मन्त्रेणैव द्वितीयं तृतीयं च मुष्टिं प्रक्षिप्य तूष्णीं चतुर्थं प्रक्षिपति । ततः शूर्पे स्रुगुत्तरसद्भ हविः प्रक्षिप्य "भूताय त्वा नारातये[3]" (अभिमृशामि[4]) इति मन्त्रेण शकटे परिशिष्टं हविरभिमृशति । ततः "स्वरभिविख्येषम्[5]" इति मन्त्रेण प्राचीमीक्षते । ततो "दृंहन्तां दुर्याः पृथिव्याम्[6]" इति मन्त्रेण शूर्पाग्निहोत्रहवण्यौ उदकमण्डलुं चादाय शकटादवरोहति[7] ।

तत "उर्वन्तरिक्षमन्वेमि[8]" इति मन्त्रेणाध्वर्युः शूर्पाग्निहोत्रहवण्यावादाय उदकमण्डलुमप्यादाय गार्हपत्यस्य समीपे उत्तरतो गच्छति[9] । ततः सहविष्कं शूर्पं "पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने-

---

1- मा० वा० शु० य० वे० म० सं० - 1/10.
2- दर्शे तु अमावास्यायाम् "इन्द्राग्निभ्याम्" इति मन्त्रं प्रयुज्य ऐन्द्राग्नपुरोडाशाय मुष्टिं गृह्णाति । सान्नाय्यवतां तु एतद् हविर्ग्रहणं नैव भवति ।
3- मा० वा० शु० य० वे० म० सं० - 1/11.
4- "परिमृशामि" इत्यध्याहार्यमिति कर्कः, "परन्तु अभिमृशतीति विधेरभिमृशामीति युक्तम्" इति महीधर इति वेबरः ।
5/6- मा० वा० शु० य० वे० म० सं० - 1/11.
7- शकटाभावे पात्रीतो हविर्ग्रहणं कार्यम्, हविर्धानरोहणमन्त्राः पात्रीपक्षे अपनेयाः (मा०श्रौ०सू० 1/1/2/6; का०श्रौ०सू० 2/3/28-29)
8- मा० वा० शु० य० वे० म० सं० - 1/11.
9- आहवनीयस्यैव अपात्वे (का०श्रौ०सू० 1/8/34-35) आहवनीयस्य समीपे उत्तरतो गच्छति ।

एकस्य "त्वा"[1] इति मन्त्रेण दक्षिणाग्नेः [गार्हपत्यस्याहवनीयस्य वा] परिचमसः सादयति ।

ततोऽध्वर्युः "पवित्रे स्थो वैष्णव्यौ"[2] इति मन्त्रेण यथालक्ष-दार्यं[3] कुशैः कुशौ छिनत्ति ।

ततोऽध्वर्युर्वाग्यतोऽन्यतरस्मात् आनीय ताभ्यां पवित्राभ्यां "सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः"[4] इति मन्त्रेणाप उत्पुनाति । ततः पवित्रे हविर्ग्रहण्यामेव स्थापयति । ततो हविर्ग्रहणी सव्ये हस्ते कृत्वा "देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिं सुधातुं यज्ञपतिं देवयुवम् । युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रम-वृणीध्वं वृत्रतूर्ये"[5] इति मन्त्रेण दक्षिणहस्तेनोदीङ्गयति । ततः "प्रोक्षिताः स्थ"[6] इति मन्त्रेण हविर्ग्रहणीस्थाभिरेवाद्भिस्तासामेव हस्तेनैव प्रोक्षणं करोति ।

ततोऽध्वर्युः "ब्रह्मन् हविः प्रोक्षिष्यामि"[7] इति ब्रह्माणं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० बा० कु० प० वे० म० के - 1/11.
2- .. - 1/12.
3- कुशद्वयं वामहस्ते कृत्वाऽङ्गुष्ठः प्रादेशमात्रं परिमाय कुशे तयोरुपरि कुशान्-मुदग्रं निधाय तत् कुशद्वयं तयोः कुशयोर्मूलभागेन प्रादक्षिण्येन परिवेष्ट्य तयोः प्रादेशमात्रमग्रभागं वामहस्ते कृत्वा अवशिष्टं मूलभागं त्रिवृतीकृतं कुशं च दक्षिणहस्तेन समादाय नखात् छिन्दन्तीति सम्प्रदायः ।
4- मा० बा०कु०प०वे०म०के - 1/12.
5- तत्रैव - 1/12-13. 6- तत्रैव - 1/13.
7- एतद् वाक्यं श्रुतौ सूत्रे च नोपलभ्यते ["ब्रह्मन्नपः प्रोक्ष्यामि" इति तु प्राप्यते, का० श्रौ० सू० 2/3/2]

हविः प्रोक्षणानुज्ञां प्रार्थयते ।

ततो ब्रह्मा "प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि,[1] ओ३म् प्रोक्ष"[2] इति हविः प्रोक्षणं प्रसौति ।

ततोऽध्वर्युरग्निहोत्रहवण्याः सकाशादुदकं हस्तेनादाय "अग्नये त्वा जुष्टम् प्रोक्षामि"[3] इति प्रथमं हविः प्रोक्षति ततो द्वितीयं हविः "अग्नीषोमाभ्यान्त्वा जुष्टम् प्रोक्षामि"[4] इति प्रोक्षति[5] । ततो न्युब्जतयाऽऽसादितानि पात्राणि उत्तानानि कृत्वा "दैव्याय कर्मणे शुन्धध्वम् देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि"[6] इति सर्वाणि पात्राणि[7] प्रोक्षति । ततः प्रणीताहवनीयान्तराले प्रोक्षणीर्निदधाति ।

ततोऽध्वर्युरेव "शर्मासि"[8] इति मन्त्रेण कृष्णाजिनमादत्ते पात्रेभ्यः पश्चिमे देशे गत्वा "अवधूतं रक्षोऽवधूता अरातयः"[9] इति मन्त्रेण कृष्णाजिनम-

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- एतावदुक्त्वा पठित्वा "ओ३म् प्रोक्ष" इत्युच्चैः पठति ।

2- का० श्रौ० सू० - 2/2/10, 2/2/14, 2/2/8.

3/4- मा० वा० शु० य० वे० म० सं० - 1/13.

5- दर्शेष्टौ तु अमावास्यायाम् "इन्द्राग्निभ्यान्त्वा जुष्टम् प्रोक्षामि" इति द्वितीयं हविः प्रोक्षति (का० श्रौ० सू० - 2/3/37)

6- मा० वा० शु० य० वे० म० सं० - 1/13.

7- एकया हि प्रोक्षणक्रियया सर्वाणि पात्राणि युगपत् प्रोक्षणीयानीति देवयाज्ञिकः प्रतिपात्रं पृथक्पृथक् प्रोक्षणमिति कर्कः ।

8/9- मा० वा० शु० य० वे० म० सं० - 1/14.

धुनोति च । ततोऽप उपस्पृशति[1] । तत उत्तरेण गार्हपत्यमुत्तरतो[2] वा "अदित्या-
स्त्वगसि प्रति त्वादितिर्वेत्तु[3]" इति मन्त्रेण प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणाति।
सव्येन कृष्णाजिनमविधुन्वन्नेव दक्षिणहस्तेनोलूखलमाहृत्य कृष्णाजिनस्योपरि "अद्रि-
रसि वानस्पत्यः प्रति त्वादित्यास्त्वग्वेत्तु[4]" इति मन्त्रेण "ग्रावासि
पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु[5]" इति मन्त्रेण वा निदधाति । ततः
शूर्पस्थे हविषी निर्वपित्वा शूर्पेणोलूखले सव्यहस्तेनावपते "अग्नेस्तनूरसि वाचो
विसर्जनं देववीतये त्वा गृह्णामि[6]" इति मन्त्रेण हविरावपति । ततोऽध्वर्युरेव
"बृहद्ग्रावासि वानस्पत्यः[7]" इति मन्त्रेण मुसलं हस्तेन गृह्णाति । ततः "स
इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व[8]" इति मन्त्रेण मुसलमुलूखले प्रवेश्य
कण्डने प्रवृत्तः कण्डनं कुर्वन्नेव "हविष्कृदेहि, हविष्कृदेहि[9], हविष्कृदेहि[10]" इति
हविः कण्डनकर्त्रीं पत्नीं हविः कण्डनकर्तारमाग्नीध्रं वा हविषः कण्डनायाह्वयति,
वाचं च विसृजते ।

तदाह्वानानन्तरमेवाग्नीध्र उपविष्टः सन् "कुक्कुटोऽसि मधु-
जिह्व इषमूर्जमावद त्वया वयं सङ्घातं सङ्घातं जेष्म[11]" इति मन्त्रेण

---

1- एतद् अपामुपस्पर्शनं कात्यायनपरिभाषया प्राप्तम् [का०श्रौ०सू० 1/10/14]
2- देशानियमद्योतनाय विकल्पो दर्शितः ।
3/4/5- मा० वा० शु० य० वे० म० सं० - 1/14.
6/7/8/9- ,, - 1/15.
10- एतद् तृतीयं वाक्यं मन्त्रसंहितायां न पठ्यते, [हविष्कृदेहीति
त्रिराह्वयति" इति वचनात् [का०श्रौ०सू० 2/4/13] पठितम् ।
11- मा० वा० शु० य० वे० म० सं० - 1/16.

शम्यया दृषदं कुट्टयित्वा पुनरपि तेनैव मन्त्रेण दृषदं कुट्टयति । ततस्तेनैव मन्त्रेणोपलामपि कुट्टयति ।

ततः पत्नी वाऽग्नीद् वा[1] अध्वर्युसमीपे गत्वा कण्डनं करोति ।

व्रीहिषु यवेषु वा तुषयुक्तेषु अध्वर्युः[2] "वर्षवृद्धमसि"[3] इति मन्त्रेण शूर्पमादाय "प्रति त्वा वर्षवृद्धं वेत्तु"[4] इति कण्डितं हविरुलूखलाद् बहिर्निष्काश्य तूष्णीं शूर्पे निदधाति । ततः "परापूतं[६] रक्षः परापूता अरातयः"[5] इति मन्त्रेण निष्पुनाति । ततो "वायुर्वो विविनक्तु"[6] इति मन्त्रेण तण्डुलेभ्योऽकण्डितान् व्रीहीन् यवान् वा विविनक्ति[7] । ततस्तण्डुलान् निधायाकण्डितान् व्रीहीन् यवान् वा पुनरुलूखले आवपति ।

ततो हविष्कृत् पुनः कण्डति[8] ।

ततोऽध्वर्युः पुनरुलूखलाद् हविर्निष्काश्य शूर्पे कृत्वा निष्पुनाति ।

---

1- "अतः पत्न्यवहन्त्यग्नी वा" - इति का० श्रौ० सू० 2/4/14.

2- शूर्पादानविसर्जननिष्पवनानि यजमानस्य कर्ताऽग्नीद् वा पत्नी वापि कुर्यात् इति विद्याधरगौडः [का०श्रौ०सू० 2/4/16-18]. अध्वर्युरिति देवयाज्ञिकः ।

3/4/5/6- मा०वा०(शु०य०वे०मा०सं०) - 1/16.

7- श्रुतौ सूत्रे च विवेचनस्य तुषप्राशनात् पश्चादुक्तत्वेऽपि पाठक्रमादर्थक्रमस्य बलीयस्त्वात् तुषप्राशनात् प्रागेव विवेचनं विविक्तानां पुनः कण्डनं ततः सर्वेषां तुषाणां प्राशनमिति पद्धतिकाराः ।

8- कण्डनस्य दृष्टार्थत्वात् सर्वेषां व्रीहीणां यवानां वा तुषविमोकनं यावता कालेन सम्पद्यते तावत्कालपर्यन्तं कण्डनं कार्यम् ।

ततः सतुषान् "अवधूतं रक्षः"[1] इति मन्त्रेणोत्करे प्रास्यति । ततोऽप उपस्पृशति[2] ।

ततोऽध्वर्युरेव शूर्पस्थान् तण्डुलान् पात्र्यामोप्य "देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना"[3] इति मन्त्रेणाभिमन्त्रयते[4] ।

ततोऽध्वर्युः फलीकरणार्थं तण्डुलानुलूखले आवपति । ततो "देवेभ्यः शुन्धध्वम् देवेभ्यः शुन्धध्वम्"[5] इति मन्त्रेण तूष्णीमेव वा तान् कण्डयित्वोज्ज्वलान् करोति । ततस्तण्डुलान् शूर्पे उद्वपति, निष्पुनाति, कणान् पृथक् कृत्य कस्मिंश्चित् पात्रेऽवधाय निदधाति च । एवमेव पुनः द्विः करोति ।

ततः हविः पेषणं कपालोपधानं च सहैव क्रियेते[6] ।

ततोऽध्वर्युः[7] "शर्मासि"[8] इति मन्त्रेण कृष्णसारमृगाजिनमादाय

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० म० सं० - 1/16.
2- अपां स्पर्शनं कात्यायनपरिभाषा [1/10/14] द्रष्टव्य ।
3- मा० वा० शु० य० वे० म० सं० - 1/16.
4- अनामिकाग्रेण स्पृष्ट्वा विलोक्य वाऽनुमन्त्रणीयमनुमन्त्र्यमिति छन्दोगपरिशिष्टे [3/1/19]
5- का० श्रौ० सू० - 2/4/20; आपस्तम्बस्तु "देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वम् इति शुक्लीकृतान् करोति तूष्णीं वा" इत्याह [1/21]
6- का० श्रौ० सू० - 2/4/24; मा० श० प० ब्रा० - 1/2/1/1-2.
7- "पेषणोपधानयोः कपालानामुपधानं बहिरङ्गत्वाद्गौणः, तण्डुलानां पिष्टकरणमन्तरङ्गत्वान्मुख्यः । एवं गुणस्य मुख्यः" इति महादेव इति वेबरः ।
8- मा० वा० शु० य० वे० म० सं० - 1/19.

पात्रेभ्यः पश्चिमत्र देशे गत्वा "अवधूतं रक्षोऽवधूता अरातयः"[1] इति मन्त्रेण तदवधूनोति । ततोऽपि उपस्तृणाति । तत उत्तरेण गार्हपत्यमुत्तरदेशे वा[2] "अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु"[3] इति मन्त्रेण प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणाति। सव्यहस्तेन कृष्णाजिनमवगृह्य दक्षिणेन हस्तेन दृषदमादाय प्राग्ग्रीवां दृषदं "धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु"[4] इति मन्त्रेण कृष्णाजिनस्योपरि निदधाति । ततो "दिवस्कम्भनीरसि"[5] इति मन्त्रेण दृषदः पश्चाद्भागेऽधस्तादुदग्रां शम्यां प्रेरयति (प्रवेशयति) । ततो "धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु"[6] इति मन्त्रेण दृषदि उदगग्रामुपलामत्यादधाति । ततो "धान्यमसि धिनुहि देवान्"[7] इति मन्त्रेण दृषदि तण्डुलानोप्य "प्राणाय त्वा (पिनष्मि)"[8] इति मन्त्रेण पिनष्टि, तत "उदानाय त्वा (पिनष्मि)"[9] इति मन्त्रेण पिनष्टि, ततो "व्यानाय त्वा (पिनष्मि)"[10] इति च मन्त्रेण पिनष्टि। ततः सर्वेषु तण्डुलेषु पिष्टीकृतेषु[11] "दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना"[12] इति मन्त्रेण दृषदि स्थितं पिष्टमुपलया कृष्णाजिने प्रोहति । तत्र "चक्षुषे त्वा ([illegible])"[13] इति मन्त्रेण कृष्णाजिने पतितं पिष्टं निरीक्षते । ततः पवित्रे हविष्पात्रस्थानानीय कृष्णा-

---

1- मा० वा० शु० य० वे० मा० सं० - 1/19.

2- दैवयाज्ञिकपद्धत्यनुसारम् ।

3/4/5/6- मा० वा० शु० य० वे० मा० सं० - 1/19.

7/8/9/10- ,, - 1/20.

11- "दासी पिनष्टि पत्नी वा, अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि" इति आ
स्तम्बः (1/21) प्रतिपादयतीति पिष्टीकरणार्थमुत्तरं पेषणमन्त्रमिति प्रती

12/13- मा० वा० शु० य० वे० मा० सं० - 1/20.

मन्त्रेण प्रथमं कपालमुपदधाति । ततः सव्यहस्ताङ्गुल्याङ्गुलौ प्रथमकपाले "अग्ने ब्रह्म गृभ्णीष्व[1]" इति मन्त्रेणाङ्गारं निदधाति । ततो "धरुणमस्यन्तरिक्षं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय[2]" इति मन्त्रेण प्रथमकपालात् पश्चादन्यत् कपालमुपदधाति[3] । ततो "धर्त्रमसि दिवं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय[4]" इति मन्त्रेण प्रथमकपालस्य पुरस्तादन्यत् कपालमुपदधाति । ततो "विश्वाभ्यस्त्वाशाभ्य उपदधामि[5]" इति मन्त्रेण प्रथमकपालस्य दक्षिणतोऽन्यत् कपालमुपदधाति । ततः "चितस्थोर्ध्वचितः[6]" इति मन्त्रेण[7] चतुर्थात् कपालात् प्राक् पञ्चमं कपालमुपदधाति । ततः "चितस्थोर्ध्वचितः" इत्यनेनैव मन्त्रेण चतुर्थात् कपालात् पश्चात् षष्ठं कपालमुपदधाति । ततः पुनः "चितस्थोर्ध्वचितः" इत्यनेनैव मन्त्रेणोत्तरतो द्वितीयप्रथमकपालाश्लेषेण सप्तमं कपालमुपदधाति। ततः पुनरपि "चितस्थोर्ध्वचितः" इत्यनेनैव मन्त्रेणोत्तरत एव प्रथमतृतीयकपालाश्लेषेणाष्टमं कपालमुपदधाति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1/2- मा० वा० शु० य० वे० म० सं० - 1/18.

3- सव्याङ्गुल्ये कपाले "अग्ने ब्रह्म गृभ्णीष्व" इति मन्त्रेणाङ्गारस्य निधानं प्रतिपादितं भवतीति कर्कः, देवयाज्ञिकपद्धतौ तु कथा न प्रतिपादितम्. प्रथमकपाले एवाङ्गारस्योपधानं प्रतिपादितम्. "सव्यहस्तस्य प्रदेशिन्या अङ्गुल्ये कपाले अङ्गारमुपवेश्य निदधातीत्यपि प्रथमकपालकर्मोऽयं न द्वितीयादिकपालानाम्. कुतः ? अङ्गुल्यादङ्गाराभावात्" इति महादेव इति वेबरः ।

4/5/6- मा० वा० शु० य० वे० म० सं० - 1/18.

7- पञ्चमादीनां कपालानां तूष्णीं चोपधानम् - का०श्रौ०सू० 2/4/34.

ततश्चाग्नेरेव गार्हपत्यस्य पश्चिमत उत्तरभागेऽग्नीषोमीय पुरोडाशस्यैकादशानां कपालानामुपधानं करोति । तत्र च "आदेव-यजं वह[1]" इति मन्त्रेण प्राक्प्रेरितादङ्गारेभ्य एकमङ्गारमानीय गार्हपत्यस्य पश्चिमत उत्तरभागेऽग्नीषोमीयपुरोडाशस्यैकादशानां कपालानां मध्ये मध्यमस्य कपालस्योपधानस्य स्थाने संस्थाप्य तस्योपरि "ध्रुवमसि पृथिवीं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय[2]" इति मन्त्रेण मध्यमं कपालमुपदधाति । ततः सव्यहस्ताङ्गुष्ठाङ्गुली मध्यमकपाले "अग्ने ब्रह्म गृभ्णीष्व[3]" इति मन्त्रेणाङ्गारं निदधाति । ततो "धरुणमस्यन्तरिक्षं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय[4]" इति मन्त्रेण मध्यमकपालात् पश्चादन्यत् कपालमुपदधाति । ततो "धर्त्रमसि दिवं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय[5]" इति मन्त्रेण मध्यमकपालस्य पुरस्तादन्यत् कपालमुपदधाति । ततो "विश्वाभ्यस्त्वाशाभ्य उपदधामि[6]" इति मन्त्रेण मध्यमकपालस्य दक्षिणतोऽन्यत् कपालमुपदधाति । ततश्चतुर्थकपालस्य पूर्वतः षष्ठकपालोपधानपर्यन्तं मुक्त्वा "चितः स्थोर्ध्वचितः[7]" इति मन्त्रेण[8] पञ्चमं कपालमुपदधाति । ततश्चतुर्थ-पञ्चमकपालान्तरे षष्ठं कपालमपि "चितः स्थोर्ध्वचितः" इत्यनेनैव मन्त्रेणोपदधाति । ततश्चतुर्थकपालस्य पश्चिमतः सप्तमं कपालमपि "चितः स्थोर्ध्वचितः" इत्यनेनैव

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1/2- मा० वा० शु० य० वे० म० सं० - 1/17.

3/4/5/6/7- ,, - 1/18.

8- "पञ्चमादीनां कपालानां तूष्णीं वोपधानम्"
- का० श्रौ० सू० 2/4/34.

मन्त्रेणोपदधाति । ततः सप्तमस्य कपालस्य परिकल्पोऽष्टमं कपालमपि[1] "त्रित-
स्योद्गृभ्णन्तः" इत्यनेनैव मन्त्रेणोपदधाति[2] । ततो द्वितीयस्य कपालस्योत्तरतो

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- एवमुपधाने च मध्ये त्रीणि कपालानि, दक्षिणतः पञ्च, उत्तरतश्च त्रीण्येव कपालानीति कपालपङ्क्तेः कूर्माकारपुरोडाशानुकूलता स्यादिति कपालानि कानिचिद्बृहन्ति कानिचित् स्थूलानि कार्याणि; तदुक्तं द्वितीयखण्डपार्श्वे -

"समानि चतुरस्राणि द्व्यङ्गुलानि समन्ततः ।
कुर्याद्वै कपालानि कपालं पाणिसम्मितम् ॥
द्वे कपाले त्रिकादीनि कुर्यात् तदनुमानतः ।
एकमादितमादेशं त्रिकादोत्सर्गिके सदा ॥"

इति [श्लो० 74-76]

2- दैवयाज्ञिकेन च कात्यायनश्रौतसूत्रभाष्ये कपालपङ्क्तेः कूर्माकारपुरोडाशानुकूलतायाः सम्पादनस्य प्रकारो विस्तरेण प्रतिपादितः, यथा -

एतानि सर्वाणि कपालानि निरन्तराणि संश्लिष्टानि समानि चोपधेयानि यथान्तरा भूमिर्न दृश्यते । अत्र मध्यमपङ्क्तिस्थकपालानि द्व्यङ्गुलानि समचतुरस्राणि, एवं च षडङ्गुलदीर्घा मध्यमपङ्क्तिः, दक्षिणोत्तरपङ्क्ती तु किञ्चित् ततो न्यूने पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रतीतेर्विरलकपालं प्रथमपिण्डेन तदर्धकपालपङ्क्तेरपि अर्धाद् वृत्ताकारतया कल्प गम्यमानत्वात् । ऐन्द्राग्ने चतुर्थोपधानानन्तरं समविभागेन चत्वारि दक्षिणतश्चत्वार्युत्तरतः । अत्र कपालपङ्क्तीनां मध्यमारभ्याक्रमणं षड-ङ्गुलं वृत्तं कृत्वा ततः प्राक्छेदेन समं द्वेधा विभज्य मध्यमभागस्य तिर्यक्-छेदेन द्वेधा विभागः कार्यः, दक्षिणोत्तरभागयोस्तु खण्डचन्द्राकारयोः पुरोडाशकपालसंख्यानुरोधेन तिर्यग् विभागः, तत्र षट्कपाले दक्षिणो भागो

. . . °अग्निमुखेऽपि

सप्तमं कपालमपि "चितस्थोर्ध्वचितः" इत्यनेनैव मन्त्रेणोपदधाति । ततो ऽ मध्यमस्य [प्रथमस्य] कपालस्योत्तरतो दशमं कपालमपि "चितस्थोर्ध्वचितः" इत्यनेनैव मन्त्रेणोपदधाति । तत्स्तृतीयस्य कपालस्योत्तरत एकादशं कपालमपि "चितस्थोर्ध्वचितः" इत्यनेनैव मन्त्रेणोपदधाति[1] । ततो "भृगूणामङ्गिरसां तपसा तप्यध्वम्[2]" इति मन्त्रेण प्रथमां कपालचितिं ज्वलदङ्गारैरभ्यादधाति। ततो द्वितीयां कपालचितिमपि "भृगूणामङ्गिरसां तपसा तप्यध्वम्[3]" इत्यनेनैव

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

रेखा उत्तरे त्वेकमेव कपालं अर्धचन्द्राकारवृत्तभागप्रमाणम्, सप्तकपाले दक्षिणो भागरेखा उत्तर एका, अष्टाकपाले दक्षिणो भागरेखा उत्तरो रेखा, नव-कपाले दक्षिणचतुर्धा उत्तरो रेखा, दशकपाले दक्षिणचतुर्धा मध्यमोत्तरो रेखा, एकादशकपाले दक्षिणः पञ्चधा उत्तरो रेखा, द्वादशकपाले दक्षिणः पञ्चधा मध्ये रेखा उत्तरतश्चतुर्धा, त्रयोदशकपाले दक्षिणः षड्धा उत्तरतश्चतुर्धा, मध्यमः सर्वत्रैव; एकं कपालं येषु तत्र पाणिप्रमाणम्; द्विकपाले वृत्तस्य तिर्यगर्धच्छेदेन रेखा विभागः; त्रिकपाले वृत्तस्य तिर्यक् समं रेखा विभागः, चतुष्कपाले वृत्तं समं प्राक्प्रत्यग्दक्षोत्तरभागस्य रेखा विभागो दक्षिणत एकम्, पञ्चकपालेऽपि वृत्तं प्राक्पं रेखापश्चिमोत्तरभागस्य रेखा विभागो दक्षिणस्य रेखा । कपालानि तु यथाप्रयोगेन तथा कल्पयितानि यथा कपालचितिरेषां वृत्तं सम्पूर्येत ।" इति [2/4/37]

1- सौत्री ऐन्द्राग्नपुरोडाशसम्बन्धिनां द्वादशानां कपालानां मध्ये एकादश कपालानि एतमन्त्रोपधीयन्ते, द्वादशं कपालमेकादशस्य कपालस्य पूर्वत उपधीयते ।

2- मा० वा० शु० य० वे० मा० सं० १ 1/18.

3- यद्यपि दर्शपूर्णमासेष्टिप्रयोगे [पृ० 18] कात्यायनेष्टिदीपके नित्यानन्देन न क्रियावृत्तिनापि मन्त्रावृत्तिर्लिखिता, तथापि "प्रतिचिति मन्त्रभेदः" इति देवयाज्ञिकपद्धत्यनुसारम् ।

मन्त्रेण ज्वलद्भिरङ्गारैरवच्छादयति ।

एवं वेदोपवासयोः सैव प्रवर्तमानयोः कालोऽध्वर्युणा तण्डुलेषु पिष्यमाणेषु अग्नीधा च "धृष्टिरसि" इत्यादिना मन्त्रेण ज्वलद्भिरङ्गारैस्ताप्य-मानेषु कपालेषु यजमानः[1] "महीनां पयोऽसि"[2] इति मन्त्रेण पात्रान्तरादाज्य-स्थाल्यामाज्यमानयति । ततो "वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदो-ऽभवस्तेन मह्यं वेदो भूयाः"[3] इति मन्त्रेण वेदं[4] च कुरुते ।

अथ अग्नीत् तु ज्वलद्भिरङ्गारैः कपालचित्योरवच्छादितयोः ततोपसर्जनीरपो[5] गार्हपत्ये[6]ऽधिश्रयति । तत उपसर्जनीषु मन्दतप्तासु जातासु अग्नीत् तथैव स्फ्येन स्रुवमादाय[7] उपसर्जनीस्त्रुवा स्थाल्याध्वर्योर्दक्षिणेन मार्गेणानीय पिष्टानामुपरि क्रियमाणस्य सन्निधानस्याध्वर्योर्दक्षिणहस्तस्योपरि अध्वर्युणा "समाप ओषधीभिः समोषधयो रसेन सं रेवतीर्जगतीभिः पृच्यन्तां सम्मधुमतीर्म्मधुमतीभिः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- ब्रह्माऽऽत्विग्निर्वापं करोतीति कर्ता, यजमान इति देवयाज्ञिको महादेवश्च - का०श्रौ०सू० 2/5/9, 1/3/22.

2- मा० वा० शु० य० वे० मा० सं० - 1/20.

3- ,, - 1/21.

4- का० श्रौ० सू० - 1/3/22-23.

5- उपसृजन्ति पिष्टान्यभिरिति व्युत्पत्त्या पिष्ट संयवनार्था आप उपसर्जन्य इत्युच्यन्ते ।

6- आहवनीयमधिश्रयणत्वाद्गार्हपत्ये एवाधिश्रयति ।

7- पद्धतिकारा अत्र स्रुवस्यादानं प्रतिपादयन्ति, "स्फ्यश्चे साज्ये वेदेनोप-ग्रहणम्, स्रुवेणान्यत्" [का० श्रौ० सू० 1/10/6-7] इति परिभाषयाऽत्र स्रुवस्य प्राप्तिरिति ते मन्यन्ते ।

"पृच्यन्ताम्"[1] इति मन्त्रे पठिते उपसर्जनीर्निनयति ।

ततोऽध्वर्युः "जनयत्यै त्वा संयौमि"[2] इति मन्त्रेण पिष्टमुदकं च संयौति [मिश्रयति] । ततोऽध्वर्युरेव तं विभज्य[3a] द्वौ पिण्डौ कृत्वा पात्र्यामु-भौ निधाय निधानक्रमेण "इदमग्नेः"[4] इति मन्त्रेण प्रथमम् "इदमग्नीषोमयोः"[5] इति मन्त्रेण[6] द्वितीयं पिण्डमालभते ।

ततोऽग्नीत्[7] सव्यहस्ते वेदं गृहीत्वा[8] "इषे त्वा [अधिश्रयामि]"[9] इति मन्त्रेण गार्हपत्ये[10] दक्षिणभागे आज्यमधिश्रयति ।

अग्नीदपि आज्यमधिश्रयति इति अध्वर्युः सव्यहस्ते स्रुचमादाय वेदेन कपालस्थानङ्गारान् भस्म चापहृत्य "घर्मोऽसि विश्वायुः"[11] इति मन्त्रे-णाष्टसु कपालेषु प्रथमं पुरोडाशपिण्डमधिश्रयति । ततः "उरु प्रथा उरु प्रथस्वेति

---

1- मा० वा० शु० य० वे० मा० सं० - 1/21.

2- ,, - 1/22.

3- सान्नाय्यवति दर्शयागे द्वितीयपुरोडाशस्याभावात् तत्र विभजनादिकं न भवति ।

4/5- मा० वा० शु० य० वे० मा० सं० - 1/22.

6- "अमादेवतमन्यत्" [का० श्रौ० सू० 2/5/16] इति सूत्राद् दर्शयागेऽसान्नाय्ये "इदमिन्द्राग्न्योः" इति द्वितीयपिण्डालम्भनमन्त्रः ।

7- ग्रहणेति कात्तीयेष्टिदीपके [पृ० 21] नित्यानन्दः ।

8- का० श्रौ० सू० - 1/10/6.

9- मा० वा० शु० य० वे० मा० सं० - 1/22.

10- "अपरेणाहवनीये तद्व्यापिनः" इति का० श्रौ० सू० 2/5/18.

11- मा० वा० शु० य० वे० मा० सं० - 1/22.

यज्ञपतिः प्रथताम्[1]" इति मन्त्रेण पुरोडाशमनतिमृदुं कुर्वन् यावत्कपालं प्रथयति । ततः "अग्निष्टे त्वचम् मा हिंसीद्[2]" इति मन्त्रेण पुरोडाशमद्भिरभिमृशति[3] ततस्तूष्णीमेवाद्भिः पुनरभिमृशति न वा[4] । ततोऽध्वर्युरेव[5] "धर्मोऽसि विश्वायुः[6]" इत्यनेनैव मन्त्रेण एकादशसु कपालेषु द्वितीयं पुरोडाशमप्यधिश्रयन्ति । ततः "उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्[7]" इत्यनेनैव मन्त्रेण द्वितीयं पुरोडाशमपि अनतिमृदुं कुर्वन् यावत्कपालं प्रथयति । ततः "अग्निष्टे त्वचम् मा हिंसीद्[8]" इत्यनेनैव मन्त्रेणाद्भिरभिमृशति, ततस्तूष्णीमेवाद्भिः पुनरद्भिरभिमृशति न वा ।

ततोऽध्वर्युकर्तृकपात्र्या अङ्गुलीनां च पिष्टलेपापनयनम्[9]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1/2- मा० वा० शु० य० वे० म० सं० - 1/22.

3 - प्रथने क्रियमाणे यत्र क्वचन दीर्घं भवति तस्य सन्धानायाद्भिरभिमर्शनं क्रियतेऽवकाशेऽवदानार्थे च [मा०श०प०ब्रा० 1/2/2/11-12]

4 - का० श्रौ० सू० - 2/5/21.

5 - द्वितीयं पुरोडाशमग्नीदधिश्रयतीति कात्यायनेष्टिदीपके [पृ० 22] नित्यानन्दः, अध्वर्युरेवेति देवयाज्ञिकः, "आज्यमाग्नेयं च पुरोडाशं युगपदधिश्रयतः, ततोऽग्नीषोमीयमध्वर्युः" इति महादेवश्च, "अनधि-श्रयणं प्रथनमभिमर्शनं चेति यथैकस्य कृत्वापरस्य कर्तव्यम्" इति का०श्रौ० सू० भाष्ये [2/5/20] देवयाज्ञिकः ।

6/7/8- मा० वा० शु० य० वे० म० सं० - 1/22.

9 - "पिष्टलेपाञ्जुहोति" [का०श्रौ०सू० 3/8/1] इति पिष्टलेपस्य प्रतिपत्ति-विधानात् पिष्टलेपापनयनस्यार्थात् सिद्धत्वात् क्रमाकाङ्क्षायां योग्य-त्वादत्र पिष्टलेपापनयनं कार्यमिति कर्कः ।

प्रक्षालनं[1] च करोति । पिष्टलेपानेकस्मु पात्राप्त्याय करोति च ।

ततो गार्हपत्यादुल्मुकमादायाऽध्वर्युः[2] "अन्तरितं रक्षोऽन्तरिता अरातयः"[3] इति तेनैव मन्त्रेणाभिमतमाज्यं पुरोडाशौ च परितोऽग्निं प्रदक्षिणं भ्रमयति । तत उल्मुकं गार्हपत्ये प्रक्षिप्य हस्तस्याप्रादक्षिण्येनावृत्तिं करोति । ततोऽपामुपस्पर्शनं च करोति[4] । ततो "देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाके"[5] इति मन्त्रेण ज्वलद्भिर्दर्भैः प्रथमं पुरोडाशं श्रपयति । ततो द्वितीयं पुरोडाशमपि "देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाके" इत्यनेनैव मन्त्रेण ज्वलद्भिर्दर्भैः श्रपयति । ततः शृतावदानाय[6] "मा भेर्मा संविक्था:"[7] इति मन्त्रेण प्रथमं पुरोडाशमभिमृशति । ततो द्वितीयं पुरोडाशमपि "मा भेर्मा संविक्था:" इत्यनेनैव मन्त्रेणाभिमृशति । अभिमर्शनेन पुरोडाशौ शृतौ जायेते

---

1- "पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति" [का०श्रौ०सू० 2/5/25] इति पात्र्यङ्गुलिप्रक्षालनजलस्य प्रतिपत्तिविधानात् पात्र्यङ्गुलिप्रक्षालनस्यार्थसिद्धत्वात् प्रकृताकाङ्क्षायां योग्यत्वादत्र पात्र्यङ्गुलिप्रक्षालनं कार्यमिति कर्कः ।

2- आहवनीयस्य श्रपणे आहवनीयादेवोल्मुकमादत्ते । साङ्गारमादत्ते इति कातीयेष्टिदीपके [पृ० 22]

3- का० श्रौ० सू० - 2/5/21.

4- इदमपामुपस्पर्शनं कातीयपरिभाषया [का०श्रौ०सू० 1/10/14] प्राप्तं मन्त्रस्य वचनाद् रक्षो देवतात्वस्याकृतत्वात् ।

5- मा० वा० शु० य० वे० मा० सं० - 1/22.

6- मा० श० प० ब्रा० - 1/2/2/14.

7- मा० वा० शु० य० वे० मा० सं० - 1/23.

तर्हि पुनः पूर्वमिव ज्वलद्भिरङ्गारैः पुरोडाशौ श्रपयति; शृतौ जायेते तर्हि "अग्नेस्त्वग्ज्योऽसि तमेव यजमानस्य प्रजा भूयात्"[1] इति मन्त्रेण वेदेनोपवेषेण वाऽङ्गारमिश्रेण तप्ततरेण भस्मना पुरोडाशावाच्छादयति ।

ततोऽध्वर्युः पादाङ्गुष्ठप्रक्षालनजलं पात्रीमध्ये गार्हपत्यादुल्मुकमादाय तेन तापयित्वा विहारस्योत्तरतः स्फ्येन प्राक्संस्थास्तिस्रो रेखाः कृत्वा एकस्यां रेखायां निनीतं जलमन्यस्यां रेखायां निनीतेन जलेनान्त्यासु प्रत्यक्संस्थं[2] "त्रिताय स्वाहा [निनयामि]"[3] इति, "द्विताय स्वाहा [निनयामि]"[4] इति, "एकताय स्वाहा [निनयामि]" इति च मन्त्रैः प्रतिमन्त्रं प्रतिरेखं[5] क्रमेण निनयति[6] ।

ततोऽध्वर्युर्दक्षिणाग्नौ अन्वाहार्यं[7] श्रपयति[8] ।

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- भा० वा० कृ० प० वे० प्र० सं० - 1/23.
2- का० श्रौ० सू० - 2/5/26.
3/4- भा० वा० कृ० प० वे० प्र० सं० - 1/23.
5- "अङ्गुष्ठप्रक्षालनं पात्र्यां निनीय वोल्मुकेनाभितप्य स्फ्येनास्तीर्य पूर्वेणोदीचीस्तिस्रो लेखाः कृत्वैकताय स्वाहेति त्रिभिः पश्चात् तिसृषु लेखास्व-संसृष्टं निनयति" इति वैखानसश्रौतसूत्रे - 6/10.
6- प्रतिनिनयनं यजमानः "इदं त्रितायाप्त्याय न मम" इत्यादिक्रमेण त्यजतीति पद्धतिषु दृश्यते, किन्तु अश्रौतत्वादेतादृशास्त्यागा अस्माभिः सर्वत्र त्यक्ताः ।
7- अन्वाहार्यो नाम चतुर्णामृत्विजामाभिलष्यो दक्षिणार्थ ओदनः । "अनु पश्चात् [प्रयाजानन्तरम्] ऋत्विग्भोजनार्थमाह्रियते इति व्युत्पत्त्याऽन्वाहार्यपदवाच्यः" इति श्रौतपदार्थनिर्वचने - पृ० 13.
8- अत्र जलं प्रणीतं लौकिकमेव वेति कर्कः - का० श्रौ० सू० भा० 2/5/27.

ततोऽध्वर्युरेव "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतं देवेभ्यः"[1] इति मन्त्रेण आसादित-वेदिकुपरिस्थं स्फ्यं दक्षिणहस्तेनादाय सव्यं स्फ्यं सव्ये हस्ते निधाय दक्षिणेन हस्ते-नाभिमृश्य "इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि ति-ग्मतेजाद्विषतो वधः"[2] इति जपति[3] । ततस्तं स्फ्यं "पृथिव्यै वर्मासि"[4] इति मन्त्रेणान्तर्वेदिमध्ये उदगग्रं निदधाति । ततस्तस्य तृणस्याधस्तात् भूमौ तृणस्योपर्येव वा[5] स्फ्येन "पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्"[6] इति मन्त्रेण प्रहरति । ततो "व्रजं गच्छ गोष्ठानम्"[7] इति मन्त्रेण प्रहरणोत्खातमुदीर्य हस्तेन गृहीत्वा "वर्षतु ते द्यौः"[8] इति मन्त्रेण वेदेः प्रहरणप्रदेशं प्रेक्ष्य गृहीतं पुरीषं "बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्चवयम् -

---

1- मा० वा० शु० य० वे० म० सं० - 1/24.
2- ,, - 1/24.
3- "प्राकृती वा यजुषि" इति [1/132] शुक्लयजुर्वेदप्रातिशाख्यवचनादन्यमन्त्रेषु उदात्तादिस्वरप्रयोगस्य वैकल्पिकत्वेऽपि जपमन्त्रेषु तु नित्यमुदात्तादिस्वरप्रयोगः कर्तव्य इति बोध्यम् [का० श्रौ० सू० 1/8/19, पा० वा० 1/2/37] शु० य० वे० प्रा० 1/136]
4- का० श्रौ० सू० - 2/6/8.
5- "तृणस्याधस्तात् भुवि स्फ्येन प्रहरति" इत्येव देवयाज्ञिकः । तृणे एव प्रहरणमिति सम्प्रदाय इति विद्याधरः ।
6- मा० वा० शु० य० वे० म० सं० - 1/25.
7- तत्रैव. [का० श्रौ० सू० - 2/6/10]
8- तत्रैव. [का० श्रौ० सू० - 2/6/11]

"द्विष्मस्तमतो मा मौक्[1]" इति मन्त्रेणोत्करे क्षिपति । ततः पुनः "अपारत्वा पृथिव्यै देवयजनाद्वध्यासम्[2]" इति मन्त्रेण पूर्वोक्तस्थानस्योत्तरतस्तृणमाच्छस्तात् तृणे एव वा स्फ्येन प्रहरति[3] । ततो "व्रजं गच्छ गोष्ठानम्[4]" इति मन्त्रेण प्रहरणोत्खातपुरीषं हस्तेन गृहीत्वा "वर्षतु ते द्यौः[5]" इति मन्त्रेण वेदेः प्रहरणप्रदेशं प्रेक्ष्य गृहीतं पुरीषं "बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्[6]" इति मन्त्रेणोत्करे क्षिपति ।

ततोऽग्नीत् "अररो दिवं मा पप्तः[7]" इति मन्त्रेण पाणिभ्यामुत्करमभिमृशति [पीडयति] । ततोऽप उपस्पृशति च ।

ततोऽध्वर्युर्द्वितीयवारं प्रहृत्य स्थानस्योत्तरतस्तृणमाच्छस्तात् तृण एव वा "द्रप्सस्ते द्यां मा स्कन्[8]" इति मन्त्रेण तृतीयवारं प्रहृत्य "व्रजं गच्छ गोष्ठानम्[9]" इति मन्त्रेण प्रहरणोत्खातपुरीषं हस्तेन गृहीत्वा "वर्षतु ते द्यौः[10]" इति मन्त्रेण वेदेः प्रहरणदेशं प्रेक्ष्य गृहीतं पुरीषं "बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्[11]"

---

1- मा०ब्रा०गृ०प०वे०म०को० - 1/25 [का०गो०गृ० - 2/6/12]
2- ,, - 1/26.
3- अतः परमुदकोपस्पर्शनं पद्धतिकारैः प्रतिपादितमपि कातीयपरिभाषा [1/10/14] वचनानित्यत्वाभिप्रायेणेति । अथवाऽररोरार्थस्य स्याभावेऽपि "अपारकररो वायुः" इति सर्वानुक्रमणिकावाद [1.7] मन्त्रस्य वायनिकालुरथ्यवत्वमाप्तःस्पर्शः कर्तव्य एव ।
4/5/6/7/8/9/10/11- मा०ब्रा०गृ०प०वे०म०को० - 1/26.

इति मन्त्रेणोत्करे क्षिपति । ततः पुनस्तूष्णीमेवाऽध्वर्युस्तृतीयवारं प्रहृत्य स्थानस्थो-स्ततस्तु कृष्याऽध्वस्तात् त्रिर एव वा चतुर्थवारं प्रहृत्य तूष्णीमेव मूलं पुरीषमादाय तूष्णीमेव प्रत्यग्देशे प्रेत्य मूलं पुरीषमुत्करे प्रक्षिपति ।

ततोऽध्वर्युः "ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि"[1] इति ब्रह्माणमनुज्ञां प्रार्थयते ।

ततो ब्रह्मा "बृहस्पते परिगृहाण वेदिं स्वगा वो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतां साध्वन्तरहिता त्वया पृथिवी देवी देव्यस्तु[2] । देवा-वर्ष्य रत्नधा नाकस्य पृष्ठे यजमानोऽस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्त-त्रेमं यज्ञं यजमानं च धेहि"[3] इत्युपांशु[4] पठित्वा "ओऽम् परिगृहाण"[5] इत्युच्चैः[6] प्रसौति ।

ततोऽध्वर्युर्वेदेर्दक्षिणश्रोणेरारभ्याऽऽग्नेयदक्षिणपार्श्वपर्यन्तं "गायत्रेण त्वा छन्दसा परिगृह्णामि"[7] इति मन्त्रेण स्फ्येन रेखां कृत्वा दक्षिणश्रोणेरारभ्यो-त्तरश्रोणिपर्यन्तं "त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि"[8] इति मन्त्रेण स्फ्येन रेखां

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- एतद् वाक्यं श्रुतौ सूत्रे च नोपलब्धमस्माभिः । ["ब्रह्मन्प्रणेष्यामि" इति तु प्राप्यते - का० श्रौ० सू० 2/3/2]

2- का० श्रौ० सू० - 2/2/12.

3- तत्रैव - 2/2/8, 2/2/14.

4- "उपांशु प्रयोगः श्रुतेः" इति का० श्रौ० सू० - 1/3/10.

5- का० श्रौ० सू० - 2/2/9.

6- "न सम्प्रैषाः" इति का० श्रौ० सू० - 1/3/11.

7/8- मा० वा० शु० य० वे० म० सं० - 1/27.

कृत्वा उत्तरश्रोणेरारभ्याहवनीयोत्तरपार्श्वपर्यन्तं "गायत्रेण त्वा छन्दसा परि-गृह्णामि"[1] इति मन्त्रेण स्फ्येन रेखां करोति[2] ।

ततोऽध्वर्युरेव परिगृहीतवेदिमध्ये स्फ्येन प्रागायता उदगग्रा-स्तिस्रो रेखास्तूष्णीं कृत्वा "हर त्रिः"[3] इत्यग्नीधं प्रति प्राह ।

ततोऽग्नीद्विलिखिताभ्यो रेखाभ्यः पांसून्गृहीत्वोत्करे प्रक्षिप्य ता रेखाः सम्मृशति ।

ततोऽग्नीद्[4] अभ्रिमादाय प्रदक्षिणं सर्वतो वेदिं तस्यां त्र्यङ्गुल-गभीरां खनति ।

ततोऽग्नीदेव वेदिं स्फ्येनैव परिमृज्य गार्हपत्याहवनीयान्तराल-विकृतिं[5] गार्हपत्याहवनीयान्तरालपूर्वतृतीयभागप्रमाणबाहुकचतुष्कोणप्राच्योदीच्य-

---

1- मा० वा० शु० य० वे० मा० सं० - 1/27.

2- अत्र वेदिपरिग्रहादिकर्मणः पूर्णमासप्रयोगान्तर्गतत्वेन प्रतिपादनात् प्रतीष्टि वेदिकरणस्याऽऽकाम्यमानत्वादिष्ट्यपवर्गे वेदा गृहीतया पूर्वेण सन्निकर्षं प्रतीयते ।

3- का० श्रौ० सू० - 2/6/26.

4- "अरेणाभ्रिणा वेदिं खनति" इति [का० श्रौ० सू० 2/6/1] वचनात् अध्वर्युरेव वेदिखननं प्रतीयते तथापि "ओषधीनां मूलान्युच्छेत्तवै ब्रूयात्" इति [का० श्रौ० सू० 2/6/10] वचनादध्वर्युरग्नीधं प्रति प्रैषस्य प्रतीते-रग्नीध एव वेदिखननमिति देवयाज्ञिको मन्यते, प्रैषोऽप्यग्नीध एवेति वेदिखननमध्वर्युरेवेति कर्को मन्यते ।

5- का० शु० सू० - 1/27-28.

कोणे[1], वेदिपूर्वापरायामपूर्वविकृतिम[2] एव वोत्तरत उत्करं[3] करोति ।

ततोऽध्वर्युः "ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामि" इति ब्रह्माणमुत्तरपरिग्रहग्रहणानुज्ञां प्रार्थयते ।

ततो ब्रह्मा "बृहस्पते परिगृहाण वेदिं६ स्वगा वो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतां७ साध्वन्तरिक्षं६ मा पृथिवीदेवीदेव्यस्तु । देवता वयं स्त्वस्याः पृष्ठे यजमानोऽस्तु । सम्पन्नाणि७ सुकृतानि यत्र लोकास्तदेमं धत्तं यजमानस्य देवि[4]" इत्युपांशु पठित्वा "ओ३म् परिगृहाण[5]" इत्युच्चैः प्रब्रीति ।

ततोऽध्वर्युर्वेदिदक्षिणपार्श्वे दक्षिणश्रोणेः प्रारभ्य दक्षिणांसपर्यन्तं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० शु० सू० - 1/29-30.

2- "वेदिं परिसमुह्य त्रिकूर्चिकेऽग्निदुत्तरत उत्करं करोति" इति [का०श्रौ०सू०-2/6/12] अनेन वेदेरेव प्रकृतत्वाद् वेदिपूर्वापरायामस्यैव पूर्वविकृतिषे उत्तरत उत्कर इति कर्कदेवाचार्याः । "प्रणीतोत्करावित्येषु" इति [का०श्रौ० सू० 1/3/43] इति परिभाषया अनुकूलत्वादयमेव पक्षः समीचीनः प्रतीयते।

3- "त्र्यङ्गुलकटिकक्रमेण वृत्त उत्करः कार्यः । अयं त्र्यङ्गुलखातो भवति" इति श्रौतपदार्थनिर्वचनस्य पाठात् [पृ० 3]; "त्र्यङ्गुलवृत्तं षडङ्गुलविस्तारमेकाङ्गुलगर्तमुत्करं पांश्वादिक्षेपस्थानं कुर्याद्" इति का०श्रौ०सू० वृत्तौ [2/6/5] विद्याधरगौडः; वेदेरुत्तरतः परिसमूहनपांसूनां स्तम्बपुरीषादेरुत्करं राशिं करोति, उत्कीर्यते इत्युत्कर इति का०श्रौ०सूत्रभाष्ये [2/6/12] देवयाज्ञिकः ।

4- का० श्रौ० सू० - 2/2/12; 2/2/8; 2/2/14.

5- ,, - 2/2/9.

प्रोक्षणीभ्योऽर्धं धार्यमाणात् अध्वर्युः[1] स्फ्यमुद्यम्य "प्रोक्षणीरासादयेद्-ध्मम् बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीं सन्नह्याज्येनोदेहि[2]" इति अग्नीधं युगपत् सम्प्रेष्यति ।

ततोऽध्वर्युः[3] "द्विषतो वधोऽसि[4]" इति मन्त्रेण स्फ्यमुदग्रमुत्करे प्रक्षि-पति । ततः स्फ्यं गृहीत्वोत्करे पाणी प्रक्षाल्य प्रणीताभ्यः पश्चात् प्रागग्रामुदग्रां वा स्फ्यं निदधाति ।

---

1- पूर्वसूत्रव्याख्या • • • •

प्रोक्षणीधारणं प्रतिपादयितुं नैव शक्नोति तत्सूत्रपदाभावात्, उत्तरसूत्रेऽन्य इति पदेनाऽध्वर्योर्ग्रहणमपि नातिविशिष्टम्, तस्माद् देवयाज्ञिकसम्मत एव सूत्रविभागो ज्यायान् ।

1- प्रोक्षणीरासादयेत्यादिकस्य प्रैषस्य कर्ताऽध्वर्युः प्रैषार्थस्य कर्ताऽग्नीदिति देवयाज्ञिकः, सायणेनापि शतपथव्याख्याने [1/2/5/20-21] एवमेव स्वीकृतम्। धर्ममीमांसासूत्रे जैमिनिनाऽपि एवमेव प्रतिपादितम् [3/8/23-24]। वैखानसश्रौतसूत्रेऽपि "स्फ्यं तिर्यञ्चं स्तब्ध्वा प्रोक्षणीरासादयेत्याग्नीध्रं सम्प्रेष्यति" इति [5/2] समुक्तम् । तस्मात् कर्तृत्वेऽग्नीधः प्रैषकर्तृतायाः फलः निश्चित एव प्रतीयते । अत्रैकदेशे "स्वाभिमतादध्वर्युश्चेदितः कर्मकर्तव्यम्" इति काण्वशाखापाठात् प्रोक्षण्यासादनादीनां कर्तृत्वमध्वर्योरिति केचिदिति का० श्री० सू० भाष्ये देवयाज्ञिकः ।

2- मा०वा०शु०य०के०मा०सं० -1/28। मा०श०प०ब्रा० - 1/6/26।
का० श्री० सू० - 2/6/26.

3- अध्वर्युः प्रक्षाल्यार्थं जलमासाद्य • • • स्फ्यमुदग्रमुत्करे क्षिपेदिति कातीयेष्टिदीपके ।

4- मा० वा० शु० य० के० मा० सं० - 1/28.

अग्निसमीपात् प्राचीं दिशं गत्वा कुशाग्रैरन्तरतो मूलादारभ्याग्रपर्यन्तं प्राञ्चम् "अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि"[1] इति मन्त्रेण सम्मृज्य कुशमूलैर्बहिःप्रदेशे मुखमूलस्याधोभागादारभ्य मूलपर्यन्तमपि "अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि" इत्यनेनैव मन्त्रेण प्रत्यक्तीर्थं सम्मृज्याग्निसमीपं गत्वा "प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः" इति मन्त्रेण "निष्टप्तं रक्षो निष्टप्ता अरातयः" इति मन्त्रेण वा गार्हपत्ये[2] प्रतप्य उपस्थाप्याध्वर्यवे समर्पयति[3] । ततो जुहूमेवोपभृतं प्रतप्य उपस्थाप्य प्राङ्क्रम्य सम्मृज्य पुनः प्रतप्य उपस्थाप्याध्वर्यवे समर्पयति । ततो ध्रुवामपि जुहूमिव प्रतप्य उपस्थाप्य प्राङ्क्रम्य सम्मृज्य पुनः प्रतप्य उपस्थाप्याध्वर्यवे समर्पयति । ततस्तूष्णीं प्राशित्रहरणे गार्हपत्ये प्रतप्य

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

"अनिशितेति स्रुवः" [2/6/41] इत्यत्र "स्रुवं प्रतप्य पूर्ववद् वेदाग्रैरन्तरतः प्राक् सम्मार्ष्ट्यनिशित इति, विपर्ययं बहिर्मूलैः प्राङ्क्रम्य" इति सूत्रे प्रोक्तानामर्थानामनुवृत्तेः प्रतीयमानत्वात् स्त्रीलिङ्गशब्दोपलक्षितेन सूत्रेण प्रतिपाद्यमानत्वादस्माभिर्जुह्वादिष्वपि सम्मार्गपूर्वकं तपनं प्रतिपादितम् । आपस्तम्बश्रौतसूत्रे [2/4] वैखानसश्रौतसूत्रे [5/2] च सम्मार्जनपूर्वकं तपनं स्रुवादिषूक्तम् ।

1- माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदमन्त्रसंहितायाम् [1/29] पठितश्चैव मन्त्रः माध्यन्दिनीयशतपथब्राह्मणम् [1/3/1/6] कात्यायनश्रौतसूत्रं [2/6/41] चानुसृत्य स्त्रीलिङ्गशब्दोपलक्षितेनैव सम्पादिता मया ।
2- "आहवनीये गार्हपत्ये वा प्रतितप्य" - इति आपस्तम्बः 2/4.
3- एवं समर्पितं स्रुवादिकमध्वर्युरादाय "ओमोत्करं दर्भेषु सादयति उत्करे वा" [2/4] इत्यापस्तम्बादिवचनाद् यथास्थानं सादयति ।

उपस्थाय[1] प्राङ्क्रम्य तूष्णीमेव सम्मृज्याग्निमुपगम्य तूष्णीमेव पुनः प्रतप्य उपस्थायाऽध्वर्यवे समर्पयति । एवमेव ध्रुवादानं च तूष्णीमेवाहवनीये प्रतप्य उपस्थाय प्राङ्क्रम्य द्वे तूष्णीमेव सम्मृज्याग्निमुपगम्य तूष्णीमेव पुनः प्रतप्य उपस्थायाऽध्वर्यवे समर्पयति । तथैव पुरोडाशपात्रीमपि[2] तूष्णीमेवाहवनीये प्रतप्य उपस्थाय प्राङ्क्रम्य तूष्णीमेव सम्मृज्याग्निमुपगम्य तूष्णीमेव पुनः प्रतप्य उपस्थायाऽध्वर्यवे समर्पयति[3] । ततः सम्मार्जनकुशानुत्करे[4] प्रास्यति ।

ततोऽग्नीदेव पुनरपि गृह्य योक्त्रमादाय गार्हपत्याद् नैर्ऋत्यां दिशि प्रत्यङ्मुखीकृतजानु पूर्वमेवोपविष्टां यजमानपत्नीं परिधानमस्याद्

---

1- अत्र स्तोत्रमन्त्रोच्चारणाभावादुपस्थानाभाव इति देवयाज्ञिकः, कातीयेष्टिदीपके तु उपस्थानं प्रतिपादितः, कातीयपरिभाषानुसारं [1/10/14] यथानुपस्थानेनाऽऽवश्यक एवावधीयते, रामकर्माकरोऽपि शाखान्तरे तु "होत्रारुण्याद्यैतिकृच्छेदनभेदननिरसनाभ्यामिमन्त्रितानि च कृत्वाप उपस्पृशेत्" [आप० श्रौत० परिभाषाप्रश्ने] इत्यादौ उपस्पर्शो विहितः ।

2- यद्यपि "पुरोडाशपात्र्यो" इति कातीयेष्टिदीपके नित्यानन्देनोक्तं तथापि "पुरोडाशपात्री च द्वयोः पुरोडाशयोः साधारणी एकैव भवति, पात्रीमित्येकवचनात्" इति देवयाज्ञिकमतानुसारं बोध्यम् ।

3- यद्यपि कातीयेष्टिदीपकेऽडापात्र्या अपि प्रतपनादिकमुक्तं तथापि "इडापात्रीसम्बन्धस्तु न संमार्गः क्वचिदपि श्रौतदर्शनात्" इति देवयाज्ञिकेनोक्तत्वादस्माभिरपि इडापात्र्याः सम्मार्जनं नाभिहितम् ।

4- कात्यायनमते तु "आहवनीये प्रास्यति" [2/6/44] इति पक्षान्तरेऽप्युक्तेऽपि माध्यन्दिनीयशतपथब्राह्मणे "तद् तथा न कुर्यात्" इति [1/3/1/11] निषिद्धत्वात् माध्यन्दिनीयैः सम्मार्गकुशा उत्कर एव प्रासनीयाः

कटिदेशे तेन योक्त्रेण "अदित्यै रास्नासि"[1] इति मन्त्रेण प्रदक्षिणं वेष्टयित्वा दक्षिणं पाशमुत्तरे शङ्कुस्थानीये प्रान्ते प्रतिमुच्य शङ्कुस्थानीयं प्रान्तं निवे-ष्टयित्वा[2] "विष्णोर्वेष्पोऽसि"[3] इति मन्त्रेणोर्ध्वमुद्गूहति ।

ततोऽग्नीधेन वेदोपग्रहणे[4] "ऊर्जे त्वा [उद्गृभ्णामि]"[5] इति मन्त्रेणाज्यस्थालीमुद्धृत्य उत्तरेण गार्हपत्यपश्चादुत्तरमार्गेणानीय यजमानपत्न्या अग्रे नीत्वा निधाय तां "पत्न्याज्यमवेक्षस्व"[6] इत्यध्येष्यति ।

ततः पत्नी च "अदब्धेन त्वा चक्षुषावपश्यामि । अग्ने-र्जिह्वासि सुभूर्देवेभ्यो धाम्नेधाम्ने मे भव यजुषेयजुषे"[7] इति मन्त्रेणाज्य-मीक्षते ।

ततोऽग्नीद् पत्न्या अग्रत आज्यमुद्धृत्य नीत्वा प्रोक्षणीभ्यः पश्चाद्वेदिमध्ये तदासादयति ।

ततोऽध्वर्युर्वेदं गृहीत्वा प्रोक्षणीभ्यः पवित्रे आदाय "सवितुस्त्वा-

---

1- मा० वा० शु० य० वे० म० सं० - 1/30.
2- ग्रन्थिकरणस्य निषिद्धत्वेन निवेष्टनस्य पश्चात् योग्यं च पत्नीद्वयं नास्तीति अर्थान्न्याद् निवेष्टनम् ।
3. मा० वा० शु० य० वे० म० सं० - 1/30.
4- "एकस्मै साज्ये वेदेनोपग्रहणम्" - इति का०श्रौ०सू० 1/10/6.
5- मा० वा० शु० य० वे० म० सं० - 1/30.
6- एतद्वाक्यं श्रुतौ सूत्रे च नोपलभ्यमानमपि ।
7- मा० वा० शु० य० वे० म० सं० - 1/30.

प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः"[1] इति मन्त्रेणाज्य-
मुत्पूय वेदमादाय स्रुवमादाय[2] आज्यस्थाल्यामेव पवित्राभ्यां "सवितुर्वः
प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" इत्यनेन[3]
मन्त्रेण प्रोक्षणीरिवमार्चिषी: प्रोक्षणार्थमुत्पुनाति ।

ततोऽध्वर्युः[4] वेदोपयमः[5] "तेजोऽसि शुक्रमस्यमृतमसि"[6] इति मन्त्रेणा-
ज्यमवेक्षते ।

ततोऽध्वर्युरेव सव्येन पाणिना वेदं जुहूं च गृहीत्वा दक्षिणेन स्रुव-
मादाय तेनाज्यस्थाल्या आज्यं स्रुवपूरं तूष्णीमादाय जुह्वां "धामनामासि प्रिय-
देवानामनाधृष्टं देवयजनमसि"[7] इति मन्त्रेण सकृदानीय[8] पुनस्तूष्णीमाज्यं
स्रुवपूरं त्रीनादाय जुह्वामानयति । ततो जुहूं धारणायाग्नीधे ददाति[9] । ततः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० म० सं० - 1/31.
2- आज्योत्पवने वेदोपयमः प्रोक्षण्युत्पवने स्रुवोपयमश्च कात्यायनदीपके देव-
याज्ञिकपद्धतौ च प्रतिपादितोऽपि कातीयपरिभाषापद्धत्यादा च (1/10/
6-7) प्रतीयते ।
3- मा० वा० शु० य० वे० म० सं० - 1/31.
4- अध्वर्युर्यजमानो वेति देवयाज्ञिकः, "अध्वर्युरेवेक्षेत" इति तु मा०श०प०-
ब्रा० - 1/3/1/26.
5- देवयाज्ञिकपद्धतौ आज्यावेक्षणेऽपि वेदोपयमनमुक्तम्, वस्तुतस्तु एतदनावश्यकं
भाति ।
6/7- मा० वा० शु० य० वे० म० सं० - 1/31.
8- मा० श० प० ब्रा० - 1/3/2/18.
9- यद्यपि एतद् सूत्रे सूत्रे च नोक्तम्, तथापि कर्मसौकर्यायैवं कार्यमिति

. . . . अग्निहोत्रेऽपि

पुनः स्रुगाज्यधाया आज्यमुपभृतमष्टमादाय "धाम्नाधामि प्रियन्देवाना-
नाधृष्टन्देवयजनमसि" इत्यनेनैव मन्त्रेणोपभृति सकृदानीय पुनः सप्तकृत्वोऽ-
ग्रुभृतमादाय तूष्णीमेवोपभृति आनयति । जुह्वाज्यापेक्षयोपभृदाज्यं द्विगुणं
भवति तथाऽदानानि करोति । तत उपभृतमपि ब्राह्मणायाग्नीध्रे ददाति । ततः
पुनरपि स्रुगाज्यधाया आज्यमादाय "धाम्नाधामि प्रियन्देवानामनाधृष्टन्देव-
यजनमसि" इत्यनेनैव मन्त्रेण ध्रुवायां सकृदानीय पुनः स्रुगादाय तूष्णीमेव
ध्रुवायामानयति । ततो ध्रुवामपि ब्राह्मणायाग्नीध्रे ददाति । तत आज्यधारीं
वेदा उभय सविभक्तो [स्रुचो देशे] निदधाति ।

ततोऽध्वर्युरेतं विहाय "ब्रह्मन्निध्मम्प्रोक्षिष्यामि"[1] इति
ब्रह्माणमिध्मप्रोक्षणानुज्ञां प्रार्थयते ।

ततो ब्रह्मा च "प्रोक्ष यज्ञन्देवता वर्धय त्वन्नाकस्य पृष्ठे
यजमानोऽवस्तु । सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च
धेहि" इति उपांशु कथयित्वा "ओऽम् प्रोक्ष"[2] इति उच्चैरनुजानाति ।

ततोऽध्वर्युरग्निहोत्रहवणीस्थाः प्रोक्षणीरादाय "कृष्णोऽस्याखरे-

---

पूर्वपृष्ठस्याग्रे . . . .

प्रतीयते । देवयाज्ञिक - नित्यानन्दाभ्यां च "अग्नीधा समर्पितां जुहूं दक्षिणेन
पाणिना प्रतिगृह्य" इत्यादिकसद्वाक्यमिदं अनङ्गीकृतमेव, वाक्याधारेण तु
एतत्प्रकारो ताभ्यामपि न प्रतिपादितम् ।

1- एतद् वाक्यं श्रुतौ सूत्रे च नोपलब्धमस्माभिः । एतत्सूत्रं तु का०श्रौ० सूत्रे [2/2/9] उपलभ्यते ।

2- का० श्रौ० सू० - 2/2/10-11, 8, 14.

ततोऽध्वर्युः "बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि"[1] इति मन्त्रेण बर्हिः प्रोक्ष्य तां प्रोक्षणीशेषं "आदित्यै व्युन्दनमसि"[2] इति मन्त्रेण बर्हिर्मूलेषु निनयति ।

तत्राध्वर्युः पवित्रे प्रस्तरे निधाय बर्हिर्विस्रस्य "विष्णोः स्तुपोऽसि"[3] इति मन्त्रेण बर्हिर्मूलस्य पूर्वस्माद् भागात् मुष्टिप्रमाणं प्रस्तरं गृह्णाति । ततस्तं प्रस्तरं तूष्णीं ब्रह्मणे प्रदाय बर्हिः सन्नहनं विस्रस्य [रज्जुं तां परित्यज्य] दक्षिणस्यां वेदिश्रोण्यां निधाय प्रस्तराद् बर्हिषोऽन्यैः[4] सन्नहनावका-दर्भेतरादिभिः कुशैराच्छाद्य वेदीं पश्चात् तृणकाष्ठादिकं हस्तेनादाय[5] उत्करे प्रास्यति ।

ततोऽध्वर्युः स्रुचं निधाय[6] प्रस्तरग्रहणावशिष्टबर्हिर्मूलस्य तृतीयं भागमादाय "ऊर्णाम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यः"[7] इति मन्त्रेण दक्षिणश्रोणेरारभ्योत्तरश्रोणिं यावत् प्रागग्राणि बर्हींषि स्तृणाति[8] । ततो बर्हि-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० मा० सं० - 2/1.

2/3- ,, - 2/2.

4- का० श्रौ० सू० - 2/6/19.

5- हस्तेनादायेति देवयाज्ञिकः, काष्ठेनादायेति नित्यानन्दः ।

6- एतत् स्रुङ्निधानं देवयाज्ञिकेन नित्यानन्देन च प्रतिपादितम्, सूत्रे मूले च नोपलभ्यमस्माभिरेतत्प्रकरणे ।

7- मा० वा० शु० य० वे० मा० सं० - 2/2.

8- यद्यपि कात्यायनश्रौतसूत्रे [2/6/22] पञ्चादपकं स्तरणमपि प्रतिपादितम्,

. . . . अग्निमुखेऽपि

ततश्च सव्यहस्तेन प्रस्तरमाददानं[1] स्वाध्वर्युणाहृतानि परिधि-
काष्ठानि[2] गृह्णीत "गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै
यजमानस्य परिधिरस्यग्निरिड ईडितः[3]" इति मन्त्रेणाग्नेः पश्चादुदगग्रं
स्थूलं परिधिं परिधाय "इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यज-
मानस्य परिधिरस्यग्निरिड ईडितः[4]" इति मन्त्रेण दक्षिणतः प्रागग्रमणु द्वितीयं
परिधाय "मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारि-
ष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः[5]" इति मन्त्रेणोत्तरतः प्रागग्र-
मणुतरं परिधिं परिदधाति । तत एकामेकां समिधमादाय[6] समिधा प्रथमं परिधिं
स्पृष्ट्वोत्थाय तां समिधं "वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने
बृहन्तमध्वरे[7]" इति मन्त्रेणाहवनीये आदधाति । तत एवमादाय द्वितीयां समि-
धमादाय परिधिमस्पृष्ट्वैव "समिदसि[8]" इति मन्त्रेणाहवनीये आदधाति । तत
उपविश्याहवनीयमीक्षमाणः "सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै[9]"
इति मन्त्रं जपति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- यद्येतन्न केनापि ग्रन्थेनोक्तं तथापि प्रस्तरस्थानस्यानुक्तत्वादास्तरणात्
प्रस्तरस्यादानमेव कार्यमिति प्रतीयते ।

2- का० श्रौ० सू० - 2/8/1.

3/4/5- मा० वा० शु० य० वे० म० सं० - 2/3.

6- यद्यपि नित्यानन्देन "आहवनीय[illegible] गृहीत्वा समिधा"
इति विशेष उक्तस्तथापि देवयाज्ञिकपद्धतावस्य विशेषस्यादृष्टत्वादयं
विशेषोऽस्माभिर्नैव परिगृहीतः ।

7- मा० वा० शु० य० वे० म० सं० - 2/4.

8/9- ,, - 2/5.

जुह्वाः किञ्चित् पश्चाच्च तथा आत्मसंमुखं विधृतिद्वयोपरि बर्हिष्षु[1] प्राग्ग्राणि सादयति । ततः सव्येन पाणिना वेदमुपभृदभ्यामग्नीधा दत्तां ध्रुवां दक्षिणेन पाणिना प्रतिगृह्य तां "ध्रुवासि ध्रुवा नाम्ना सीद प्रियेण धाम्ना प्रियं सद आसीद"[2] इति मन्त्रेणोपभृत उत्तरत उपभृतः किञ्चित् पश्चाच्च तथा आत्मसंमुखं विधृत्युपर्युपरि बर्हिष्षु सादयति ।

अथाध्वर्युर्दक्षिणेन पाणिनाऽऽज्यस्थालीं स्रुवं चादाय सव्येन पाणिना पुरोडाशपात्रीं वेदं चादाय प्रदक्षिणमावृत्य प्रत्यङ्ङागत्य गार्हपत्यात् पश्चादुपविश्य गार्हपत्यस्योत्तरतः स्रुवमाज्यस्थालीं निधाय तस्य उत्तरतः पुरोडाशपात्रीमुपस्थापयित्वा वेदेन कपालेभ्योऽभिपुरोडाशाभ्यां भस्म पराकृत्य[3] आज्यस्थाल्याः स्रुवेणाज्यमादाय तूष्णीं कपालस्थयोरेव पुरोडाशयोर्वेदेन स्रुवेणाभिघार्य पुरोडाशपात्र्यां दक्षिण-उत्तरक्रमेण तयोः आसनार्थमेकैकं स्रुवमाज्यमुपस्तृणाति[4] । ततः प्रथमाग्नेयं पुरोडाशमवकर्तीनि हस्तेनाप्लुत्य उपवेषादिलोपकरणेनोद्धाय[5] द्वितीयपुरोडाशस्य पूर्वं आज्यस्थालीमपरेण नीत्वा पुरोडाशपात्र्यां

---

1- का० श्रौ० सू० - 2/8/13.
2- मा० वा० शु० य० वे० म० सं० - 2/6.
3- एतद्विवरणं तैत्तिरीयसूत्रानुसारीति देवयाज्ञिकपद्धतौ ।
4- पुरोडाशाभिधारणाद्युपस्तरणक्रमो नित्यानन्दोक्तः सूत्राननुकूलः प्रतीयते।
5- हस्तेनाप्लुता दर्व्यादिनोपवेषेनोद्धासनं सूत्रे कुत्रचित् पाकुप्रयमानमपि देव-याज्ञिक-नित्यानन्दाभ्यां प्रतिपादितम्. "अविज्ञनाद् पाणिना" इति मानव-श्रौतसूत्रे क्रियमाणमपि तत् पुरोडाशस्थापाकरणे हस्ताभिघातं नारयति नोद्धासने हस्तस्पर्शमिति हस्तेनोद्धासनं कौतुकमिति प्रतीयते ।

दक्षिणतः आसादयति । ततोऽग्नीषोमीयं पुरोडाशमपि[1] अर्धावर्तमनु इत्यादिना-स्तृणन्नेव उपवेषादिलोपलक्षणेनोद्वास्याज्यधाराया: प्रथमपुरोडाशस्य च परितो नीत्वा पुरोडाशपात्र्यामुत्तरतः आसादयति । ततः स्रुवेणाज्यधारया आज्यमादाय 'यस्ते प्राणः पशु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्त्सोम घृतवान् हि भूत्वाग्निं गच्छ स्वर्यजमानाय विन्द'[2] इति मन्त्रेणाग्नेयं पुरोडाशमक्त्वा 'यस्ते प्राणः पशु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्त्सोम घृतवान् हि भूत्वाग्नीषोमौ गच्छ स्वर्यजमानाय विन्द'[3] इति मन्त्रेण[4] अग्नीषोमीयं पुरोडाशमनक्ति ।

ततोऽध्वर्युर्वेदिपुर एतान्यथाक्रमः स्रुवेणाज्यमादायोपकान्क्रमेण प्रथमं कपालं 'यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्'[5] इति मन्त्रेणानक्ति । ततो द्वितीयादिकानि कपालान्यपि तेनैव मन्त्रेण प्रत्येकं मन्त्रावृत्त्यानक्ति । एवमाग्नेयपुरोडाशसम्बन्धकपालिकेः कपालानि अक्त्वा अग्नीषोमीयपुरोडाशसम्बन्धकपालिकेः कपालान्यपि तथैवानक्ति।

ततोऽध्वर्युर्वेदिं निधाय स्फ्यमादाय[6] 'प्रथमकृतकाणि' 'द्वितीय-

---

1- असान्नाय्ययाजिनो द्वौ ऐन्द्राग्नं पुरोडाशमपि एकमेवोद्वासयति ।

2- का० श्रौ० सू० - 2/5/14.

3- ,, - 2/8/15.

4- असान्नाय्ये द्वौ इन्द्राग्नी गच्छेति सान्नाय्यवति इन्द्रं गच्छ महेन्द्रं गच्छेति वा प्रयोगः ।

5- का० श्रौ० सू० - 2/8/16.

6- अत्र स्फ्यादानं कातीयपरिभाषया [1/10/6-7] अग्रायणेन प्रतीयते, तथापि पद्धतिकाराः प्रतिपादयन्ति ।

कृत्यानि" इत्यादि[1] उच्चारयन् आग्नेयपुरोडाशाष्टकपालकैः कपालानि उपधेयम् इत्येव वापि उदक् उद्वासयति । तत्रैव अग्नीषोमीयपुरोडाश-स्याष्टकपालकैः[2] कपालानि योजयति ।

ततः बर्हिः स्रुचं निधाय वेदमुपगृह्य तानि हवींषि वैदिकमेव नीत्वा आज्यस्थालीं ध्रुवाया उत्तरतः "प्रियेण धाम्ना प्रियं सद आसीद"[3] इति मन्त्रेण स्रुतसहितामुपरि आसादयति । ततो वेदं निधाय स्रुचमुपगृह्य आज्यस्थाल्या उत्तरत आग्नेयपुरोडाशं "प्रियेण धाम्ना प्रियं सद आसीद" इत्यनेनैव मन्त्रेणासाद्य तस्योत्तरतः अग्नीषोमीयं पुरोडाशम्[4] अपि "प्रियेण धाम्ना प्रियं सद आसीद" इत्यनेनैव मन्त्रेणासादयति ।

ततोऽध्वर्युः स्रुचं निधाय वेदमुपगृह्य[5] "ध्रुवा असदन्नृतस्य यो-नौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम्"[6] इति मन्त्रमाख्याय

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- वैतानश्रौतसूत्रे तु "कपालान्येकैकशोऽभिमर्शयेत् ते नीचीनाभिमुखैः संख्या-योजयति" इति [5/6] उक्तम् । कात्यायनश्रौतसूत्रेऽपि "संख्ययोपदधाति" इत्येव [2/4/18] उक्तम् ।

2- अत्रापस्तम्बे तौ तु ऐन्द्राग्नपुरोडाशस्यैकादशकपालकैः कपालानि यो-जयति ।

3- मा० वा० शु० य० वे० म० सं० - 2/6.

4- अत्रापस्तम्बे तौ ऐन्द्राग्नं पुरोडाशं सान्नाय्ययुक्तेति विशेषः च ।

5- आरम्भकाले वेदोपग्रहः कातीयपरिभाषया [1/10/6-7] अनुमत एव प्रतीयते ।

6- मा० वा० शु० य० वे० म० सं० - 2/6.

वाज्यमालभते[1] । तथैव मन्त्रेण जौहवमाज्यमालभते । तथैव मन्त्रेणोपभृता-ज्यमालभते । तत्र च तेनैव मन्त्रेण ध्रौवमाज्यमालभते । ततो वेदं स्रुवायाः पुरस्ता-न्निधाय स्रुवमादाय "ध्रुवाऽसदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञम्पाहि यज्ञपतिम्" इत्यनेनैव मन्त्रेण प्रथमाग्नेयं पुरोडाशमालभते. तथैव मन्त्रेणाग्नीषोमीयं[2] पुरोडाशं चालभते ।

ततोऽध्वर्युरेव "पाहि मां यज्ञन्यम्[3]" इति मन्त्रेणात्मानमालभते[4]. ततोऽप[5] उपस्पृशति[6] ।

अथाध्वर्युस्तृणमुष्टिकृतं होतुरासनं वेदेः पश्चिमभागे गार्हपत्या-हवनीययोरन्तराले, वेदेरुत्तरश्रोणेरुत्तरतो वा स्थापयित्वा "एहि होतः[7]" इति होतारमामन्त्रयति ।

ततो होमं करिष्यन् होताऽथ प्रणीतोत्करावन्तरेण प्रविश्योप-कल्पिते स्थाने प्राङ्मुखस्तिष्ठति[8] ।

---

1- उपयोगक्रमानुसारं क्रमेण स्रुचामालभ्य इति देवयाज्ञिकः ।
2- असान्नाय्ये द्वौ ऐन्द्राग्नं पुरोडाशं सान्नाय्यवति दधिपयसी च ।
3- मा० वा० शु० य० वे० मा० सं० - 2/6.
4- आत्मालम्भे उरसि स्पर्शः इति मन्यन्ते; वस्तुतस्तु जीवात्मनः शरीरे मुख्यं स्थानं शिर इति शिरसि स्पर्शः समुचितो भाति ।
5- का० श्रौ० सू० - 1/10/14.
6- अत्र वा ऽपोपस्पर्शनं यजमानस्य, शाखान्तरात्, द्रष्टव्यं का० श्रौ० सू० 2/3/21.
7- शाङ्खायनश्रौतसूत्रे आमन्त्रणस्योक्तत्वादेवं प्रयोग इति देवयाज्ञिकः ।
8- का० श्रौ० सू० - 1/1.

ततोऽध्वर्युरिध्मादेकां समिधमादाय होतारं प्रति 'अग्नये समिध्य-मानायानुब्रूहि'[1] इत्याह ।

होता च 'ब्रह्मन्त्सामिधेनीरनुवक्ष्यामि'[2] इति ब्रह्माणं सामि-धेन्यनुवचनानुज्ञां प्रार्थयते ।

ब्रह्मा च 'प्रजापतेऽनुब्रूहि यज्ञं देवताकं स्तवं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च धेहि'[3] इत्युपांशु पठित्वा 'ओमनुब्रूहि'[4] इत्युच्चैः सामिधेन्यनुवचनमनुजानाति ।

ततो होताऽङ्गुष्ठपर्वाग्रमात्रमितमञ्जलिं हृदये[5] प्रतिष्ठाप्य दक्षिणं च पादं वेदा उत्तरतोऽग्न्यासनमूलः कृत्वा द्यावापृथिव्योरन्तरमीक्षमाणः 'नमः प्रवक्त्रे नम उपवक्त्रे नमो ब्रह्मणे नमोऽनुख्यात्रे । क यदनुवक्ष्यति स यदनुवक्ष्यति क आर्त्विज्यं करिष्यति स आर्त्विज्यं करिष्यत्यृचः प्रपद्ये यजुः प्रपद्ये साम प्रपद्ये ब्रह्म प्रपद्येऽनार्त्तांश्छन्दसां मातरं प्रपद्ये

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 3/1/1;
'प्रथमयानेन प्राक् स्विष्टकृतः' इति च का० श्रौ० सू० - 3/1/3.

2- का० श्रौ० सू० - 1/1.

3- का० श्रौ० सू० - 2/2/13; 14, 8, 9.

4- ,, - 2/2/9.

5- हृदयदेशोऽङ्गुष्ठ इति मन्यन्ते, 'हृद्यमिति तस्माद्धृदयम्' इति (श० ब्रा० - 8/3/3) निर्वचनादन्तःकरणेन हृदयं तदधिष्ठानं च शिर इति हृदय-देशाब्देन शिरसो ग्रहणं युक्तं भाति ।

यशो[1]ऽस्मे वो वाजा इन्द्रवो हविष्मन्तो घृताच्या[2] ।

[1] देवान्गाति सुम्नयो[3]ऽस्मयो वाजा इन्द्रवो हविष्मन्तो घृताच्या ।

[2] देवान्गाति सुम्नयोऽस्मयो वाजा इन्द्रवो हविष्मन्तो घृताच्या ।

[3] देवान्गाति सुम्नयो[4]ऽग्न आयाहि वीतये गृणानो हव्यदातये ।

[4] निहोता सत्सि बर्हिषोऽस्मन्त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

कैवाङ्क एव भेदोऽस्ति; तथापि तयोरुच्चारणे तथा भेदो नानुभूयते; लिङ्गरत्वस्य नासिक्यत्वेन वैयाकरणैः कौत्सायर्तायाः प्रतीयमानत्वात् [मा० श० प० ब्रा० 1/4/1/1-3]; तस्मादस्माकं भेदोऽपि सन्दानुसन्धेयमानका-न्तः, शुद्धव्याख्यानं तु चमत्कारं कर्तव्यम् ।

1- "निर्दिङ्कृत्योपांशु महाव्याहृतीरोम्पूर्वाः सामिधेनीः [अन्वाह" इति कातीयश्रौतसूत्रे 1/1.

2- "अर्धैकवर्णेत्" इति "प्रणवोऽर्धर्चः सन्दध्यात्" इति च का० श्रौ० सू० 1/1; "ओकारः प्लुतिर्मात्रः शुद्धः, मकारान्तो वा, सो प्रणव इत्याचक्षते" इति का० श्रौ० सू० 1/1/19-21; तत्र कौषीतकिनः वैयाकरणास्तु शुद्धमो-कारं प्रयुञ्जते; कात्यायनश्चोभयमनुमन्यते: प्रणवस्तु शुद्ध ओकारो वा मकारान्तो वेति विकल्पितं कृते, इत्यनेनाऽनात् शुक्लयजुर्वेदानां कात्यायनमतानुसरणेन प्रणवस्य मकारान्तत्वमापद्यते । संहिता तु नित्यानन्देन निर्णयेन न लिखिता किन्तु संहितानियमाः सम्यङ्निर्धारिता नेत्रे ।

3- "प्रतिपूर्वनाशनम्" - इति का० श्रौ० सू० 3/1/10.

4- "निरेव पृथगान्त्यानामन्यानन्तेनुब्रूयात्" इति मा०श०प०ब्रा० 1/3/5/15; "स एतत्मोदायति । अप्येकामेवानवानन्ननुब्रूयात्" वक्तव्य इति च तत्रैव 1/3/5/15.

वासिष्ठं[1] मैत्रावरुणं[2] कौण्डिन्यं[3] देवेद्धो[3] मन्विद्ध ऋषिष्टुतो विप्रानुमदितः
कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो
होता तूर्णिर्हव्यवाडास्पात्रं[4] जुहूर्देवानां चमसो देवपानोऽरां इवाग्ने

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

न्दिनीयानां कातीयानामनुसारेऽपि प्रयोगेऽस्य विरामः कर्तव्यो न वेति कृतिनिर्देशकाभावे कृपतेः कौषीतकिमतानुसारं सुनिश्चयेन निर्णयो दुष्करः, शाङ्खायनश्रौतसूत्रेऽपि अनाम्नानं [1/4/14] नैवोक्तम् । शतपथब्राह्मणेऽपि अनाम्नानस्य सङ्केतोऽपि नैव प्राप्यते [मा०श०प०ब्रा० 1/4/2/1-2] । कात्यायनश्रौतसूत्रेऽपि तादृशः सङ्केतो नैवोपलभ्यते ।

1- वासिष्ठेत्यादिकं प्रस्तुतानुसन्धाननिबन्धकारस्यार्षेयम् ।

2- यद्यपि प्रस्तुतानुसन्धाननिबन्धकारगोत्रजा नेपाला ब्राह्मणा लौकिककर्मसु "कौण्डिन्य वासिष्ठमैत्रावरुणेति त्रिप्रवरः" इति प्रवरोच्चारणं कुर्वते, तथापि कातीयप्रवराध्याये माध्यन्दिनीयशतपथब्राह्मणे [1/4/2/3-5] चानुपूर्व्यायं प्रयोगोऽत्र प्रदर्शितो मया ।

3- देवेद्ध इत्यादिकानां परिसमाप्तिपर्यन्तानां पदानां सन्तति पठनं कार्यमथवा "देवेद्धः 1, मन्विद्धः 2, ऋषिष्टुतः 3, विप्रानुमदितः 4, कविशस्तः 5, ब्रह्मसंशितः 6, घृताहवनः 7, प्रणीर्यज्ञानाम् 8, रथीरध्वराणाम् 9, अतूर्तो होता 10, तूर्णिर्हव्यवाट् 11, आस्पात्रं जुहूर्देवानाम् 12, चमसो देवपानः 13, अरां इवाग्ने नेमिर्देवांस्त्वं परिभूरसि 14, आवह देवान्यजमानाय 15 इति पञ्चदश निविदः समाप्यता वा पठनं स्वार्थं कार्यम् [का० श्रौ० सू० 1/3]

4- "तूर्णिर्हव्यवाडित्यवसाय" इति आश्वलायनश्रौतसूत्रे [1/3] पठ्यते, तदनुसारि- णश्चात्र विरामं कुर्वन्ति, एतद् विरामानन्तरं माध्यन्दिनानामपि स्थाप-

. . . . . अग्रिमपृष्ठेऽपि

सम्मृड्ढि[1]" इति तं प्रेष्यति ।

ततोऽग्नीद् स्फ्यं नवीन कुशाग्राणां दक्षिणेन पाणिना गृहीत्वा स्वस्थानाद्[2] अग्निं प्रदक्षिणीकृत्य दक्षिणतो गत्वा दक्षिणपरिधिसन्धौ स्थित्वा कुशाग्रैर्दक्षिणपरिधिपार्श्वेऽग्निं प्राक्संस्थं "अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितं सम्मार्ज्मि[3]" इति मन्त्रेण सम्मार्ज्य तूष्णीं द्विस्तथैव सम्मार्ष्टि। तथैव ततो पश्चिमपरिधिसन्धिस्थलपार्श्वेऽग्निमुदक्संस्थं "अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितं सम्मार्ज्मि" इत्यनेनैव मन्त्रेण सम्मार्ज्य तूष्णीं द्विस्तथैव सम्मार्ष्टि । ततो दक्षिणपार्श्वात्प्रादक्षिण्येन[4] उत्तरपार्श्वे गत्वा उत्तरपरिधिसन्धिस्थलपार्श्वेऽग्निम् "अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितं सम्मार्ज्मि" इत्यनेनैव मन्त्रेण सम्मार्ज्य द्विस्तथैव सम्मार्ष्टि । तत्र तथैव स्थितोऽग्निं कुशाग्रैः उपर्युपरि कुशाग्रैः प्राक्संस्थं त्रिः सम्मार्ष्टि[5] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

ऽनुदिशाग्नं परिधीनु यथापरिधिसन्धिं त्रिः त्रिः सम्मृज्य" [आप०श्रौ०सू० 2/13] इत्यादिकात्यायनीयकोशकानुसारं पद्धतिकारैरुक्तं भाति ।

1- का० श्रौ० सू० - 3/1/12.

2- उत्करसमीपादुत्तरांसाद् वा ।

3- मा० वा० शु० य० वे० म० सं० - 2/7.

4- गार्हपत्याहवनीययोरन्तरालेन गमनस्य निषिद्धत्वात् [का०श्रौ० 1/8/23] प्रादक्षिण्येनोत्तरतो गमनम् ।

5- नित्यानन्देन वस्तुतः स्वत्वादिना कोऽन्यत्वेन प्रदर्शिताऽध्वनिसम्मा-र्जनरीतिरनुपपन्ना प्रतीयते, उत्तरतः स्थित्वाग्निपरिधिसमीपे उदगग्रं

. . . . अग्निमूर्ध्नि

तत्र च जुहूमुपभृतोपरि निगृह्य प्राचीमाघारयति "स इन्द्रो वीर्यमसृजोद्धर्षाद्धर्ष बाहुभ्याम् । अग्ने वेर्होत्रं वेर्दूत्यमवतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषाऽभूत् स्वाहा[1]" इति मन्त्रेण दक्षिणपरिधिसन्धिमभिपाद्य प्रारभ्याग्नेर्दक्षिणपार्श्वे समिद्धे भागे ऋजुं दीर्घं सन्ततं प्राञ्चमुत्तराघारं तिष्ठन्नेव जुह्वाऽऽज्यमग्नौ जुहोति[2] ।

ततोऽध्वर्युः स्रुचौ परस्परस्पर्शमकुर्वन्नेव[3] दक्षिणं पादमग्रतोऽग्रतो व्यापारयन् यजमानदेशात् परिधीनपरेणोत्तरत आगत्य जुहूस्थेनाज्येन ध्रुवास्थमाज्यं "ज्योतिषा ज्योतिः[4,5]" इति मन्त्रेण जुहूस्थं सर्वं च (जुह्वाज्यबिन्दुं ध्रुवास्थाज्ये पातयति) । ततः सव्येन पाणिनोपभृतं गृह्णन्नेव दक्षिणेन जुहूं प्रस्तरस्योपरि निधायोपभृतं दक्षिणेन पाणिनादाय सव्येन वेदमादायोपभृतं जुह्वा उत्तरतः स्वस्थाने निदधाति ।

ततोऽध्वर्युरिध्मसन्नहनान्यादाय होतारं प्रदक्षिणं कुर्वन्नुत्तरपश्चाद्भागे गत्वा प्राङ्मुखस्तिष्ठन्[5] "ओ३ श्रावय[6]" इति अग्नीध्रं प्रति आह ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- भा० श्रौ० सू० प० वे० म० सं० - 2/8-9.

2- इतः परं पद्धतिषु प्रतिपादितो यजमानकर्तृकस्त्यागः श्रुतौ सूत्रे चानुक्तत्वादस्माभिर्नोक्तः ।

3- "असंस्पर्शयन्स्रुचौ प्रत्याक्रामति" - इति आप० श्रौ० सू० 2/14.

4- भा०आ०सू०प०वे०म०सं० - 2/9 (अत्र "जुहूत्" इत्यनुषङ्गोऽपि पठितः साकाङ्क्षत्वादिति भाति)।

5- "इध्मसंनहनानि स्फ्य उपसंगृह्य वेदं च कृष्णव्यन्तमादायोत्तरतः प्रवरायातिष्ठेत्" - इति आप० श्रौ० सू० 2/15.

6- का० श्रौ० सू० - 3/2/3.

विवर्षिः"[1] इत्युपांशु जपति । ततः "ऊर्ध्वोऽध्वर स्थिर सत्यान्तरिक्षेणाग्निश्च पृथिवी वायुश्च वातश्चान्तरिक्षं च रश्मिश्चेत्येता मा देवता आर्तेर्गोपायन्तु"[2] इत्यान्नमानस्योदकमुपस्पृश्य "इन्द्रमन्वारभामहे होतृषद्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवम्"[3] इति उपांशु पठित्वा पुरस्तात् स्थितस्याध्वर्योः पश्चात् पुरस्तात् स्थितस्याग्नीध्रस्य दक्षिणयोरंसयोः प्राचीनं संमृशति[4] ।

ततोऽध्वर्युरग्नीच्च होता च सम्पृष्टो यथोपविशतः ।

ततो होता वेदतृणान्यादाय तैः "सम्मार्गोऽसि सम्मा प्रजया पशुभिर्ब्रह्मवर्चसेन च मृड्ढि"[5] इत्युपांशु पठितेन मन्त्रेण मुखं सकृत् प्रदक्षिणं सम्मृज्य द्विस्तथैव तूष्णीं सम्मार्ष्टि । ततश्च "अपमार्गोऽस्यप मा पाप्मना पापेन च मृड्ढि"[6] इति मन्त्रेणैतैरेवाप्रदक्षिणं सकृन्मुखमपमृज्य तूष्णीं द्विस्तथैवापमार्ष्टि । ततोऽप उपस्पृश्य "ऐन्द्रीमावृतमन्वावर्ते"[7] इति प्रदक्षिणमावृत्य होतृषदनात् तृणमङ्गुष्ठानामिकाभ्यामादाय "निरस्तः परावसुः सह तेन यं द्विष्मः"[8] इति मन्त्रेण नैर्ऋत्यां दिशि निरस्याप उपस्पृश्य "इदमहमर्वावसोः सदने सीदामि"[9] इति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 1/4.

2/3- ,, - 1/4.

4- आश्वलायनमतेऽपि तु तत्रोपविशनमध्वर्युं च प्रतिपाद्य "अग्नीदध्वर्युमन्वारभेत पार्श्वेन पाणिनाऽऽग्नीध्रमङ्गुष्ठेन कनिष्ठेन वेति" इति विशेष उक्तः (1/3)

5/6- का० श्रौ० सू० - 1/4.

7 - ,, - 1/4. ("अन्वावर्ते" इति नित्यानन्दपाठोऽशुद्ध एव) (कातीयेष्टिदीपके पृष्ठे 40)

8/9 - ,, - 1/4.

मन्त्रेण होतृषदने उपविशति । ततो "विश्वकर्मंस्तनूपा असि मा मोदोषिष्टम् मा मा हिंसिष्टमेष वां लोकः"[1] इत्युपांशु जप्त्वा किंचिदुत्सादयति । तत आहवनीयमीक्षमाणो "विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि"[2] इति उपांशु जपति ।

तत्रैव होतैव "अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवता[3] योऽग्निं होतारमवृथा[4] घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं विश्ववारामीडामहै देवाँ ईडेन्यान् नमस्याम नमस्यान् यजाम यज्ञियान्[5]" इति कुशादापनं[6] पठति ।

अध्वर्युश्च होतरि "अग्निर्होता" इत्यादिकं कुशादापनं पठति इति उभाभ्यां पाणिभ्यां जुहूं परिगृह्य उपभृतोपरिमार्गेण जुहूमुपभृत उपरि निधाय[7] "घृतवतीम्" इतिशब्दे होतोक्ते जुहूपभृतौ तथा कृत्वाऽऽदाय स्फ्यीय पूर्वेण[8] परिधीनपरेण सव्यपादन्यक्तोगुल्फः वामतो वेदेर्दक्षिणतो गत्वा यजतिस्थौ

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1/2- का० श्रौ० सू० - 1/4.

3- एतावत्कुशादापनमुच्चैः पठति ।

4- "योऽग्निं होतारमवृथा" इति उपांशु पठति घृतवतीमित्यादि तूच्चैरेव पठति।

5- का० श्रौ० सू० - 1/4.

6- कुशादापनमध्येऽपि नित्यानन्देन यौ प्रयोगौ प्रदर्शितौ ताव[illegible] प्रती

7- अत्र नित्यानन्देन "उपभृतोऽग्रस्य उपरि निधाय" इति यत् प्रतिपादितं तत् प्रामादिकमेव भाति ।

8- अत्र नित्यानन्देन "स्फ्यमुत्तरेण" इति यत् प्रतिपादितं तदनुपपन्नमेव प्रतीयते ।

ततोऽध्वर्युर्जुहूमुपभृतं[1] स्रुवेण ध्रुवाया आज्यं समुद्धृत्य जुह्वामानयति । ततस्तूष्णीमेव स्रुवेणाज्यं ध्रुवाया आज्यं गृहीत्वा "आ प्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञेऽस्मिन्"[2] इति मन्त्रेण ध्रुवामाप्याययति । एवं चतुर्वारं[3] [पञ्चवारं वा][4] करोति । तत उत्थाय सव्यं पादमुद्धृत्योद्यतः धारयन् वेदिं गत्वोदङ्मुखौ जुहूपभृतौ स्तनाभिसम्मितौ धारयन्[5] "औ३श्रा३वय" इत्याश्रावयति ।

ततोऽग्नीध्रः पूर्ववत् स्थितः "अस्तु श्रौ३षट्" इति प्रत्याश्रावयति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "उत्तरां जुहूमुपभृत प्राचीमत्युह्य जुहोति । एवं सर्वत्र" इति [का०श्रौ०सू० - 3/2/24-25] इति वचने सत्यपि यद् देवयाज्ञिकेनोत्थानीयान्दाम्यामिदं जुहू-धृतं नोपात्तं तद्व्याख्यानताडनेन भाति ।

2- का० श्रौ० सू० - 3/3/12.

3- ,, - 3/3/11.

4- पञ्चावत्तिनः पञ्चवारमिति पद्धतिपुस्तकेषु । पञ्चावत्तिनश्च -

"जामदग्न्या वत्सविदावार्ष्टिषेणास्तथैव च ।
भार्गवाश्च्यवना वीर्याः पञ्चावत्तिन ईरिताः ॥"

इति श्रौतपदार्थनिर्वचने । कात्यायनश्रौतसूत्रेऽपि "पञ्चमदग्नीनाम्" [1/9/3] इति एतदनुमितं भाति । माध्यन्दिनीयशतपथब्राह्मणे तु जमदग्नानां पञ्चा-वत्तमयोक्तः [1/7/2/7-8] । "पञ्चावत्तिनामपि च चतुरवत्तमिति वचनात्पञ्चवारमपि" इति महादेवः इति वेङ्कटपणी [का०श्रौ०सू० 3/3/11] आपस्तम्बश्रौतसूत्रे तु "आज्यभागौ चतुर्गृहीताभ्यां जामदग्नीनां तु पञ्चा-वत्ताभ्याम्" इति [2/18].

5- का० श्रौ० सू० - 3/3/1.

ततोऽध्वर्युरुदङ्मुखः "अग्नये यज"[1] इति होतारं प्रेष्य जुहूभृतो स्वनाभिसन्देशे धारयन्नेवावतिष्ठते ।

ततो होता याजिनः "ये३यजामहेऽग्निमनुब्रुवाणो अग्निराज्यस्य वेतु वौ३षट्"[2] इति याज्यां द्रुतं पठति । ततः पूर्ववद् वषट्कारानुमन्त्रणमारम्भा-लम्भनमनुस्पर्शनं च करोति ।

अध्वर्युः प्राचीमवस्थाय प्राच्यभिमुखस्तिष्ठन्नेव[4] वषट्कारान्ते[5] वषट्-कारेण सहैव वा अग्नेरुत्तरपूर्वार्धे आग्नेयाज्यभागं जुहोति ।

ततोऽध्वर्युर्दक्षिणं पादमग्रतोग्रतः धारयन्नुदङ्प्रत्यागत्य वेदेः समीपे उपविश्य ध्रुवावनिधायैव "सोमायानुब्रूहि" इति होतारं प्रेष्यति ।

होता च तिष्ठन् "त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतु३ः[6]"[7] इति पुरोनुवाक्यां किञ्चिद्द्रुतां पठति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 1/9/15.

2- "ये यजामह इत्यादितो याज्यायाः कुर्यात् । आगूर्योऽस्य देवतामन्यत्र स्रुवेभ्यः" इति का० श्रौ० सू० - 5/4.

3- का० श्रौ० सू० - 3/2/24-25.

4/5- „ - 1/9/18.

6- उत्तरत्र एतादृशेषु स्थलेषु "प्रणवान्ताः पुरोनुवाक्याः" इति [का०श्रौ०सू० - 5/4] वचनात् प्रणवः, "प्रणवष्टेः" [8/2/89] इति पाणिनीयं सूत्रं तु वार्त्तिककारभाष्यकाराभ्यामन्यथा गृहीतमपि प्लुतोदात्तत्वयोरेवानुविधायकं भाति प्रकरणात्, न तु प्रणवविधायकम्, अतो नित्यानन्दोक्तं चिन्त्यम् ।

7- का०श्रौ०सू० - 1/41 यों तु "सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृडीको न आविशो३म्" इति पुरोनुवाक्या [का०श्रौ०सू० - 1/12]

ध्रुवायां जुह्वां अदित्यास्त्वा उपस्थ उद्धारा पृथिवी यज्ञो अभि रम्भे[1]" इति मन्त्रेण स्रुवाग्निभार्थं स्रुवमाज्यस्थाल्यां निधायाग्नेयपुरोडाशस्य मध्याद्[2] अङ्गुष्ठपर्वमात्रं तिर्यक् शृताच्छानेनावदाय[3] जुह्वामवधाय पुनराग्नेयपुरोडाशस्यैव पूर्वार्धादवदाय जुह्वामवधाय[4] पुनर्ध्रुवाया आज्यं स्रुवेणादाय तेन जुहूस्थपुरोडाशावदानोपरि प्रत्युपस्तरणं कृत्वा पूर्ववद् स्रुवाग्निभार्थं आज्यस्थाल्या आज्यं स्रुवेणादाय तेन आग्नेयपुरोडाशस्य प्रथमावदानोपरि प्रत्यभिघार्य पुनराज्यस्थाल्या आज्यं स्रुवेणादाय तेन आग्नेयपुरोडाशस्य द्वितीयावदानोपरि प्रत्यभिघार्योत्थाय सव्यं पादमग्रतोग्रतः धारयन् दक्षिणतो गत्वा यजतिदेशं प्राप्य उदङ्मुखो जुहूभृतो स्तनाभिसङ्क्षो धारयन् "ओ३श्रावय" इत्याश्रावयति ।

ततोऽग्नीध्र स्फ्यमिध्मसन्नहनं चादायोत्करस्य पश्चिमतो दक्षिणामुखः स्थितः सन् "अस्तु श्रौ३षट्" इति प्रत्याश्रावयति ।

ततोऽध्वर्युरुदङ्मुखः "अग्निं यज" इति होतारं प्रेष्य जुहूभृतौ स्तनाभिसङ्क्षो धारयन्नेवावतिष्ठते ।

होता याजति: "ये३यजामहेऽग्निर्मूर्धा यज्ञस्य रजसश्च नेता-

---

1- का० श्रौ० सू० - 3/3/12.
2- ,, - 1/9/6.
3- देवयाज्ञिकेन नित्यानन्देन च शृताच्छानेनावदानमुक्तम्, कात्यायनश्रौतसूत्रे शृतावदानस्य विनियोगेऽनुपदिष्टेऽपि तद्योजस्तु दर्शपौर्णमासप्रकरणे कृतो [2/6/42]; आपस्तम्बश्रौतसूत्रे तु "अभिन्दन्नभिघारिताभ्यामङ्गुलिभ्यामङ्गुष्ठेन च पुरोडाशस्यावद्यति" इति [2/18] उक्तम् ।
4- पञ्चावत्तिनस्तु पुरोडाशपश्चाद्भागात् तृतीयमवदानं भवति [का०श्रौ०सू० - 1/9/4]

यस्त्रा निमृड्ढि: अग्ने त्रिवाभि: । दिवि ज्योतिरजस्रं स्वर्गायामग्ने

ध्रुवे हव्यवाहनाऽऽ3[1] वऽ3द्" इति याज्यां ब्रूयां पठति । ततः पूर्ववद् वषट्-

कारानुमन्त्रणमाज्यभक्षणमाघुरस्पर्शनं च करोति ।

अध्वर्युश्च जुहूं प्राचीनकार्थं पौर्णमासिकुशिस्त्वन्तेव वषट्कारान्ते

वषट्कारेण सह वा अग्नेराज्यभागोऽन्याज्यभागयोरन्तरालेऽप्ये प्रक्षी[2]

लिम्पतये जुहोति ।

ततोऽध्वर्युर्दक्षिणं पादमुद्धृत्य सारस्य उदङ् गत्वा हविःसमीपे

प्राचोपविश्य ध्रुवाभिमुखेन "अग्नीषोमाभ्याम्[3] अनुब्रूहि[4]" इति[5] होतारं

प्रेष्यति ।

होता चोत्थाय "अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति-

सूक्तानि हर्यतं भवतं दाशुषे मयः[6] । ओ3म्[7]" इति पुरोनुवाक्यां[8] विनिष्क्रा

---

1- मा० वा० शु० य० वे० म० सं० - 15/23.

2- का० श्रौ० सू० - 3/3/20-22.

3- अग्नीषोमाभ्यामिति पदमुपांशूच्चारयति । "पुरोडाशयन्तरेणाग्नीषोमा उपांशुयाज्यश्च" इति [का० श्रौ० सू० - 3/3/23]

4- अनुब्रूहीत्यस्य सम्प्रैषत्वादुपांशुता न भवति [का०श्रौ०सू० - 1/3/11]

5- आम्नायते वा वैष्णवोपांशुयाजे तु "विष्णवेऽनुब्रूहि" इति प्रैषः ।

6- का० श्रौ० सू० - 1/11.

7- "उपांशुदेवतास्तु पुरोनुवाक्यासु पदान्ते चोपरम्य प्रणवस्तद्वत्: प्लुतं कुर्यात्" इति [का० श्रौ०सू० 3/4] वचनादुपांशुयाजे पुरोनुवाक्योपांत्वेव पठ्यते प्रणवस्तूच्चैः ।

8- आम्नायते वा वैष्णवोपांशुयाजे तु "इदं विष्णुर्विचक्रमे त्रेधा निदधे . . . . अग्निर्मूर्धेऽपि

यजति ।

ततोऽध्वर्युर्जुहूपभृत्य स्रुवेण ध्रुवाया आज्यं सकृद् जुह्वामादाय जुह्वा-मानीय स्रुवेण आज्यस्थाल्या आज्यं जुह्वामेव गृहीत्वा "आप्यायताम् ध्रुवा हविषा स्रुवेण यज्ञं यज्ञम् प्रतिदेवयद्भ्यः । सूर्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्" इति मन्त्रेण ध्रुवामभिघारयति । एवं चतुर्वारं (पञ्चवारं वा) करोति । एवं चतुरवत्तं पञ्चावत्तं वा सम्पाद्योत्थाय सव्यं पादमग्रतोऽग्रतः सारयन् दक्षिणतोगत्वा यजतिदेशं प्राप्योदङ्मुख "ओ३म् श्रा३वय" इत्याश्रावयति ।

ततोऽग्नीध्र पूर्ववत् स्थितः "अस्तु श्रौ३षट्" इति प्रत्याश्रावयति।

ततोऽध्वर्युरुदङ्मुखः "अग्नीषोमौ[2] यज[3]" इति[4] होतारं प्रेष्य जुहूपभृतौ स्वनाभिसन्नद्धौ धारयन्नेवावतिष्ठते ।

ततो होता याजति: "ये३यजामहे अग्नीषोमौ जुषाणावग्नीषोमौ

---

पूर्वमुक्तत्वात् . . . .

यदत्र । सकृन्मस्य पाहिरे ओ३म्" इति (भा०वा०श्रु०प०वे०म०स० 5/15) पुरोनुवाक्या भवति । साम्नायवर्जित स्वाग्नीषोमीय यथोपांशुयाजः ।

1- का० श्रौ० सू० - 3/3/12.

2- "अग्नीषोमौ" इति पदमुपांशूच्चारयति उपांशुयाजत्वात् (का०श्रौ०सू० - 3/3/23)

3- "यज" इत्यस्य प्रैषत्वादुपांशुता न भवति (का०श्रौ०सू० - 1/3/11)

4- असान्नाय्ये यागे तु "विष्णुं यज" इति प्रैषः, तत्र विष्णुमित्युपांशु-प्रयोगः, भवतीति सूत्रे: ।

होता चोच्चारयति "प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ त्वां शश्वन्त उपयन्ति वाजाः[1]" इति पुरोऽनुवाक्यां विवक्ष्यन्तीं पठति ।

ततोऽध्वर्युरुपभृतः स्रुवेण आज्यं स्रुवेणादाय तेनाज्येन जुह्वां पुरोडाशावदानस्थापनस्थाने सकृदुपस्तीर्य जुह्वामेव स्रुवेणाज्य धारया आज्यं गृहीत्वा "आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्[2]" इति मन्त्रेण ध्रुवामभिघार्य ध्रुवामाज्यभागां निधाय आग्नेयपुरोडाशस्योत्तरार्धादवदाय जुह्वामवदायाग्नीषोमीयपुरोडाशस्याप्युत्तरार्धाद्[3] अवदाय[4] जुह्वामवदाय पुनर्ध्रुवाया आज्यं स्रुवेणादाय तेन जुह्वपुरोडाशावदानोपरि प्रत्यभिघारणं कृत्वा पूर्ववद् ध्रुवामभिघार्य पुनर्ध्रुवाया आज्यं स्रुवेणादाय तेन जुह्वपुरोडाशावदानोपरि पुनः प्रत्यभिघारणं कृत्वा[5] पुनरपि पूर्ववद् ध्रुवामभिघार्य अवदानप्रत्यभिघारणमकृत्वैव[6] उत्थाय सव्यं पादमुत्क्रान्तः वाहयन् दक्षिणतो गत्वा पश्चिमायां प्राङ्मुखो

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० के० म० सं० - 17/76.
2- का० श्रौ० सू० - 3/3/12.
3- ,, - 3/3/26.
4- "द्व्यवदानं हविष्कृतः" इति [का०श्रौ०सू० 1/9/1] वचनात् हविष्कृता-
गाय चतुरवत्तिभेदस्मादु हविष पञ्चावत्तेन पञ्चावत्तिनां तु पञ्चावदा-
दानं कर्तव्यम् । एवं च जुह्वामपि उपस्तरणं एकैकमवदानेषु पञ्चावत्तं जायते
इति बोध्यम् ।
5- "द्विरभिघारणम्" इति का० श्रौ० सू० - 1/9/10.
6- "अवदाय प्रत्यभिघारणं प्राङ् स्विष्टकृतः" इति का० श्रौ० सू० - 1/9/11.

पञ्चसु तेषु भागेषु किञ्चित्[1] पृथक्पात्रेषु अवदाय ऋत्विग्भ्य उपहरति । ततो ब्रह्मादयः[2] स्वं स्वं भागमाददते, यजमानोऽपि पञ्चमं भागमादत्ते । ततः सर्वे प्राशनाय सन्धेष्व विहारात् निर्गच्छन्ति[3] ।

ततो ब्रह्मा पूर्वं चतुर्धाकरणभागं प्राश्य[4] पश्चात् इडाभागं प्राश्ना-ति ।

होता यजमानश्चेडाभागं[5] प्राश्य पश्चात् चतुर्धाकरणभागं प्राश्नात्येता-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "यजमानोऽपि इडायामवत्तस्य पञ्चमं भागं भक्षयति न न्यूनाधिकम्" इति देवयाज्ञिकपद्धतौ ।

2- होता ब्रह्मा अध्वर्युः यजमान आग्नीध्र इति क्रम दर्शपूर्णमासप्रकाशे 566 पृ०

3- एतद् विहारान्निर्गमनं देवयाज्ञिकेन नित्यानन्देन नोल्लिखितम्, सूत्रे सूत्रे च नोपलभ्यमानत्वात्, दर्शपूर्णमासप्रकाशे श्रौतपदार्थनिर्वचने च नैवं निर्गमनमुल्लिखितम् ।

4- यद्यपि सूत्रे (का०श्रौ०सू० - 3/4/21)(18)) "उपहूतां प्राश्नन्ति युक्ताः, यजमानश्च" इत्येवोल्लिखितत्वात्प्राशनमेवाभिहितम् भाति, तथापि देवयाज्ञिकेन नित्यानन्देन च चतुर्धाकरणभागादिक्रमेणैव प्रतिपादितम् । श्रौतपदार्थनिर्वचने तु इडाप्राशने स्वामी चतुर्धाकरणभागप्राशनं प्रतिपादितम् 34 पृ०, दर्शपूर्णमासप्रकाशेऽपि एवमेव 566-568.

5- होतुरवान्तरेडाभक्षणं देवयाज्ञिकेन नित्यानन्देन च नोल्लिखितम्, श्रौतपदार्थनिर्वचने तु "होता पाणिगृहीतामवान्तरेडां मन्त्रेण भक्षयति तूष्णीमितरे यथा-दिमन्त्रेण यजमानोऽनुमन्यते । ततः सर्वे यजमाना इडां भक्षयन्ति" इत्युक्तम् 34 पृ०। "(अवान्तरेडायां) प्राशितायां . . . यजमानपञ्चमा इडां प्राश्य" इति आपस्तम्बश्रौतसूत्रेऽपि (3/2). "होतावान्तरेडां प्राश्नाति, तूष्णी-
. . . . अग्निमुखेऽपि

ततो यजमानप्रमुखा ऋत्विजः कृतहस्तप्रक्षालनाः मन्त्रेण विहारं प्रविश्य वेदेः पश्चादुपविश्य पृथक् "सुमित्रिया न आप ओषधयः सन्तु[1]" इति मन्त्रेण ब्रह्म-होत्रध्वर्य्वग्नीद्यजमानक्रमेण पवित्रयोः स्थिताभिरद्भिरात्मानं शोधयन्ते[2] ।

ततोऽध्वर्युः "यजमानस्य प्राणापानौ पातम्[3]" इति मन्त्रेण तृणौ वा[4] पवित्रे प्रस्तरे निदधाति[5] ।

ततोऽध्वर्युरेव कुशपिण्डात् पूर्वमाग्नेयपुरोडाशाद्(द्व)वत्तं ब्रह्मप्राशित्रभागो अवदितं ब्रह्मभागमाहवनीयं प्रदक्षिणीकृत्य नीत्वा ब्रह्मणे समर्पयति, ततो यथागतं प्रत्यागत्य ध्रुवाया अग्रतः अवदितं यजमानभागमादाय तं गार्हपत्यमार्गेण नीत्वा यजमानाय समर्पयति[6] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० म० सं० - 6/22.

2- पवित्राभ्यां शोधयन्ते इति कर्कः पवित्रस्थाभिरद्भिः शोधयन्ते आप इति मन्त्र लिङ्गात् शाखान्तरादिति देवयाज्ञिकः, "पवित्राभ्यां द्वौ मार्जयन्ते" इति वैतानसूत्रे 7/2; "अद्भिरन्तर्वेदिमुत्तरे मार्जयित्वा" इति आपस्तम्बसूत्रे 3/3.

3- का० श्रौ० सू० - 3/4/22[25]

4- .. - 3/4/23[26]

5- "अथ वा ब्रह्मा प्राश्नाति [प्राशित्रम्]" इति का०श्रौ०सू० - 3/4/24[27]; "माध्यन्दिनीयानामेव ब्राह्मणं युक्तं शाखान्तरात्" इति महादेवः, प्राशित्र-प्राशनानन्तरमेवनिरन्तरमेव पाठः - मा०श०प०ब्रा० - 1/7/4/18.

6- ब्रह्मयजमानभागयोरेताभ्यां भागाभ्यां भक्षणं कुर्यात् सूत्रे च न प्रस्फुटम्, तथापि

. . . . ग्रन्थेऽपि

द्विष्मो वाजस्यैनम्प्रसवेनापोहामि[1]" इति मन्त्रेण[2] उपभृतं प्राङ्मुखीम् प्रतीचीं दिशं बहिर्वेदि प्रेरयति ।

ततोऽध्वर्युरुपभृदभ्यूह्य[3] स्रुचौ च प्रत्यासाद्य[4] जुह्वामादाय तत्स्थेनाज्य निस्रावेण "वसुभ्यस्त्वा [अनज्मि][5]" इति मन्त्रेण पश्चिमपरिधिमनक्ति, ततो "रुद्रेभ्यस्त्वा [अनज्मि][6]" इति मन्त्रेण[7] दक्षिणपरिधिम्, "आदित्येभ्यस्त्वा

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० के० म० सं० - 2/15; का० श्रौ० सू० - 3/5/17-18.

2- शुक्लयजुर्वेदसंहितायां "अग्नि: अग्नीषोमौ अग्नीषोमौ तमपनुदन्तु यमद्वेष्टि यजमानो द्वेष्टि [illegible] वाजस्यैनम्प्रसवेन प्रोहामि" इत्युपसूत्रेणमन्त्र: [का०श्रौ०सू० - 3/5/19]। तथाऽऽम्नाये वा विष्णुरिति इन्द्राग्नी इति सान्नाय्यवति च इन्द्र: इति महेन्द्र इति वापि यथार्थं प्रयोग: । यत्तु नित्यानन्देनोपांशुयाजदेवतोल्लेखनं न विहितं तच्चिन्त्यमेव, "यथादैवतमन्यत्" इति [का०श्रौ०सू० - 3/5/18] सूत्रात् ।

3- यद्यपि कात्यायनेन "अभ्यूह्य" इत्येवोक्तम् [3/5/20] तथापि स्रुचौ विनियोगत्वात् शाखान्तरानुसृत यथाभ्यूहनमपेक्षितम्। "ऊर्ध्वामुपभृतं प्रविध्याभ्यूह्य" इति हि वैखानसश्रौतसूत्रे [7/5]। "अथ स्तन्नामिति मन्त्रेणोपभृतं प्रतीचीं बहिर्वेदि निरसित्वा जुह्वैनामभ्युदाहृत्य" इत्याप-स्तम्बोऽपि [3/5]। अतो "जुहूमभ्यूह्य" इति नित्यानन्दोक्तमुपेक्ष्यम्। "स्रुचौ अभ्यूह्य" इति देवयाज्ञिकोक्तमपि चिन्त्यम् ।

4- यद्यपि प्रत्यासादनं कात्यायनेन नैवोक्तं तथापि शाखान्तरविहिताभ्युह-विधानात् शाखान्तरोक्तं प्रत्यासादनमपेक्षितं भाति ।

5/6- मा० वा० शु० य० के० म० सं० - 2/16.

7- सर्वानुक्रमण्यात् [1/7] अस्य मन्त्रस्य परिधिदेवतात्वकथोक्तत्वेनास्य रौद्रत्वा-भावादस्योच्चारणे नापामुपस्पर्शनमिति देवयाज्ञिक: ।

(कपिञ्जलम्)" इति मन्त्रेणोत्तरपरिधिं धारयति । ततो जुहूं प्रस्तरस्योत्तरतः[2] सादयति[3] ।

ततोऽध्वर्युः प्रथमं (परिधि) परिधिं गृहीत्वा[4] "ओ३ श्रावय" इत्याश्रावयति ।

ततोऽग्नीत् पूर्ववत् स्थितः "अस्तु श्रौ३षट्" इति प्रत्याश्रावयति ।

ततोऽध्वर्युः "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि[5]" इति होतारं प्रेष्यति ।

होता च "इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाक-मृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि[6] । उपश्रुती दिवस्पृथिव्योरो-मन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्तां[7] शंगयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती च पयस्वती च सूपचरणा च स्वधिचरणा च तयोराविदि । अग्नि-

---

1- भा० का० सू० का० के० भ० सं० - 2/16.
2- "प्रस्तरादुत्तरतः" इति नित्यानन्दप्रयोगः "षष्ठ्यतसर्थप्रत्ययेन" इति पाणिनेरनुशासनस्य (2/3/30) अननुसरणात् चिन्त्यः ।
3- "अथैनं प्रस्तरादध्वर्युर्जुहूं सादयित्वा" इति वैखानसश्रौतसूत्रे (7/3).
"न प्रस्तरे जुहूं सादयति" इत्यापस्तम्बः (3/5)
4- प्रथममध्यममिति देवयाज्ञिकः, एवं चोपदिष्टं बोधायनाचार्यैरित्याचार्यां प्रतिभाति।
5- का० श्रौ० सू० - 3/6/2.
6- एतद्वाक्यो विस्तरो यद्यपि कात्यायनश्रौतसूत्रे नैवानुदिष्टस्तथापि शाङ्खा-यनश्रौतसूत्रे तु निर्दिष्टः - 1/14/1-5.

रिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महो-
ज्यायोऽकृत । अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अग्नीषोमौ[1]
इदं हविः अजुषेतामवीवृधेतां[2] महो ज्यायः अक्राताम्[3] । अग्नीषोमाविदं[4] हविर-
जुषेतामवीवृधेतां महो ज्यायोऽक्राताम्[5] । देवा आज्यपा आज्यमजुषन्तावीवृधन्त
महो ज्यायोऽक्रत । अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अस्या-
मृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानः । आहिताग्निर्दीर्घ-
मासाजी[6] शिवराजः कौण्डिन्यायनः[7]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- उपांशुयाजदेवतावाचकत्वादेतस्य पदस्योपांशुप्रयोगः, स्वाम्नाये सोऽस्मिन्
स्थाने विष्णुरिति प्रयोगः ।

2- "उपांशुयाजमन्तरेण देवा आज्यपा आज्यमजुषन्तावीवृधन्ताक्रतेति च, उभौ च,
उपांशुयाजो विष्णुर्वा च" इति [का०श्रौ० 1/13] वचनादजुषेतामित्यादिना-
मपुत्रपि प्रयोगः, कौ स्वशाम्नाये अजुषतावीवृधतेति प्रयोगः ।

3- "अक्राताम्" इत्यस्यापुत्रपि प्रयोगः, कौ स्वशाम्नाये अकृत इति प्रयोगः ।

4- कौ स्वशाम्नाये इन्द्राग्नी इति, शाम्नायकति तु इन्द्र इति महेन्द्र इति
वाप्रयोगः ।

5- शाम्नायकति कौ तु अकृत इति प्रयोगः ।

6- यद्यपि नित्यानन्दैर्वाक्यः प्रयोगो नैव प्रदर्शितः, तथापि अस्माभिर्दृष्टे
नारायणभट्टकृताकरस्य [77] पृष्ठे लिखिते दर्शपूर्णमासप्रयोगपुस्तकेऽस्ति, कात्यायन-
श्रौतसूत्रे [1/8] स्पष्टतया केचिदस्माभिर्नैवोपलब्धः ।

7- यजमाननाम्नः प्रतिनिधित्वेऽन्यानुः यद्यपि शर्मान्तं ब्राह्मणानामिति मनुस्मृत्यादि-
षु प्रसिद्धिः पारस्करगृह्यसूत्रेऽपि [1/17/4] तथैव विधिः, तथापि ब्राह्मणजातिषु
नामोपादाने शर्मान्तनाम्नः प्रयोगस्यादर्शनाद्गोत्रापत्यनाम्न एव दर्शनादस्मा-
भिरेवमुक्तम् । कुत्रचित्तु शर्मान्तनाम्नोऽप्रसिद्धावपि गृह्यसूत्रेऽपि विहितत्वात्
शर्मान्तं नाम प्रयोक्तुमुचितमेवेति बुधैर्विभावनीयम् ।

पुच्छतः[1] उत्तरान्वेयव्यामाशास्ते द्यौ दक्षिणमाशास्ते प्रत्यगन्त्यामा-शास्ते दिक्षवन्तामाशास्ते । यदनेन हविषाशास्ते तदश्याद् तदृध्याद् तदस्मै देवा रासन्तान्तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषाः । इष्टञ्च वित्तञ्चोभे चेन्द्र द्यावापृथिवी अंहसस्पातामिहगतिर्वामदेवस्य नमो देवेभ्यः[2]" इति सूक्तवाकं पठति[3] ।

सोऽपि सूक्तवाकमध्ये प्रस्तवित अध्वर्युः "द्यावानाम्याया-पृथिवी भिन्नावक्षो रक्षा वृद्धयाक्ताः[4]" इति मन्त्रेण विधृतिभ्यां प्रस्तरमादाय

---

1- देवस्यां जातवेदाक्षौ नामधं नाम भविष्युर्लीति । तथा हि वर्त्मोपितायाद् "कुमारस्य पिता द्वे नाम्नी कार्येन्नाक्षत्रिकं नामाभिप्रायिकं च, . . . नाक्षत्रिकं तु नाक्षत्रदेवतासमानार्थं द्व्यक्षरं चतुरक्षरं वा" इति [4/8/79]; "नक्षत्रदेवतायुक्तं तथैव तु न चेष्यते" इति याज्ञवल्क्यगृह्ये [उत्तर० 1/70] यद्यपि यथा शाङ्खायनेन "असावसाविति नाम्नी यजमानस्याभिव्याहृत्य" [1/14/17] इत्युक्तं, यथा वाऽऽश्वलायनेन "असावसावित्यस्यादाय नाम्नी" [1/7] इत्युक्तं न तथा कात्यायनेन सौत्रसूत्रे प्रोक्तं तथापि -

"नक्षत्रदेवता ह्येता एताभिर्यज्ञकर्मणि ।
यजमानस्य शास्त्रोक्तं नाम नक्षत्रजं स्मृतम् ॥"

इति वेदाङ्गज्योतिष [श्लो० 35] वचनात् नाक्षत्रिकं नामापि प्रयोक्तुं शक्यमिति भाति । श्रुतौ तु "नाम गृह्णाति" इत्येवास्ति - [मा० श० प० ब्रा० - 1/9/1/12]

2- मा० श० प० ब्रा० - 1/9/1/1-23.

3- का० श्रौ० सू०

4- मा० वा० शु० य० वे० मा० सं० - 2/16.

होता च "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे"[1] इति शंयुवाकं पठति । ततो "अन्या"[2] इति मन्त्रेण प्रादेशं वेदि श्रोणी निदधाति च ।

ततोऽध्वर्युः प्रथमं [परिधिम्] परिधिं "यमग्ने परिधिमपर्यधत्था अग्ने देव पणिभिर्गुह्यमानः । तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयातै"[3] इति मन्त्रेण स्रुक्संस्रावेणाक्त्वानुप्रहृत्य दक्षिणोत्तरौ परिधी कुर्वन् "अग्नेः प्रियं पाथोऽपीतम्"[4] इत्यनेन मन्त्रेण स्रुक्संस्रावेणाक्त्वानुप्रहरति ।

ततोऽध्वर्युरेव जुहूपभृतावादाय जुहोतिस्थाने उपविश्य "संस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः । इमां वाचमभिविश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वं स्वाहा वाट्"[5] इति मन्त्रेणानाभ्यां स्रुग्भ्यां संस्रवमाहवनीये जुहोति ।

ततोऽध्वर्युः "घृताची स्थो धुर्यौ पातं सुम्ने स्थः सुम्ने मा धत्तम्"[6] इति मन्त्रेण जुहूपभृतावनसो धुरि निदधाति[7] ।

---

1- का० श्रौ० सू० - 1/9.
2- तत्र [मा० श० प० ब्रा० - 1/9/1/29]
3/4- मा० वा० शु० य० वे० सं० - 2/17.
5- ,, - 2/18.
6- ,, - 2/19.
7- यदि पात्र्याः शकटाद् हविर्गृहीतं तदा वेद्या उत्तरांसे स्फ्यमुद्धृत्य निधाय तस्योपरि "घृताची" इत्यादिना मन्त्रेण जुहूपभृतौ निदधाति ।

ततो यजमानः[1] "यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व[2]" इति मन्त्रेण स्रुचोपगूहनं[3] वेदिमालभते ।

अथ पत्नीसंयाजाः

ततोऽग्नीदाज्यस्थालीं सोदकमञ्जलिं[4] चादाय होता च वेदमादाय गार्हपत्यमुत्तरेणाग्नीत्प्रथमौ प्रत्यञ्चौ गत्वा गार्हपत्यस्य पश्चिमत उत्तरभागे ऊर्ध्वजानु दक्षिणाभिमुखोऽग्नीदुपविशति, होता च मध्यभागे गार्हपत्यस्य पश्चिमतः प्राङ्मुख ऊर्ध्वज्ञुर्व उपविशति; अध्वर्युश्च जुहूं स्रुवं चादाय[5] गार्हपत्यदक्षिणाग्नी अन्तरेण[6] गत्वा पत्न्या सह गार्हपत्यस्य दक्षिणत ऊर्ध्वजानुरेव उपविशति । ततः पत्नीसंयाजेष्वनु वदन्ति ।

---

1- यद्यपि वेद्यालम्भनं कर्त्रीति कात्यायनेन विशेषतो नोक्तं तथापि मन्त्रलिङ्गादापस्तम्बेनास्य कर्मणो याजमानकाण्डे पठितत्वाच्च वेद्यालम्भनं यजमानकर्तृकमिति देवयाज्ञिकः ।

2- मा० वा० शु० य० वे० मा० सं० - 2/19.

3- एतत् स्रुचोपगूहनं कात्यायनेनानुक्तमपि देवयाज्ञिकादिभिः निर्दिष्टत्वादुक्तमिति ।

4- कात्यायनेनास्य विशेषानुक्तत्वादेतदापस्तम्बश्रौतसूत्रे [3/8] प्रतिपादितं वेदितव्यम् ।

5- अत्रापस्तम्बेनाध्वर्योर्जुह्वा स्रुवेण ग्रहणमुक्तम्, तथापि तत्र जुहूभृतो ध्रुवोपनिधानस्यानुक्तत्वात् अत्र तु तस्य कृतत्वादुपभृत उपयोगस्याभावादेवमुक्तं वेद्यम् । [मा०श०प०ब्रा० 1/9/2/1]

6- का०श्रौ०सू० 3/7/2 [अत्रैकेऽपि वेदिं मध्ये कृत्वा अध्वर्योः सञ्चरास्तत एव वेदितव्याः]

ततश्चतुर्थं गृहीत्वा दक्षिणं जान्वाच्य होतारं "सोमायानुब्रू३हि"[1] इति प्रेष्यति ।

ततो होता[2] "आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्‌गथो३म्"[3] इति त्रिरुच्चैः पुरोनुवाक्यां पठति ।

अध्वर्युश्च क्रमेण आज्यस्थाल्या आज्यं चतुर्थं स्रुवं गृहीत्वा "ओ३-श्रा३वय" इत्याश्रावयति ।

अग्नीच्च "अस्तु श्रौ३षट्" इति प्रत्याश्रावयति ।

---

1- यद्यपि कात्यायनश्रौतसूत्रे "[पत्नीसंयाजैः] उपांशु चरन्ति, पश्चात्प्रदे सर्वे देवतान्यन्" इति [3/7/5-6] प्रोक्तम् तथापि "उपांशुयाजस्योपांशु-देवता याज्यानुवाक्यायुक्ताभिरुक्ताभिरिति च, उच्चैरन्यत्, उपांशुयोगि-नीनां चेतम्" इति [1/13]. "उपांशुदेवत्यासु पुरोनुवाक्यासु पदान्ते बोधनस्य प्रणवस्थानुच्चैः प्रणवं कुर्यात्" इति [5/4] कात्यायनश्रौतसूत्रे दर्शनात्, "प्रणवो येषामन्तो वषट्कारः सर्वेषाः प्रेषाश्चोच्चैरुपांशुविच्च" इति [1/1/36] शाङ्‌खायनवचनाच्च प्रणवादीनामुच्चैस्त्वमेवोचितं प्रतीयते तेषामन्यव्यवहितताया स्वादुत्तरकर्मकरणसौकर्यार्थमावश्यकत्वात् । तथापि पत्नी-संयाजेषु इत्यत्र परम्परतनीयमाचार्यत्वादोऽव्यवहिताकोलेन सङ्‌केतान्तरेण चापि उत्तरकर्मकरणं सम्भवतीति "पश्चात्प्रदे सर्वम्" इति वचनात्मकर्यात् प्रणवा-दीनामप्युपांशुत्वमेवेति याज्ञिका मन्यन्ते । आपस्तम्बेन तु पत्नीसंयाजेषु वैकल्पिकतया स्थानः स्वरोऽपि विहितः [3/8]

2- "जघनेन गार्हपत्यमुपविश्य चत्वारः पत्नीसंयाजाः" इति [का०श्रौ०सू० 1/9] इति वचनादत्रापि होतोपविष्ट एव ।

3- मा० वा० शु० य० वे० मा० सं० - 12/112.

ततोऽध्वर्युः "सोमं यज" इति होतारं प्रेष्यति ।

होता च "ये३यजामहे[1] सोम तवो पयांसि समुयन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व३ऽऽ३वौ३षट्[2]" इति कुर्वां याज्यां पठति । ततः पूर्ववद् वषट्कारानुमन्त्रणादिकमेव कृत्वात्मानमनुस्पर्शनं च करोति ।

अध्वर्युश्च वषट्कारान्ते वषट्कारेण स्रुवेण वा गार्हपत्याग्नौ जुहोति ।

ततोऽध्वर्युः "त्वष्टारमनुब्रूहि" इति होतारं प्रेष्यति ।

होता च "इहत्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवलो३म्[3]" इति पुरोनुवाक्यां त्रिःश्वस्तां पठति ।

ततोऽध्वर्युः स्रुवेणाज्यस्थाल्या आज्यं चतुरं जुह्वां गृहीत्वा "ओ३श्रा३वय" इत्याश्रावयति ।

ततोऽग्नीत् "अस्तु श्रौ३षट्" इति प्रत्याश्रावयति ।

ततोऽध्वर्युः "त्वष्टारं यज" इति होतारं प्रेष्यति ।

होता च "ये३यजामहे त्वष्टारन्तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्विरराणः स्यस्व । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा

---

1- नित्यानन्देन पत्नीसंयाजेषु "ये यजामहे" इत्यस्यादेः प्लुतत्वं यन्न कीर्तितं तच्चिन्त्यमेव ।

2- मा० वा० शु० य० वे० मा० सं० - 12/113.

3- का० श्रौ० सू० - 1/10.

जायते देवकामा३ वौ३षट्[1]" इति द्रुतां याज्यां पठति । पूर्ववद्वषट्कारानुमन्त्रणमु-
पांशु कुर्यादात्मानमन्त्रणमुपस्थानं च कुर्यात् ।

अध्वर्युश्च वषट्कारान्ते वषट्कारेण सहैव वा गार्हपत्ये जुहोति ।

ततोऽध्वर्युरन्तर्वेद्यनिकटं गार्हपत्यात् प्राङ् प्रसृज्य पत्न्यन्वारब्धो "देवा-
नाम्पत्नीभ्योऽनुब्रूहि" इति होतारं प्रेष्यति ।

ततो होता "देवानाम्पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये
वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म
यच्छत[2]" इति त्रिरभ्यस्तां पुरोऽनुवाक्यां पठति ।

ततोऽध्वर्युः स्रुग्भ्यामाज्यमादाय चतुर्गृहीतं जुह्वां गृहीत्वा "ओ३-
श्रा३वय" इत्याश्रावयति ।

ततोऽग्नीत् "अस्तु श्रौषट्" इति प्रत्याश्रावयति ।

ततोऽध्वर्युः देवानाम्पत्नीर्यज" इति होतारं प्रेष्यति ।

होता च "ये३यजामहे[3] देवानाम्पत्नीरुतग्ना व्यन्तु देवपत्नीरिन्द्रा-
ण्यग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतु-
र्जनीना३म्[4] वौ३षट्[5]" इति द्रुतां याज्यां पठति । पूर्ववद् वषट्कारानुमन्त्रणमुपांशु

---

1/2- का० श्रौ० सू० - 1/10.

3- अत्र "ये यजामहे" इत्यस्यानन्तरं देवानाम्पत्नीरिति पदं देवताद्योतकम्
"उतग्नाः" इत्यादिमन्त्र [ऋ० 5/46/8].

4- अत्र नित्यानन्देन प्रदर्शितोऽनुस्वारप्रयोगश्चिन्त्यः, वाजसनेयिनां मते
प्रयोगे वकारे परे पदान्तस्थस्य मकारस्य वैकल्पिकानुनासिकवकारतया प्राप्ते-
र्निर्दिष्टत्वात् ।

5- का० श्रौ० सू० - 1/10.

कृत्वात्मालम्भनमाप्स्पर्शनं च करोति ।

अध्वर्युश्च वषट्कारान्ते वषट्कारेण स्रौव वा गार्हपत्ये जुहोति ।

ततोऽध्वर्युस्तद्धविः हस्तेनापनीय पत्न्याश्चारम्भे त्यक्ते "अग्नये गृहपतयेऽनुब्रूहि" इति होतारं प्रेष्यति ।

ततो होता "अग्निर्होता गृहपतिः स राजा विश्वावेद जनिमा-जातवेदाः । देवानामुतो मर्त्यानां यजिष्ठः स प्रयजतामृतावोऽ३म्" इति पुरोनुवाक्यां विलम्बितां पठति ।

ततोऽध्वर्युः स्रुगाज्यस्थाल्या आज्यं चतुर्वारं जुह्वां गृहीत्वा "ओ-श्रावय" इत्याश्रावयति ।

ततोऽग्नीद् "अस्तु श्रौऽ३षट्" इति प्रत्याश्रावयति ।

ततोऽध्वर्युः "अग्निं गृहपतिं यज" इति होतारं प्रेष्यति ।

होता च "येऽ३यजामहेऽग्निं गृहपतिं हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे । सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक्-सम्मिमीहि श्रवांसिवौऽ३षट्" इति याज्यां द्रुतां पठति । ततः पूर्ववद् वषट्कारा-नुमन्त्रणादि कृत्वात्मालम्भनमाप्स्पर्शनं च करोति ।

अध्वर्युश्च वषट्कारान्ते वषट्कारेण स्रौव वा गार्हपत्ये किञ्चिदाज्यमव-शेष्य जुहोति । ततः स्रुवं भूमौ निदधाति च ।

---

1/2- का० श्रौ० सू० - 1/10.

ततोऽध्वर्युरिडापात्र्यां ध्रुवाया आज्यमानीतः पञ्चकृत्व आज्यमादाय प्रत्यङ्मुखो होत्रे इडां प्रदायेडामविकृत्य होतारं पत्नीं च प्रदक्षिणीकृत्यागत्य होतुः पुरस्तात् प्रत्यङ्मुख उपविशति ।

ततो होताऽध्वर्यवे इडां समर्पयति ।

ततोऽध्वर्युरिडां प्रतिगृह्येडायाः सकाशात्स्रुग्भ्यामादाय होतुस्तर्जन्या उत्तमपर्वणि पर्वणी स्रुवेणानक्ति ।

ततो होता वामपर्वणाधरोष्ठमुत्तरपर्वणोत्तरोष्ठं च पूर्ववत् समन्तं निलिम्पति ।

ततोऽध्वर्युर्होतुर्दक्षिणपाणितले स्रुवेणेडाया आज्यं स्वल्पं स्वल्पं कुर्वन्नवदति ।

---

1- पत्नीसंभाजनाङ्गेडां प्रतिपादयन्नाश्वलायनः "आज्यं पाणितलेऽवदायेडामनुपहूय तां प्राश्नीयात्" इति |1/10| वदतीति. निरजनार्थ "अध्वर्युः पूर्ववदङ्गुलिपर्वणी अनक्ति । तदङ्गाय होताय उपस्पृशति । दक्षिणे होतुः पाणावध्वर्युश्चतुर आज्यबिन्दूनिडामवदति षड्ग्नीध्रः । इडामुपह्वयमाने होतारमध्वर्युराग्नीध्रः पत्नी चान्वारभन्ते । उपहूतेयं यजमानेत्युच्यमाने उपहूता पशुमत्यसानीति पत्नी जपति" |7/7| इति वदतीति. आपस्तम्बोऽपि प्रायेणैवमेव वदतीति |3/7| शाखान्तरे पत्नीसंभाजनाङ्गेडाऽवदानादिकं विस्पष्टं प्रतीयते । माध्यन्दिनीये तु विशेषस्य अकथनात् लिङ्गात् कृत्वा "इडान्तं भवति" |1/7/2/14| इत्युक्तत्वात्. कात्यायनेन च "पूर्ववदिडान्तं चेदेडां कुर्याद् यजमानस्थाने पत्नीति विशेषः" |1/10| इत्युक्तत्वात् पुरोडाशेडानुरूपेणाज्येडापीति व्यवसीयते ।

जपति[1] ।

आज्येडोपह्वाने समाप्ते यजमान[2] आज्येडाभागात् छित्वाग्र्य उपहवति स्वभागं याचते । ततः पूर्ववत् सर्वे सम्भूय निष्कृष्टेडाभागं प्राश्य हस्तौ प्रक्षाल्य मुखं च, सव्येनैव प्रविश्य वेदेः पश्चिमत उपविश्य ब्रह्मादिक्रमेण बर्हिर्मुष्टिकमादाय "सुमित्रिया न आप ओषधयः सन्तु[3]" इति मन्त्रेण मार्जयन्ते ।

ततः सर्वे यथास्थानमुपविशन्ति[4] ।

अध्वर्युस्तु आज्यविलापनीमादाय तां प्रस्तरादाहवनीये उद्गृह्य स्रुवं प्रगृह्य गत्वा गार्हपत्यस्योत्तरत उपविश्य "अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या अविषन्नः पितुं कृणु । सुषदा योनौ स्वाहा वाट्[5]" इति मन्त्रेण स्रुवचतुर्भागात् गार्हपत्ये जुहोति ।

ततोऽध्वर्युः स्रुवमाज्यस्थालीं चादाय गार्हपत्यमप्रदक्षिणेन च

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- कर्कानुसारिणा उपहूतोऽयमयजमानइत्यादिकं प्रयोगं प्रतिपादयता नित्यानन्देनापि यजमानस्यायं जप उक्तः, वस्तुतस्तु पत्न्या अयं जपो भवितुमर्हति. "उपहूतेयं यजमानेत्युच्यमाने उपहूता पशुमत्यसानीति पत्नी जपति" इति वैखानसश्रौतसूत्रे [7/9] श्रूयत इति चैतद् विमृश्यम् ।
2- "यजमानस्थाने पत्नीति विशेषः" इति [का0श्रौ0सू0 - 1/10] इति वचनादपि पत्न्येवाधिक्रियते न वेति विचार्यम् ।
3- मा0 वा0 शु0 य0 वे0 म0 सं0 - 6/23.
4- अतः परं विशिष्टः शंयुवाको वैकल्पिकत्वात् [का0श्रौ0सू0 - 3/7/10] तस्य परिकल्पत्वाच्च त्यक्तः ।
5- मा0 वा0 शु0 य0 वे0 म0 सं0 - 2/20.

परीत्य[1] दक्षिणाग्नेः पश्चाद् उपविश्य[2] स्रुवेणाज्यस्थाल्या आज्यं सकृद्गृहीतमादाय[3] "अग्नये संवेशपतये स्वाहा[4]" इति मन्त्रेण दक्षिणाग्नौ जुहोति । ततः पुनस्तथै- वाज्यं गृहीत्वा "सरस्वत्यै यशोभगिन्यै स्वाहा[5]" इति मन्त्रेण तत्रैव जुहोति ।

ततोऽध्वर्युः पूर्वं जुहूप्रक्षितात् पिष्टलेपात् आनीय स्रुवेणाज्यस्थाल्या आज्य- मादाय जुह्वामुपस्तीर्य तत्र पिष्टलेपानोप्य पुनः स्रुवेणाज्यस्थाल्या आज्यमादाय प्रत्युपस्तीर्य[6] "उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा[7]" इति मन्त्रेण जुहोति[8] ।

ततः पत्नी "वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदो भवस्तेन

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अत्र नित्यानन्दोक्तम् "गार्हपत्यदक्षिणाग्न्योरन्तरतो विनिष्क्रम्य अप्रदक्षिणं गार्हपत्यं परीत्य" इति अध्वर्युलभ्यं सूत्रानुक्तं नैव प्रतीयते ।

2- पश्चादुपविश्येति भाष्ये [3/7/18] देवयाज्ञिकः, उत्तरत उपविश्येति नित्यानन्दः, "प्राङुदङ् वा" इति [का० श्रौ० सू० 1/7/24] परिभाषितत्वाद् देवयाज्ञिकमत एवोपादेयो विभाव्यते, वचनान्तराभावे परिभाषायाः प्रबलत्वात् ।

3- वेदोपग्रहो जुहोतीति नित्यानन्दः, देवयाज्ञिकेन तु नैवमुक्तम्, परिभाषातोऽप्राप्तमेव भाति । देवयाज्ञिकेन तन्मध्यादानपूर्वकोऽयं होमः प्रतिपादितः ।

4/5- मा० वा० शु० य० वे० मा० सं० - 2/20.

6- "उपस्तीर्ण आज्यं हविः" [1/9/20] इति परिभाषातः शाखान्तरसंवादाच्चैवं कार्यं प्रतीयते न तु नित्यानन्दोक्तम् ।

7- का० श्रौ० सू० - 3/7/16.

8- एवं होमोऽग्निदेवताक इति कर्कैः मन्यते, विश्वे देवा अत्र देवता इति देवयाज्ञि

मह्यं वेदो भूयाः[1]" इति मन्त्रेण वेदं प्रमुञ्चति । ततश्च योक्त्रं "प्र मा मुञ्चामि वरुणस्य पाशाद्येन माबध्नात् सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु[2]" इति मन्त्रेण विमुञ्चति । ततश्च प्रमुक्तं वेदं पत्नी स्रंसयति ।

ततो होता गार्हपत्यस्योत्तरतः प्रारभ्य वेदेः पूर्वान्तं यावद् वेदं स्तृणाति । ततश्च होता सौम्यग्निनु आहवनीये एव वा सम्मार्जनाय यथेतं निष्क्रामति[3] ।

ततोऽध्वर्युर्ध्रुवायामाज्यमाज्यविलापनीमादाय तया निधाय स्रुवेण[4] उपविश्यैव "देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमन्देव ~~यज्ञं~~ यज्ञं स्वाहा वाते धाः[5]" इति मन्त्रेणाहवनीये जुहोति[6] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० म० सं० - 2/21।
2- का० श्रौ० सू० - 3/8/2।
3- का० श्रौ० सू० - 1/10।
4- ध्रुवाया आज्यं स्रुच्यामानीय स्रुचा होतव्यमिति कर्कानुसारी नित्यानन्दः स्रुवेण होतव्यमिति देवयाज्ञिकः, आपस्तम्बसूत्रे "स्रुवेण समिष्टयजुर्जुहोति" [3/13] इति दर्शनात् "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः" इति न्यायाद् देवयाज्ञिकमतं ज्यायः ।
5- मा० वा० शु० य० वे० म० सं० - 2/21।
6- कुशमुष्टियुक्तो जुहोतीति नित्यानन्ददेवयाज्ञिकौ, मूले सूत्रे चानुक्तत्वाद-स्माभिरुपेक्षितम्; "दर्भमुष्टिमनुप्रहरति" इति च देवयाज्ञिकः, यद्यपि "मध्यमे स्वाहाकारे बर्हिरनुप्रहरति" इति आपस्तम्बः पठति [3/13], तथापि स्वसूत्रेऽनभ्यासाकाङ्क्षितत्वात् तदस्माभिरुपेक्षितम् ।

प्रक्षिपति । ततोऽप उपस्पृशति च[1] ।

ततोऽध्वर्युः उदकपूर्णां स्रुक्स्थालीमादायाहवनीयं प्रदक्षिणीकृत्य दक्षिणतो यजमानसमीपे गत्वोदङ्मुख उपविश्य पूर्णपात्रं निनेतुं तत्परो भवति । यजमानेन मन्त्रे पठिते तदञ्जलौ सन्ततधारं जलमपो निनयति ।

यजमानश्चाञ्जलिं कृत्वा "सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलि-ष्टम्"[2] इति मन्त्रमपठन्निनीता अपः प्रतिगृह्य मुखं विमृष्टे ।

ततो यजमान उत्थाय दक्षिणश्रोणिं गत्वा प्राङ्मुखोऽवस्थाय "दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः"[3] इति मन्त्रेण वेदिदक्षिणप्रान्ते दक्षिणेन पादेनैकं प्राञ्चं प्रक्रमं क्रमते । ततः सव्यं पादं दक्षिणपादसमीपे तत्पादादानीय "अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः"[4] इति मन्त्रेण दक्षिणेनैव पादेन द्वितीयं प्राञ्चं प्रक्रमं क्रमते । ततः सव्यं पादं दक्षिणपादसमीपे तत्पादादानीय "पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा ततो निर्भक्तो

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "आपोदकार्थाः, यजुर्निर्देशाभावेन स्वाहा देवतात्वाभावात्, जुहोतिचोदना-भावाच्च" इति कर्कानुसारी नित्यानन्दः, "स्वाहा रहस्सु इति कात्याय-नोक्तेः (सर्वानुक्रमणिकायाम् 1·7) - - - - अपां स्पर्शः" इति देवयाज्ञिक-भाष्ये, वक्ते इति व्याख्यानमतान्तरम् नित्यानन्दानुक्तः पक्षो हेय एव भाति ।

2- मा०वा०शु०य०वे०मा०सं० - 2/24, (मा०श०प०ब्रा० - 1/9/3/6)

3/4- ,, - 2/25।

योऽस्मान् द्वेष्टि यं च वयं द्विष्मः[1]" इति मन्त्रेण दक्षिणेन पादेन तृतीयं प्राच्यं पुरुषं कुर्वीत[2] ।

ततश्च यजमानः "अस्मादन्नात् (निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः)[3]" इति मन्त्रेण स्वं भागमीक्षते[4] । ततश्च "अस्यै प्रतिष्ठाया (निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः)[5]" इति मन्त्रेण भूमिमीक्षते । ततः "अगन्म स्वः[6]" इति मन्त्रेण प्राचीं दिशमीक्षते । ततः "सञ्ज्योतिषाभूम[7]" इति मन्त्रेणाहवनीयमीक्षते । ततः "स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० म० सं० – 2/24.
2- "दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो विष्णुक्रमान् प्राचः क्रामति, उत्तरमुत्तरं ज्यायांसम्, अन्तिकस्थं तथा, नाहवनीयमतिक्रामेत्" इत्यापस्तम्बः (4/14); "दक्षिणाद् वेदिश्रोणेराहवनीयं यावद्" इति शाङ्खायनः (2/12/11); कात्यायनस्तु "विष्णुक्रमान् क्रमते दिवि विष्णुरिति प्रतिमन्त्रं पृथिव्यामित्यन्त ऊर्ध्वो वा" इत्येवाह (3/8/10) । एवं च श्रुतिः सूत्रञ्च (मा०श०प०ब्रा० – 1/9/3/8-12; का०श्रौ०सू० – 3/8/10) काम्याभिप्रायं क्रमः, अन्यथा तु "पृथिव्यां (विष्णुः)" इत्यादिकः क्रम इति ज्ञेयम् ।
3- मा० वा० शु० य० वे० म० सं० – 2/25.
4- एतद् भागावेक्षणं भूम्यवेक्षणं च ब्राह्मणे फलस्थाने (मा०श०प०ब्रा० 1/9/3/12-13) स्फुटं नास्ति, सूत्रे त्वनुविहितमेव (का०श्रौ०सू० 3/8/11-12)
5- मा०वा०शु०य०वे०म०सं० – 2/25 । (तन्त्रानुषङ्गादौ नित्यानन्दकृतं "ततः" इति पदमधिकं भाति । निर्भक्त इत्यनुषङ्ग इति हि उव्वटमहीधरौ च ।
6- मा० वा० शु० य० वे० म० सं० – 2/25.
7- .. – 2/25.

"वर्चो मे देहि"[1] इति मन्त्रेण सूर्यमीक्षते प्रार्थयते च । ततः "सूर्यस्यावृतमन्वावर्ते"[2] इति मन्त्रेण प्रदक्षिणमावर्तते[3] ।

तत्रैव यजमानो गार्हपत्यस्य दक्षिणतो गत्वोदङ्मुखः[4] "अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासं सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु (शतं हिमाः)[5]"[6] इति मन्त्रेण गार्हपत्यमुपतिष्ठते । तत्रैव "सूर्यस्यावृतमन्वावर्ते"[7] इति मन्त्रेण प्रदक्षिणमावर्तते।

तत्रैव यजमानः "उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब[8] प्र प्र यज्ञपतिं तिर

---

1- मा०वा०शु०य०वे०मा०सं० - 2/26, का०श्रौ०सू० - 3/8/15
(यथाकामं "छन्दा असि छन्दो मे देहि" इत्यादयो मन्त्रांशाः प्रयोक्तव्याः)
2- मा० वा० शु० य० वे० मा० सं० - 2/27.
3- अनेनैवावृत्तिः कर्तव्येति देवयाज्ञिको नेति नित्यानन्दः ।
4- अयं विशेषोऽन्यैरनुक्तोऽपि "गच्छति प्राङ्" इति (का०श्रौ०सू० 3/8/21) उत्तरत्र विधानात् तदनुरोधादस्माभिरुक्तः ।
5- "शतं हिमाः" इत्यर्धं पठेन्नेति कात्यायनः (3/8/19), माध्यन्दिनीयशतपथब्राह्मणे तु (1/9/3/19) "तद् यद्येतदभ्यन्नाद्रियेत" इति निर्णितम् ।
6/7- मा० वा० शु० य० वे० मा० सं० - 2/27.
8- "घृतं घृतयोने पिब" इत्यंशस्य प्रकृतार्थानुकूलत्वं न दृश्यते । यद्यपि माध्यन्दिनीयानां संहितायां प्रकरणान्तरे (5/38) अयं मन्त्रोऽधीतस्तथापि काण्वानां संहितायामस्मिन्नेव प्रकरणे (2/6/3) अयं मन्त्रः पठितोऽस्ति । तस्मात् कात्यायनेनात्र मन्त्रस्यास्य प्रतीकेन विनियुक्तत्वाच्च (3/8/21) अयं मन्त्रोऽविकल एवात्र विनियोज्योऽवगम्यते । तथापि प्राग्दर्शिते काण्वपाठे स्वाहान्ततायाः अभावात्, स्वाहाशब्दस्य प्रकृतार्थाननुकूलत्वाच्च स्वाहाशब्दस्तु नैव प्रयोज्य इत्यस्माकं प्रतिभाति ।

कुर्वन्तं[1] ब्राह्मणं[2] पुष्पताम्बूलेन[3] तर्पयति[4] ।

ततो ब्रह्मा क्षणानन्तरं येन मार्गेण स्वस्थानं गतवानेव मार्गेणाऽ-कस्मिल्लोत्तरतो गत्वा[5] "नमः कृताय कस्मै अकृताय कस्मै नमः । ब्याहृताव-

---

1- "कर्मापवर्गे ब्राह्मणभोजनं वाचयेयुः पुण्याहस्वस्त्यानि गुणाः, पूतं तु स्थानं स्यादिति, न पुण्याहमिति, अधिदेवमध्यात्ममधियज्ञमिति त्र्यं मन्त्रेषु ब्राह्मणे येन पुतिमत्वाभिधीयते" इति शाङ्खायनसूत्रे १/२०

2- "तस्मादन्ते यज्ञस्य ब्राह्मणान्तर्पयितव्या ब्राह्मणोऽन्नेनैतत्तर्पयति" इति मा०श०प०ब्रा० १/७/३/२८; "ब्राह्मणांस्तर्पयितव्या इति श्रीपञ्चाव्यो दश वा ब्राह्मणान्भोजयेत् पत्नी सहितो गृहे" इति वैखानसगृह्यसूत्रे [7/13]

3- इन संकल्पं कृत्वा ब्राह्मणं कालान्तरे भोजयतीति नित्यानन्दः प्रतिपादयति; देवयाज्ञिकस्तु इदानीमेव ब्राह्मणं भोजयतीति प्रतिपादयति; वैखानसगृह्यसूत्रे च [7/14] "ब्राह्मणांस्तर्पयितव्या इति श्रीपञ्चाव्यो दश वा ब्राह्मणान्भोजयेत् पत्नी सहितो गृहे, वृष्टिरस्तीत्यव उपसृजति, प्रदक्षिणमावर्त्याभिमुखः सन् यजमानं जपति; ब्रह्मणा प्रत्ययाद्युद्देश्येति ब्रह्मा दक्षिणमाधाय तूष्णीमुत्थाय वा यथेतमुदङ्ङुत्क्रामति, सन्तिष्ठेते दर्शपूर्णमासौ" इत्युक्तत्वात् कर्मापवर्गनिर्देशाभावात् पूर्वमेव ब्राह्मणभोजनं सम्पादनीयमिति प्रतीयते। कर्मापवर्गनिर्देशाभावात् प्राग् ब्राह्मणभोजनसङ्कल्पं प्रदर्श्य पश्चादपि पुनस्तत्सङ्कल्पं प्रदर्शयन्, पूर्वमेकस्यैव ब्राह्मणस्य भोजनीयत्वं प्रदर्श्य पुनर्बहूनां ब्राह्मणानां भोजनीयत्वं प्रतिपादयन् नित्यानन्दः सन्दर्भशुद्धिमन्दोत्तीर्णाज्ञान एव प्रतीयते।

4- "ओं तदेव यज्ञ उवाच" इत्यादिकाया ब्राह्मणपञ्चिकायाः प्रयोगमध्ये पठनीयत्वं यन्नित्यानन्देन प्रतिपादितं तदपेक्षितमेवावगम्यते ।

5- अयं विशेषो नित्यानन्देनानुल्लिखितोऽपि तैत [का०श्रौ०सू० - 2/2/21] एवेत्यनुक्रमणिका:, यथेतमेत्येति सत्रोक्तत्वात् ।

कुर्वो कुर्वे च सुहुतां कर्त्तव्यता मता ।
स्वर्णं पूर्णमासेष्टेरिव पुरतः कृता ॥
एतद् वैदिकयागानामेषां परिचायने ।
प्रायः नूनं तस्माद् ते वर्णनीय समासतः ॥

आग्रयणेष्टिस्वरूपम्[1]

आग्रयणेष्टिर्नाम यवानां वेणुयवानां श्यामाकानां व्रीहीणां वा नवानां भोजनात् पूर्वं तेन तेनान्नेनाहिताग्निना क्रियमाणा इष्टिः[2] । तत्र वसन्ते यवाग्रयणेष्टिः[3], ग्रीष्मे वेणुयवाग्रयणेष्टिः[4], वर्षासु श्यामाकाग्रयणेष्टिः, शरदि व्रीह्याग्रयणेष्टिः । तत्र श्यामाकाग्रयणेष्टिर्वानप्रस्थस्यैवेति केचित्[5] । कात्यायन-

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "पौर्णमास्यामिन्द्रेष्ट्या पशुचातुर्मास्यैश्च सोमैः। ऊर्ध्वं पौर्णमासाभ्यां यथोपपत्त्यैके, प्रागपि सोमेनैके" इति आश्वलायनः [4/1]। तस्माद्-दर्शेष्टिः पूर्णमासेष्ट्यैव विकृतिपर्यायत्वेन निरूपितत्वात् प्रथमा विकृतीष्टिराग्रयणेष्टिरेव निरूप्यते ।

2- "आग्रयणेष्ट्यानिष्ट्वा न नवान्नं नाश्नाति" इति वैखानससूत्रे [6/1]। "इष्टिश्च राज्ञः, सोमं चैके" इति [1/2/9] आश्वलायन-वचनादन्येषामाग्रयणेष्ट्यनुकल्पः, राज्ञस्तु नियमेनाग्रयणेष्टिरेवेति तन्मतं विज्ञायते, कात्यायनेन तु नायं विशेष उक्तः ।

3- "अपि वाग्निहोत्र्या यजेत्" इति [1/2/9] आश्वलायनवचनाद् यवाग्रयणेष्टिर्वैकल्पिकी तन्मते; कात्यायनेन त्वत्रापि विशेषो नैवोक्तः ।

4- "सौमी श्यामाकेष्टिः, वैणवी च" इति शाङ्खायनः 3/12/1-2।

5- "वन्यो वैणवैति, श्यामाको वनिनः स्मृतः" इति कर्मप्रदीपे [3/9/7]। का०श्रौ०सू० - 4/7/17।

श्रौतसूत्रे तु स्पष्टं नास्ति ।

तत्र "अनुत्पन्नाग्रयणे भक्षणाद् आग्रयणं पौर्णमास्याममावास्यायां वा भवति, शुक्लपक्षे कृष्णे वा पक्षे भवति । यदि पूर्वाह्णे पर्वान्तस्तदा तत्काल-पूर्णमासेष्टेः पूर्वमाग्रयणेष्टिः । ततः पौर्णमासेष्टिः । अमावास्येष्ट्यनन्तरं वाग्रयणेष्टिः । तदा च नवान्नादमावास्येष्टिरमावास्यायामेव समापनीया" इति देवयाज्ञिकः[1] ।

तत्र च यवाग्रयणेष्टौ[2] व्रीह्याग्रयणेष्टौ च प्रधानानि हवींषि एतानि भवन्ति । ऐन्द्राग्नो द्वादशकपालः पुरोडाशः, वैश्वदेवश्चरुः[3], द्यावापृथिवीय एककपालः पुरोडाशः आज्यं वा[4] ।

एवं वाग्रयणेष्टाविमे विशेषा भवन्ति -

अभ्युदये यवाग्रयणेष्ट्यर्थं व्रीह्याग्रयणेष्ट्यर्थमित्यादि यथार्थं प्रयोज्यम् ।

ग्रहणे यवाग्रयणेष्ट्या वां [illegible] इत्यादि यथार्थं प्रयोज्यम् ।

पात्रासादने द्वादश कपालानि, एका चरुस्थाली, एकं कपालं पात्रि-

---

1- देवयाज्ञिकपद्धतौ ।

2- "अग्नौ पर्वणि यजेत्, तेषां व्रीह्याग्रयणवत् कल्पः" इति वैखानसश्रौतसूत्रे 8/2.

3- "पयसि वा पुराणानां वा" इति कात्यायनवचनात् [4/6/4, 4/6/8] अयं चरुर्दुग्धे वा अप्सु वा पच्यते; नवानां पुराणानां वा यवानां व्रीहीणां वा यथार्थं भवति ।

4- "द्यावापृथिव्य एककपालः" इति कर्मप्रदीपे "तस्मादाज्यस्यैव यजेत्" इति मा०श०प०ब्रा० 2/4/3/10; तस्मात् माध्यन्दिनीयानामाज्येनैव द्यावापृथिवीय-यागो नैककपालेन पुरोडाशेनेति विज्ञायते ।

चरुसम्पादने पेषणम्, सेचनम्, पात्र्यां संवपनम्, उपधानम्, धृष्टा-मित्यादिना तापनम्, प्रथनम्, अद्भिरभिमर्शनम्, ज्योतिषोपरिश्रपणम्, अभिघारणम्, उद्वास्य पात्र्यामभ्यासनमिति पदार्था न भवन्ति, अन्यत्सर्वं पुरोडाशसम्पादनवद् भवति ।

पिष्टानामधिश्रयं कृत्वा चरोस्तण्डुलानामधिश्रयणम् । पिष्टानि पात्र्या-मेव सलिलायां चरुस्थाल्यां तण्डुलानामावापः । ततः पिः प्रस्रावणम् । तत उपसर्जन्यानयनम्, पिष्टेषूपसर्जनीर्निनीय तण्डुलेषु निनयति । पिष्टसंयवनानन्तरं विभज्य पुरोडाशयोः पिण्डयोः[1] आलम्भः । पुरोडाशयोर्मध्ये चरोः श्रपणम् ।

प्राणदाने इन्द्राग्नी गच्छ, विश्वान् देवान् गच्छ, द्यावापृथिव्यौ गच्छेति क्रमशः प्रयोगः । द्यावापृथिवीयस्य प्राणदानं कृत्वा लौकिकेनाज्येन तस्याभ्यवच्छादनम्[2] ।

अत्र सप्तदश सामिधेन्यो भवन्ति । तस्मादन्वाधाने सप्तदशेन जुहोमीति प्रयोगः ।

उत्तमे प्रयाजे "इदमग्नये सोमायेन्द्राग्निभ्यां विश्वेभ्यो देवे-भ्यो द्यावापृथिवीभ्यामन्देवेभ्य आज्यपेभ्यः" इति त्याग इति दैवतानिकः ।

आज्यभागानन्तरं प्रधानयागे "इन्द्राग्निभ्यामनुब्रूहि" "इन्द्रा-

---

1- द्यावापृथिवीयपुरोडाशयागपक्षे "हविरिन्द्राग्न्योरिदम् द्यावापृथिव्योः" इति विभक्त्योरालम्भः, आज्ययागपक्षे तु न भवत्येवायमालम्भस्तत्पूर्वो विकारश्च ।

2- का० श्रौ० सू० - ६/६/६.

ग्नी यज" "[उपांशु] विश्वेभ्यो देवेभ्यः [उच्चैः] अनुब्रूहि" . "[उपांशु] विश्वान् देवान् [उच्चैः] यज", "[उपांशु] द्यावापृथिवीभ्याम् [उच्चैः] अनुब्रूहि", "[उपांशु] द्यावापृथिव्यौ [उच्चैः] यज" इति प्रयोगः । चरोर्मेक्षणेनावदानम् । द्यावापृथिवीयपुरोडाशयागस्तु स्रुक्प्रस्तरीयं सर्वमपि एककपालं पुरोडाशमखण्डमेव जुह्वां निधायोपरिष्टाद् द्विरभिघार्य स्कन्नम्[1] । द्यावापृथिवीयाज्ययागयो उपांशुयाजवद् ध्रुवायाश्चतुरवदाय द्यावापृथिवीययागः कर्त्तव्यः । ततः स्विष्टकृदादि ।

दक्षिणायाङ्गौरित्यस्य स्थाने प्रथमजो गौरस्त्वूर्जमित्यादिकः प्रयोगः । "यथा वस्टैः सम्भृतं प्रथमजं गां दक्षिणां ब्रह्मणे ऋत्विग्भ्यश्चाग्नीधे च सम्प्रददे सोऽस्तु मम, ब्राह्मणा अयं वः प्रथमजो गौः प्रतिगृह्णीत" इति यजमानः, ~~"द्यौस्त्वा ददातु" इत्यादिना मन्त्रेण ऋत्विजः प्रतिगृह्णीयुः" इति यजमानः,~~ "द्यौस्त्वा ददातु" इत्यादिना मन्त्रेण ऋत्विजः प्रतिगृह्णन्ति इति च देवयाज्ञिकः।

सूक्तवाके "इन्द्राग्न्योर्विश्वेषान्देवानान्द्यावापृथिव्योरवतिष्ठ" इति "इन्द्राग्नी विश्वे देवा द्यावापृथिव्यौ तमनुदन्तु" इति यथार्थं प्रयोगः ।

प्रस्तरयागे "इदमग्नये सोमायेन्द्राग्निभ्याम् विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यान्देवेभ्यः" इत्यादिकः प्रयोगः ।

---

1- एककपालात् पुरोडाशात् "प्राशित्रव्यतिरिक्तं किमपि न भवति । कर्मणो कृत्स्नत्वं सर्वं भक्षयेत्" इति देवयाज्ञिकपद्धतौ ।

कर्मापवर्गान्तमन्यत् सर्वं प्रकृतिवत् ।

इत्याग्रयणेष्टिस्वरूपम् ।

*****

---

1- "समानतन्त्रा वा [आग्रयणेष्टिः] दर्शपूर्णमासाभ्याम् । दर्शपूर्णमासौ वा नवानाम् । अग्निहोत्रं वा यवाग्वा सायंप्रातः । अग्निहोत्रीं वा नवानादयित्वा तस्यै दुग्धेन सायंप्रातरग्निहोत्रं जुहुयात् । गार्हपत्ये वा स्थालीपाकं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेणाहवनीये जुहुयात्" इति शाङ्खायनः 3/12/13-17 । तत्र माध्यन्दिनीयशतपथब्राह्मणे तु "यद्यु अनीजानः स्याच्चातुर्मास्यैर्नवमोदनमन्वाहार्यपचने पचेयुस्तद् ब्राह्मणा अश्नीयुः" इत्युक्त्वा "ततो यज्ञक्रतुमाहरेत् तद् दद्यान्नादिकर्म हविः स्यादित्याहुः" इति चोक्त्वा "नाग्निहोत्रे जुहुयात्तदु ह कुर्यादग्निहोत्रे जुहुयादन्यद्वा आग्रयणमन्यदग्निहोत्रमस्मान्नाग्निहोत्रे जुहुयात्" इति [2/4/3/13-14] अग्निहोत्रपक्षस्य निषेधोऽस्ति ।

## अथ चातुर्मास्यनिरूपणम्[1]

चतुर्षु चतुर्षु मासेषु प्रयोज्याः[2] श्रौतक्रियाविशेषाश्चातुर्मास्यानि । "अक्षय्यं .

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- यद्यपि "पौर्णमास्यामिन्द्राग्निपशुचातुर्मास्येभ्य सोमेन" इत्याश्वलायन-वचने [1/4/1] चातुर्मास्येभ्यः पूर्वं पशुबन्धस्याभावः प्रतिपादितः, वसन्ते-ऽग्न्याधानकाले ब्राह्मणस्य ग्रीष्मेऽग्न्याधानतः वर्षास्य च चातुर्मास्यार-म्भात् प्रागेव निरूढपशुबन्धस्य कालः समागच्छति च, तथापि "न तस्यान्य-उपक्रमेत्स्तैनिष्टैरिष्ट्वाथ नवेऽसौ पूर्णमासो चातुर्मास्यानि पशुबन्धं सौम्य-महध्वरम्" इति श्रुतौ [भा० श्रौ० प० ब्रा० 10/4/3/4] पशुबन्धात् प्राक् चातुर्मास्यानां श्रुतत्वात्, कात्यायनेन पशुबन्धात् प्राक् चातुर्मास्यानां निरूपितत्वात्, प्रयोगक्रमानुसारेण अग्न्याधानाग्निहोत्रदर्शपूर्णमासाग्रयणा-दीनि कर्माणि निरूपयता विश्वकर्मा निरूढपशुबन्धात् प्रागेव चातुर्मास्यानां निरूपितत्वात्, वसिष्ठधर्मसूत्रे [1/41-43] बोधायनधर्मसूत्रे च पशुबन्धात् प्राक् चातुर्मास्यानामनन्तरस्य प्रतीयमानत्वात्, आश्वलायनेनापि "ऊर्ध्वं पौर्ण-मासाभ्यां यथोपपत्त्यौ" इत्युक्त्वा [1/4/1] पशुबन्धात् प्रागपि चातुर्मा-स्यप्रयोगस्याभ्युपगतत्वात्, चातुर्मास्यानि स्वतः प्रयुञ्जीत, ऋतुनिमित्ता शुना-सीरीयेणेष्ट्वा सोमेन पशुना इष्ट्वा वाऽपि यजनीयत्वाच्च [का० श्रौ० सू० 5/11/5] अस्माभिः श्रुतिस्मृतिप्रोक्तक्रमं च मन्वानैर्निरूढपशुबन्धात् प्राक् चातुर्मास्यानि निरूप्यन्ते ।

2- "चतुर्षु चतुर्षु मासेषु यो यजते स चातुर्मास्ययाजी, वसन्ते वैश्वदेवेन वर्षासु वरुणप्रघासैः शरदि साकमेधैर्यो यजते स ऋतुयाजी"
- इति वै० श्रौ० सू० 8/8.

ह वै सुकृतं चातुर्मास्यैर्भवति[1]" इति वैखानसश्रौतसूत्रे पठ्यते । एतदेव प्राचीनं सत्याषाढश्रौतसूत्रेऽपि[2] । तत्र चातुर्मास्यानि पर्वचतुष्टयात्मकानि । पर्वसु च प्रथमं वैश्वदेवं पर्व । तच्च फाल्गुन्यां पौर्णमास्यां प्रयुज्यते[3] । तत आषाढ्यां पौर्णमास्यां[4] वरुणप्रघासाख्यं द्वितीयं पर्व । ततः कार्तिक्यां पौर्णमास्यां साकमेधाख्यं तृतीयं पर्व प्रयुज्यमानम्[5] । ततः शुनासीरीयाख्यं चतुर्थं पर्व तु सद्यश्चातुर्मास्यानि कृत्वोत्स्रष्टुमिच्छोः अनन्तरमेव सौमेन पशुनेष्ट्वा वा यक्ष्यमाणस्य फाल्गुन्युत्सृष्टिरिति भवति[6]। सौमेन पशुनेष्ट्वा वा यक्ष्यमाणस्य[7] चातुर्मास्यान्येव प्रतिवर्षमावर्तयितुमिच्छोस्तु फाल्गुन्युपक्रमे भवति[8] । शाखान्तरे तु सप्ताहसाध्यानि पञ्चाहसाध्यानि एकाहसाध्यानि च चातुर्मास्यानि प्रोक्तानीति श्रौतव्याख्याकाराः[9] । "यदि चेच्चातुर्मास्यकरणाशक्तो स्यात् यदा सर्वाणि पर्वाणि उत्कृष्य शुनासीरीयकाले फाल्गुन्यां चैत्र्यां वा कर्ता[10] वा तदा पौर्णमास्यां कार्याणि[11]" इति देवयाज्ञिकपद्धतौ च प्रोक्तम् । देवयाज्ञिकेन

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2. 8/3. 5/1.

3-6. का०श्रौ०सू० - 5/1/1. 5/3/1. 5/6/1. 5/11/16.

7. "एवं प्रतिवर्षं कर्तव्यम् । आवृत्तिपक्षे इष्टिपशुसोमानामभावः" इति देवयाज्ञिकपद्धतौ पैष्टिकशुनासीरीयप्रयोगान्ते ।

8. का० श्रौ० सू० - 5/11/18.

9. "तत्र पैष्टिकेषु संवत्सरानुष्ठानपक्षेण सह पञ्चाहानुष्ठानपक्ष एकदिनानुष्ठानपक्षश्च बौधायनादिभिरुक्ताः" इति यज्ञतत्त्वप्रकाशे - पृ० 52.

10. "अक्षय्यं ह वै सुकृतं चातुर्मास्यैर्भवति । तानि यक्ष्यमाणो वसन्ते प्राचीनप्रवणे वैश्वदेवेन यजते । फाल्गुन्यां चैत्र्यां पौर्णमास्यां चोदगयन आपूर्यमाणपक्षस्य पुण्याहे वा प्रयुञ्जीत" इति वै०श्रौ०सू० - 8/2.

11. 201 पृ० [विद्याधरसंस्कृते संस्करणे]. 195-200 पृ० ।

शाखान्तरवशेन पञ्चाहिकानि एकाहिकानि च चातुर्मास्यानि प्रवर्तितानि च[1] । एतानि च चातुर्मास्यानि वैष्टिकानि पाशुकानि सौमिकानि चेति त्रिविधानि श्रौतसूत्रेषु प्रोक्तानि[2] । कात्यायनेनापि वैष्टिकानि[3] पाशुकानि[4] चेति त्रिविधान्येव चातुर्मास्य प्रकरणे प्रतिपादितानि सौमिकानि चातुर्मास्यानि तु एकाहाध्याये निरूपितानि[5] । तत्रैष्टिकानां चातुर्मास्यानामत्र दीपेन प्रतिपादनं क्रियते । तत्रापि सार्वत्रिकत्वादेव चातुर्मास्यानां कात्यायनेन प्रोक्तत्वात्, शाखान्तरेष्वपि तेषामेव प्राधान्यकल्पत्वात् तान्येवात्र प्रदर्श्यन्ते ।

<u>तत्र वैश्वदेवं नाम प्रथमं पर्व</u>

चातुर्मास्यानि आरभमाणः[6] फाल्गुन्यां पौर्णमास्याम्[7] अन्वारम्भणीया-

---

1 - विद्याधरशर्मकृते संकलने, 195-200 पृ ।

2-8- यज्ञतत्त्वप्रकाशे 52-53.

3-5- का०श्रौ०सू० - 5/1/1-5/11/18, 5/11/19-30, 22/7/1/20.

6 - अयनारम्भो चातुर्मास्यानामारम्भः "उपक्रमादिकारे नियमेषु" इति सत्यापाढवचनात् [3/1], "ऋषैस्तु शिलोञ्छाभ्यामग्निहोत्रपरायणः । इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा" [6/10] इति मनुस्मृति-वचनाच्च प्रतीयते, तथापि "स एतान्यचतुर्होतॄन्नोऽग्निमाहितेऽन्दा-पूर्णमासौ चातुर्मास्यानि नानुपूर्व्यं सोमेनयजेत्" इति श्रुतौ [मा० श०ब्रा० - 10/4/3/4] चातुर्मास्यानामपि नित्यत्वोक्तेः अत पाठात् यथामने "अथैतान्यातुर्मास्यान्यनन्तरितानि भवन्तीति यः स्थापेत भ्रातृ" इति श्रुतौ [मा०श०ब्रा० - 12/3/5/8] चातुर्मास्यानन्तराय-तायाः प्रतिपादनस्य दर्शनाच्च चातुर्मास्यानां नित्यत्वेति कात्यायनादिभिः [का०श्रौ०सू० - 1/2/14-15] निर्णीतं विज्ञायते ।

7 - का० श्रौ० सू० - 5/1/1.

ततो हविर्ग्रहणानुगतानाम् उपकल्पनं शूर्पाग्निहोत्रहवण्यादानादिकं च प्रकृतिवदेव ।

निर्वापे "अग्नये जुष्टम्", "सोमाय जुष्टम्", "सवित्रे जुष्टम्", "सरस्वत्यै जुष्टम्", "पूष्णे जुष्टम्", "मरुद्भ्यः स्वतवद्भ्यो जुष्टम् [मरुद्भ्यो जुष्टम्]", "द्यावापृथिवीभ्यां जुष्टम्" इति यथाक्रमं प्रयोगः ।

ततः हविरभिमर्शनादिकं प्रोक्षणीप्रोक्षणान्तं कर्म भवति ।

हविः प्रोक्षणे च "अग्नये त्वा जुष्टम्", "सोमाय त्वा जुष्टम्", "सवित्रे त्वा जुष्टम्", "सरस्वत्यै त्वा जुष्टम्", "पूष्णे त्वा जुष्टम्", "मरुद्भ्यस्त्वा स्वतवद्भ्यो जुष्टम् [मरुद्भ्यस्त्वा जुष्टम्]", "द्यावापृथिवीभ्यां त्वा जुष्टम्" इति यथाक्रमं प्रयोगः ।

ततः पात्रप्रोक्षण-प्रोक्षणीनिधान-कृष्णाजिनादानादि अवहननान्तं कर्म भवति ।

ततः पेषणीयानपेषणीयांश्च तण्डुलान् विभज्य "इदमग्नेः सवितुः पूष्णो मरुतां स्वतवसाम् [मरुताम्] द्यावापृथिव्योश्च" इति पेषणीयानामालम्भनम् । "इदं सोमस्य सरस्वत्याश्च" इति अपेषणीयानामालम्भनम् ।

ततोऽध्वर्युः प्रेष्यति ।

अग्नेः कपालोपधानम् । तत्राग्नेयस्याष्टौ कपालानि उपधाय एकं चरुस्थालीस्थानं परित्यज्योत्तरतः सावित्रस्य द्वादश अष्टौ वा कपालान्युपधाय तस्योत्तरतः पयस्यास्थानं परित्यज्य द्यावापृथिवीयस्यैकं पार्श्वस्थितं कपालमुपधेयम् । तत उपसर्जन्यधिश्रयणम् ।

ततो यजमानस्याग्निनिर्वापो वेदकरणं च भवति ।

ततोऽध्वर्युः पेषणान्ते पिष्टानि कृष्णाजिने प्रोह्य अग्नीधं दोग्धारम् "उपसृष्टां प्रब्रूतात्" इति प्रेष्यति । ततः सान्नाय्यप्रकरणोक्तवद् दोह-पात्रीक्षालनप्रयोगान्तो दोहो भवति ।

ततः पिष्टलेपम् । ततः पुनः पिष्टानि कृष्णाजिने "इदमग्नेः सवितुर्मरुतां स्वतवसां [मरुताम्] द्यावापृथिव्योश्च" इति "इदं पूष्णः" इति वाचयन् । तण्डुलांश्च विभज्य "इदं सोमस्य" इति "इदं सरस्वत्याः" इति वाचयन् ।

ततः पात्र्यां पवित्रे कृत्वा पुरोडाशार्थानां पिष्टानामावापः । ततः सौम्यपात्रे पवित्रे कृत्वा सौम्यचर्वर्थानां तण्डुलानामावापः, त्रिः प्रक्षालनं च, ततः सारस्वतपात्रे पवित्रे कृत्वा सारस्वतचर्वर्थानां तण्डुलानामावापः, त्रिः प्रक्षालनं च, ततः पूषपात्रे पवित्रे कृत्वा पौष्णचर्वर्थानां पिष्टानामावापः, अव-लोपाद् विरोधाच्च प्रक्षालनाभावः । ततः सर्वेषु चरुषु क्रमेण वेदेनोपसर्जनीनां निनयनम् । ततः पुरोडाशार्थपिष्टानां संयवनम् । यथा सवितृपुरोडाशार्थपिण्डो महान्[1] भवति तथा चतुर्धा विभज्य "इदमग्नेः" इति, "इदं सवितुः" इति, "इदमु मरुतां स्वतवसां [मरुताम्]" इति, "इदं द्यावापृथिव्योः" इति वाचयन् ।

ततः सर्वेषां हविषां क्रमेणाधिश्रयणम् । पयसश्च मारुतपुरोडाशानन्तर्य-

---

1- "स वै वरिष्ठः पुरोडाशो भवति" इति श्रवणात् सवितुः पुरोडाश इतरापेक्षया महान् कार्यः इति देवयाज्ञिकपद्धतौ ।

कार्त्तिकोऽश्लतौऽभिषवणम् । पुरोडाशानां प्रथनश्रपणाभिमर्शनादिकं च । तस्यां तु प्रथनाभिमर्शनयोरभावः । पयोऽपि पर्यग्निकरणम् । शमम् । तस्यां पयस्या-वदानमध्यदानं नोपरि । पचति तप्ते तत्र दध्नः प्रक्षेपः । का मैत्रीति दविका-मात्रस्यः । कृताभिघारणं तु पुरोडाशानामेव । वाजिनस्य वाजिनपात्रे आनयनम् । ततः पात्रीप्रक्षालनाप्स्योदकनिनयनादिकम् । तत्र कृतावदानसम्मार्जनानन्तरं केवलस्य [ततो वाजिनपात्रस्य] सम्मार्जनं करोति[1] वैश्वदेवादौ त्रीणि तन्त्राणि विकृ-ष्टीनो निवर्त्तन्ते ।

प्रावदाने [हविषामन्त्रेषु] मन्त्रे[2] "अग्निमङ्ग गच्छ" इति, "सोमङ्ग गच्छ" इति, "सवितारङ्ग गच्छ" इति, "सरस्वतीङ्ग गच्छ" इति, "पूषणङ्ग गच्छ" इति, "मरुतः स्वतवसो गच्छ [मरुतो गच्छ]" इति, "विश्वान् देवान् गच्छ" इति, "द्यावापृथिव्यौ गच्छ" इति, "वाजिनौ गच्छ" इति च प्रयोगविशेषः ।

ततो द्यावापृथिवीयस्यान्तानामभ्येनाच्छादनम् ।

तत्र च हविषां वैजाभावात् ।

तत्र वाजिनस्य स्रुक्षु आसादनमालम्भश्च ।

तदन्तरमुपयोरासेचनमालम्भनमवाप्स्यतिच ।

---

1- वाजिनपात्रस्य सम्मार्जनं कस्मिन्नपि सूत्रेऽनुक्तत्वान्नैव कार्यमिति केचिदिति देवपालिकमते, वाजिनस्य वाजिनपात्रे गुणादिसम्मार्जनास्मरात् प्रागेवा-नीतस्य वाजिनपात्रस्य सम्मार्जनमभिमतम् ।

2- का॰ श्रौ॰ सू॰ - 2/3/14

"हिं[1] अभि त्वा देव सवितरीशानं वार्याणाम् ।[2] इत्यादिकमनुब्रुवन्[3] विरमति[4] ।

अग्नौ जातेऽध्वर्युः "अग्नये जातायानुब्रूहि" इति होतारं प्रेष्यति।

होता च -

"धनञ्जय[6] रणेरणेऽनुब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि[5] ।

धनञ्जयं रणेरणेऽस्य[6] हस्तेन खादिन शिशुर्जातन्न बिभ्रति ।"

---

1- यद्यपि सामिधेन्यनुवचने "हिं हिङ्कृत्य" इत्युक्तम्, तथापि अत्र "हिङ्कृत्य" इत्येवोक्तमित्यपेक्षायामेव हिङ्करणं पर्याप्तं भाति । यद्यपि सामिधेन्यनुवचने "ओम्पूर्वाः सामिधेनीः [अन्वाह]" इत्युक्तं तथापि अत्र ओम्पूर्वताया अनुक्तत्वादनादावोङ्कारप्रयोगो ग्रन्थान्तराद् यदि प्राप्नोति तदा ज-पीयो नाप्नोति प्रतीयते ।

2- यद्यपि "प्रणवेनार्धर्चाः सन्दध्यात्" इति सामिधेनीष्वेव कात्यायनेन प्रतिपादितम्, "अच्छा पर्वदिव्यसीत्" "एवमृग्भेदे च [अर्धर्च इ]ः प्रणवेनान्ते अनुब्रूयात्" इतीव प्रणवेनार्धर्चाः सन्धानमन्यत्र नातिदिष्टम्, तथापि याज्ञिका अग्निमन्थनीयास्वपि प्रणवेनार्धर्चाः सन्धानं कुर्वन्ति । शाङ्खायनपरिभाषा त्वेतङ्करणस्यानुकूला प्रतीयते । ""ऋग्भेदे चेत्"इति का० श्रौ० सू० 4/4.

3- "पञ्चम्या अर्धर्च उपरमेत्" इति का० श्रौ० सू० 3/3.

4- यावज्जातमग्निं मन्थनेनाग्निर्यदि न जायते तदा होता "अग्नी रक्षां[6]सि सेधति शुक्रशोचिरमर्त्यः शुचिः पावक ईड्योऽग्नी रक्षां[6]सि सेधति - - -" इत्येतमेवामूं यावदग्निजन्म पुनः पुनरभ्यसेत् ।

5- जातेऽग्नौ निर्मथिते तु "जातायेत्युक्तेऽत्तया पञ्चम्याऽर्धर्च उपरमेद् यदि पुनः शीघ्रं यावत्प्रदीप्तमनुब्रूयात् न चेत् शीघ्रं यावत्प्रदीप्तमनुब्रूयात्" इति कात्यायनोक्ता व्यवस्था, का० श्रौ० सू० - 3/3,

यजमानश्च च "इदमग्नये समिद्भ्यो न मम" इत्यादिकः प्रयोगः ।

प्राकृतचतुर्थप्रयाजानन्तरं आश्रावणे प्रत्याश्रावणे च कृते यजेति प्रेषितो होता - "ये३यजामहे इडो अग्न आज्यस्य व्यन्तु३वौ३षट्"[1] इति याज्यां पठति वषट्कारानुमन्त्रणादिकं च करोति ।

यजमानश्च पञ्चमादीनां सर्वेषां प्रयाजानाम् "पञ्च मम न तस्य- - -अन्नादो भूयासम्" इत्यनुमन्त्रणं कुर्यात्[2] ।

हुत्वा पूर्ववत्कर्मणा यजेति प्रेषितो होता - "ये३यजामह उषासानक्ताग्न आज्यस्य वीतामु३वौ३षट्" इति याज्यां पठति वषट्कारानुमन्त्रणादिकं च करोति ।

ततो हुत्वाऽध्वर्युरुपभृत्याज्यं यथाविधि जुह्वां समानीय[3] आश्रावणप्रत्याश्रावणानन्तरं यजेति प्रेषितो होता - "ये३यजामहे दैव्या होतारा अग्न आज्यस्य वीतामु३वौ३षट्" इति सप्तमप्रयाजयाज्यां पठति वषट्कारानुमन्त्रणादिकं च करोति ।

ततो हुत्वाऽध्वर्युणाश्रावणप्रत्याश्रावणानन्तरं यजेति प्रेषितो होता - "ये३यजामहे तिस्रो देवीरग्न आज्यस्य व्यन्तु३वौ३षट्" इति अष्टमप्रयाजयाज्यां

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० - 3/3; ["समिध्यमानान्तमिळवत्यावन्तरेण पृषदाज्यवत्यौ दधाति" इति च तत्रैव 2/3] ।
2- "समानं चोत्तमेनोपायित्वात्" इति का० श्रौ० सू० - 3/3/8.
3- "उपभृतो जुह्वामानयति अनवमृशन्नर्धम्, एवं प्रभृतौ" इति का० श्रौ० सू० 3/2/22-23.

पठति, वषट्कारानुमन्त्रणादिकं च करोति ।

ततो हुत्वाऽऽज्यभागमनुयाजप्रयाजानन्तरं यजेति प्रैषितो होता - "देवानामेष्यात्विर्भ्न[६] स्वाहा सोम्य" इत्यादिकाम् ~~इति~~ नवमप्रयाजयाज्यां[1] पठति वषट्कारानुमन्त्रणादिकं च करोति ।

अध्वर्युश्च नवमं प्रयाजं हुत्वोत्तरतो हविः समीपं आगत्य प्रयाजशेषेण चाजिनान्तानि हवींष्यभिघारयति ।

ततो आज्यभागौ प्रकृतिवत् ।

प्रधानयागेषु च - आग्नेयपुरोडाशयागे-पुरोनुवाक्या च याज्या च पौर्णमासवत् ।

सौम्यचरुयागे - "वृषा सोम[2]" इति पुरोनुवाक्या, "या ते धामानि[3]" इति याज्या ।

सावित्रपुरोडाशयागे - "आ विश्वदेवम्[4]" इति पुरोनुवाक्या, "देव प्रयाणम्[5]" इति याज्या ।

सारस्वतचरुयागे - "पावका नः[6]" इति पुरोनुवाक्या, "पावीरवी

---

1 - "नवप्रयाजं नवानुयाजम् [वैश्वदेवं भवति]" इति का०श्रौ०सू० - 5/2/7;
मा० श० प० ब्रा० - 2/5/1/20.

2-3- का० श्रौ० सू० - 3/4.

4 - का०श्रौ०सू० - 3/4; शा०शु०के०मा०सं० - 5/82/7.

5-6- मा० वा० शु० य० वे० मा० सं० - 11/6, 20/84.

कन्या[1] इति याज्या ।

पौष्णयागे - "पूषन् तव[2]" इति पुरोनुवाक्या, "शुक्रं ते[3]" इति याज्या ।

मरुतां स्वतवसां पुरोडाशस्य यागे[4] - "हवे वः[5]" इति पुरोनुवाक्या "प्र चित्रम्[6]" इति याज्या ।

वैश्वदेवामिक्षायागे - "विश्वे देवास आगत[7]" इति पुरोनुवाक्या, "विश्वे देवाः[8]" इति याज्या ।

द्यावापृथिवीयपुरोडाशयागे - "मही द्यौः[9]" इति पुरोनुवाक्या, "चक्षुषः पिता[10]" इति याज्या[11] ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - का०श्रौ०सू० - 5/4; शा०ऋ०वे०म०सं० - 6/49/7.
2 - मा० वा० शु० य० वे० मा० सं० - 34/42.
3 - का०श्रौ०सू० - 5/4; शा०ऋ०वे०म०सं० - 6/58/1.
4 - मरुत्पुरोडाशयागे तु- "मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः" इति [मा०वा०शु०य०वे०मा०सं० 8/31] पुरोनुवाक्या; "यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः । जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणाम्" इति [का०श्रौ०सू० 5/4; शा०ऋ०वे०म०सं० 5/55/10] याज्या ।
5 - का०श्रौ०सू० - 5/4; शा०ऋ०वे०म०सं० - 7/59/12.
6 - ,, - 5/4; ,, - 5/66/9.
7-8- मा० वा० शु० य० वे० मा० सं० - 7/34, 33/53.
9-10- ,, - 8/32, 13/32, 17/25.
11 - द्यावापृथिवीय एककपालः पुरोडाशः सर्व एव हूयते [का०श्रौ०सू० 1/9/12]

स्विष्टकृद्यागे "प्रेद्धो अग्ने"[1] इति पुरोनुवाक्या, "अयाडग्नि-रग्नेः प्रिया धामानि" इत्यादिना निगदेन[2] युक्ता "इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ प्रति न ईं सुरभीणि व्यन्तु"[3] इति याज्या ।

प्रधानयागानन्तरं अन्वारम्भणादिकं प्रकृतिवत् । न सकृत्पात्रस्य पुरो-डाशस्य पयस्यायाश्च चतुर्धाकरणभागाभावः । अन्येषां सर्वं भवति । शाखापवित्रेण सहान्यस्य पवित्रस्य योजनेन मार्जनं[4] क्रियते ।

दक्षिणाकाले "उर्गसि" इत्यस्य स्थाने "प्रथमजा गोरसि" इत्यूहः । 'अथर्त्विक्त्वोदकोपवर्जितः समृद्धार्थं प्रथमं गां दक्षिणां ब्रह्मणे होत्रेऽध्वर्यवेऽग्नीधे च सर्वविभागेनार्थं ददते, ब्राह्मणा अयं वः प्रथमजो गौः प्रतिगृह्णीत[5]' इति यजमानस्य प्रयोगः ।

तत आहवनीयादिकल्पकोन्मुक्तेपादिकम् ।

ब्रह्मा "प्रतिष्ठ" इत्यनुज्ञातोऽध्वर्युरौपभृतं किञ्चिदाज्यं जुह्वां समानीय पूर्ववत् स्रुचावादाय सव्यं पादमत्याक्रम्य तावद्यजतिदेशं गत्वाऽऽश्राव्य प्रत्याश्रुते "देवान्यज" इति होतारं प्रेष्यति । उत्तरेष्वनुयाजेषु तु "यज" इत्येव प्रेष्यति चतुर्णामन्त्ययोरनुयाजयोः समानयनं च करोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- आ० श्रा० सू० प० वे० म० सौ - 17/76.

2- का० श्रौ० सू० - 1/4.

3- शा० उ० वे० म० सौ - 7/1/18.

4- का० श्रौ० सू० - 4/2/40.

5- एतावान् प्रयोगो देवयाज्ञिकपद्धतौ समुपेतः ।

होता च एकादशानुयाजयाज्याः पठति, अध्वर्युर्जुहोति ।

तत्र -

(1) "देवम्बर्हिर्वसुने वसुधेयस्य वेतु" इति प्रथमानुयाजयाज्या[1] ।

(2) "देवीर्द्वारो वसुने वसुधेयस्य व्यन्तु" इति द्वितीयानुयाजयाज्या[2] ।

(3) "देवी उषासानक्ता वसुने वसुधेयस्य वीताम्" इति तृतीयानुयाजयाज्या ।

(4) "देवी जोष्ट्री वसुने वसुधेयस्य वीताम्" इति चतुर्थानुयाजयाज्या ।

(5) "देवी ऊर्जाहुती वसुने वसुधेयस्य वीताम्" इति पञ्चमानुयाजयाज्या ।

(6) "देवा दैव्या होतारा वसुने वसुधेयस्य वीताम्" इति षष्ठानुयाजयाज्या ।

(7) "देवीस्तिस्रस्तिस्रो देवीर्वसुने वसुधेयस्य व्यन्तु" इति सप्तमानुयाजयाज्या ।

(8) "देवो नराशंसो वसुने वसुधेयस्य वेतु" इत्यष्टमानुयाजयाज्या।

(9) "देवो अग्निः स्विष्टकृत्"[3] इत्यादिका नवमानुयाजयाज्या ।

ततो ऽपरानुयाजः स्रुग्व्यूहनादिकं च प्रकृतिवत् ।

---

1- "एकादशानुयाजैर्यजति" इति का० श्रौ० सू० - 4/11.

2- "प्रथमद्वितीयौ तु वचनान्तरेण" इति शा० श्रौ० सू० - 5/13/26.

3- शा० श्रौ० सू० - 1/13/3-4. (का० श्रौ० सू० - 1/7)

प्रयुक्ते ऽग्नेः सोमस्य सवितुः सरस्वत्याः पूष्णो मरुतां स्वतवसां[1] विश्वेषान्देवानाम् द्यावापृथिव्योरुज्जितिमिति अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसो[2] विश्वे देवा द्यावापृथिव्यौ तमनु-दन्तु इति च प्रयोगविशेषः[3] ।

प्रस्तरानुप्रहरणे प्रस्तरतृणेन सह शाखाया अप्यनुप्रहरणम् ।

तत आग्नीध्रीयोदकोपस्पर्शनानन्तरं वाजिनयागः[4] ।

तत्र वेदिमध्ये जुहूं निधाय वाजिनस्थालीमुद्धृत्याध्वर्युः स्रुवेण जुह्वां निनयति यथा वाजिनं किंचिदपि न स्कन्देत्[5] ।

ततोऽध्वर्युर्वाजिभ्योऽनुब्रूहि इति होतारं प्रेष्यति[6] ।

होता च "शन्नो भवन्तु"[7] इत्यनुवाक्यां यथाविधि पठति ।

ततोऽध्वर्युरुत्थायाश्रुत्याश्राव्य प्रत्याश्राविते वाजिनो यजेति होतारं प्रेष्यति ।

होता च "वाजेवाजेऽवत"[8] इति याज्यां यथाविधि पठित्वा वषट्करोति, "वाजिनस्याग्ने वीहि"[9] इत्युक्त्वानुवषट्कारं च करोति ।

---

1 - केवलानां मरुतां देवतात्वे स्वतवसामित्यस्य प्रयोगो नैव कार्यः ।

2 - केवलानां मरुतां देवतात्वेनाऽपि स्वतवस इत्यस्य प्रयोगो नैव कार्यः ।

3 - उपांशुयजनीयानां देवतानां नामानि उपांशु एवोच्चारणीयानि ।

4-6- का० श्रौ० सू० - 4/4/11, 4/4/13-14, 4/4/15.

7-8- मा० वा० शु० य० वे० म० सं० - 21/10, 21/11.

9 - का० हौ० सू० - 2/9.

एवमेव ऋत्विजोऽपि[1] भागिनः वाजिनेज्यानन्तरं प्रकृतवदेव मन्त्रेण वाजिनशेषं भक्षयन्ति[2] ।

ततः समिष्टयजुरादि प्रकृतिवत् । तत परिधिभिः सह शाखोपवेषहोमः । दक्षिणापशुः प्राकृतमेकैव वा[3] त्रीणि वा[4] । नमः कृतायेत्यादिकर्मान्ते वपनं न वा[5] । ब्राह्मणभोजनम् । ततो गार्हपत्यं स्वस्थाने नीत्वा ततः पौर्णमासेष्टिः ।

इति संक्षेपेण वैश्वदेवं पर्व निरूपितम्[6] ।

<u>अथ वरुणप्रघासाः</u>

आषाढकृष्णप्रतिपदि[7] वरुणप्रघासैः[8] यक्ष्यमाण आषाढ्यां पौर्णमास्यां प्रातरग्निहोत्रे हुते वैश्वदेवपर्वणि परिहितान्यहतानि वस्त्राणि[9] प्रक्षाल्य शोषयित्वा

---

1 - "होत्रध्वर्युब्रह्माग्नीध्रयजमानाः, प्रथमो होताऽत्र यजमानः" इति का० श्रौ० सू० - 4/4/26-27.

2 - अयं भक्षणान्तो वाजिनयागः शुचिवत्प्रोक्षणानन्तरं वा भवति [का०श्रौ०सू० 4/4/11-12]

3-4 - का० श्रौ० सू० ९ 5/2/12, 5/2/9.

5 - तत्रैव - 5/2/13 [वपनप्रकारोऽपि तत्रैव 5/2/14-18]

6 - वैश्वदेवपर्वान्ते ततः पौर्णमासेष्टिः, ततः पश्वादिकर्म, ततो वैश्वदेवादि नित्यं कर्म, ततो भोजनम् इति देवयाज्ञिकपद्धतौ ।

7 - आषाढशुक्लप्रतिपदीति देवयाज्ञिकानुसारतः [का०श्रौ०सू० - 5/3/1] प्रामादिको भाति ।

8 - "इदं द्वितीयं पर्व चातुर्मास्येष्वपि वरुणाय हविःप्रदानेन वरुणस्य मुख्यत्वात् वरुणप्रघासव्यपदेशमाप्नुम्" इति श्रौतपदार्थनिर्वचने ७८ पृ० ।

9 - "अहतवाससः, पत्नी च, ते एव वरुणप्रघासेष्वपि" इति का०श्रौ०सू० 5/1/16-18.

यजमानश्च पत्नी च परिदधाते ।

ततो यज्ञप्रयाणार्थं-पृष्ठ्यांकुरणं क्रियते । तत्र यजमानः "अमुकगोत्रा-मुकशर्माहं, ऐष्टिकेन हेतुकर्मणा[1] यज्ञप्रयाणकर्मणि कर्ये तत्र त्वं मे ब्रह्मा भव" इति ब्रह्माणं वृणीते । एवमेव होतारमध्वर्युं प्रतिप्रस्थातारमग्नीधं च वृणीते । ततस्तानर्चति ।

ततोऽग्निसमारोपणं भवति । तत्राऽध्वर्युराहवनीयस्य पञ्चभूसंस्कारान् कृत्वा समारोपणार्थं गार्हपत्यादाहवनीयकुण्डस्थारणी गृहीत्वा "अयं ते"[2] इति मन्त्रेण गार्हपत्ये प्रतपति, ततस्तूष्णीमेवारणी गार्हपत्य एवं पुनर्द्विः प्रतपति;[3] ततः "अग्ने योनिर्" इत्यादिना मन्त्रेणारणी आहवनीये प्रतपति; ततस्तूष्णी-मेवाहवनीय एव पुनररणी द्विः प्रतपति ।

ततोऽरणी आदाय प्राचीनवंशे स्थानान्तरे गत्वा[4] विहारं साधयति । तत्र प्रथमं प्राकृतं विहारं साधयति । तत्र प्राकृतीं वेदिं तु नैव खनति[5] ।

---

1- दक्षिणान्तरे इति आपदग्निणेन स्वगृहदक्षिणेन द्वादशगवदक्षिणेनेति वा यथार्थं प्रयोक्तव्यम् [का० श्रौ० सू० - 5/5/37-40]

2- मा० वा० शु० य० वे० मा० सं० - 3/14.

3- "तूष्णीं तूष्णीमेव द्विर्द्विस्तूष्णीम्" इति शाङ्खायनसूत्रात् [2/17/2] एवं कार्यमिति देवयाज्ञिकपद्धतौ ।

4- का० श्रौ० सू० - 5/3/1.

5- "वेदिं कृत्वाऽग्रेण गार्हपत्यं तस्मिन् प्राच्यौ वेदी प्रतिप्रस्थाता दाक्षिणीं दक्षिणां वेदिं करोति वारुणीमध्वर्युरुत्तरां तत्र वारुणीमुत्तरवेदिं च" इति वैखानस-सूत्र [8/8] वचनाद् यद्यपि प्राकृतवेदिकरणमपि प्रतीयते, तथापि कात्यायनेन नैवं प्रतिपादितमिति प्राकृतवेदिकरणं कातीयानामत्र नैव भवति ।

प्रतिमार्गे[1] च चतुरो मुष्टीन् गृह्णाति । प्रतिप्रस्थाता शूर्पे निवापं च करोति ।

ततोऽध्वर्युः स्थाल्यां निर्वापादानादिकं सर्वं कृत्वा "वरुणाय त्वा जुष्टं गृह्णामि" इति विशेषकृतेन मन्त्रेण मेषार्थं यवान् गृह्णाति।

ततः प्रतिप्रस्थाता च "मरुद्भ्यस्त्वा जुष्टं गृह्णामि" इति विशेषकृतेन मन्त्रेण मेष्यर्थं यवान् गृह्णाति ।

ततोऽध्वर्युः प्रतिप्रस्थाता च दक्षिणाग्नेः[2] पश्चाद् हविषः सादनं कुरुतः ।

ततः पवित्रच्छेदनादिकं प्रोक्षणीसंस्कारमुभयोः ।

तदनन्तरं चाध्वर्युः "ब्रह्मन् हविषी प्रोक्षिष्यामः" इति ब्रह्मणोऽनुज्ञां प्रार्थयते[3] ।

ब्रह्मा च "ओ३म् प्रोक्षत[4] यज्ञन्देवता वर्धयतु[5]" इत्यादिना प्रसौति ।

---

1- यावन्तो यजमानपुत्राः तावन्ति एककपालानि करम्भपात्राणि कार्याणि [का० श्रौ० सू० - 5/3/3] । अपत्यस्यैकापत्यस्य द्व्यपत्यस्य च नीवे-काषिकाणि कार्याणि [का० श्रौ० सू० - 5/3/5]

2 - अत्र दक्षिणाग्नेः श्रपणत्वादेवं कार्यमिति देवयाज्ञिकाद्याः [का०श्रौ०सू० 5/3/2]

3- देवयाज्ञिकपद्धतावेवमुक्तम्, वैखानसश्रौतसूत्रे तु "अध्वर्युप्रतिप्रस्थातारौ ब्रह्माणं पृच्छतः" इति प्रतिपादितम् [8/7]

4- यज्ञप्रयोगेषु ब्रह्मणः प्रयोगे कुत्रापि न भवतीति हरिस्वामिना इति देव-याज्ञिकः, "ओं ब्रह्मा प्रसौति" इति तु वैखानसश्रौतसूत्रे [8/7]

5- का० श्रौ० सू० - 2/2/8-10.

ततो "वसवस्त्वा पुनर्दधतु" इति त्रिवीक्षेण मुखेन मन्त्रेणाऽध्वर्युः स्रु-ग्वतीं वेदिं प्रोक्षति । प्रतिप्रस्थाता च कुम्भपात्राण्यपि यजाङ्ग प्रत्येकं ग्रहण-लक्षणया तूष्णीम् प्रोक्ष्य नैऋत्यामपि यजाङ्ग "रुद्रास्त्वा पुनर्दधतु" इति त्रिवीक्षेण मुखेन मन्त्रेण प्रोक्षति । उभौ प्रोक्षणीनामन्त्यं निधानं च कुरुतः ।

ततोऽध्वर्युः प्रतिप्रस्थाता च कृष्णाजिनादानादिकम्[1] ।

अध्वर्युमाह्वाने ह्वो पत्नी अग्नीद्ध्र योक्त्रेण कर्म करोति ।

ततः इध्मादानादि दक्षिणाग्निहोमान्तावुभौ कुरुतः[2] । तत्रपौर्णमासेव दक्षिणा-ग्नौ[3] स्व-स्वाहवनीयोपस्थानं "युवन्ति[4]" इत्यादिना मन्त्रेण कुरुतः । ततोऽङ्गार-निधानं प्रकृतिवत् ।

ततोऽध्वर्युः प्रतिप्रस्थाता च "ऊर्ज्जा स्थ विश्वायुवः[5]" इति मन्त्रेण स्वे स्वे कर्मे यथाकृतानाम्यतः, गार्हपत्यादङ्गारान् प्रत्येकमादाय "अग्नीरिते[6] रक्षोऽभिहिता अरातयः" इति मन्त्रेण पश्चिम कृत्वाङ्गारं गार्हपत्य एव प्रक्षिपतश्च ।

तत उभावेव "देवो वः सविताऽऽप्यायतु वर्षिष्ठे-

---

1- अत्र कुक्कुटाघ्नी न भवतीति देवयाज्ञिकमतम् ।
2 - फलीकरणं रक्ष न भवतीति देवयाज्ञिकः ।
3 - तत्र नाऽङ्गाराणां प्राकरणम्, स्वस्थानस्थितेष्वेवाङ्गारेषु अर्ध्वोपस्थानमिति देवयाज्ञिकः ।
4-5- मा० वा० शु० य० वे० सं० के० - 1/17, 1/22 (अनयोः विशेषः) ।
6 - का० श्रौ० सू० - 2/5/21

लिखति, ततः शम्यामात्रमन्तरालं मुक्त्वा पुरस्तादुदगग्रां शम्यां निधाय तत्पश्चिमधारायाम् "वित्तायनी मेऽसि"[1] इति मन्त्रेण स्फ्येनोदग्रां रेखां परिलिखति. ततो दक्षिणतः पश्चिमरेखादक्षिणकोटितः पूर्वरेखादक्षिणकोटिं यावत् प्रागग्रां शम्यां निधाय तदुत्तरधारायाम् "अवतान्मा नाथितम्"[2] इति मन्त्रेण प्रागग्रां रेखां स्फ्येन परिलिखति. ततः पश्चिमरेखोत्तरकोटितः पूर्वरेखोत्तरकोटिं यावत् प्रागग्रां शम्यां निधाय तद्दक्षिणधारायाम् "अवतान्माव्यथितम्"[3] इति मन्त्रेण स्फ्येन प्रागग्रां रेखां परिलिखति । ततोऽध्वर्युरग्नीध्रमन्वारब्धो "विदेरग्नर्नभो नाम"[4] इति मन्त्रेण स्फ्येन चात्वाले प्रहारं करोति । ततोऽध्वर्युस्तेन स्फ्येन च प्रहरणोद्धृतं पुरीषमादाय "अग्ने अङ्गिर आयुना नाम्नेहि"[5] इति मन्त्रेण वेदिं प्रति हरति । ततः "योऽस्यां"[6] इत्यादिना मन्त्रेण शङ्कुन्मितो[7] वेदेः पूर्वार्धे पुरीषं निवपति । अग्नीच्च तूष्णीं पाणिद्वयेन न्युप्तं पुरीषमभिमृशति । ततोऽध्वर्युः पूर्ववत् प्रहरणादिकं कृत्वा "यो द्वितीयस्यां"[8] इत्यादिना पूर्ववत् पुरीषं निवपति, अग्नीच्चाभिमृशति । ततः पुनरध्वर्युः पूर्ववत् प्रहरणादिकं कृत्वा "यस्तृतीयस्यां"[9] इत्यादिना मन्त्रेण पूर्ववत् पुरीषं निवपति, अग्नीच्चाभिमृशति । ततोऽध्वर्युस्तूष्णीं गृहीत्वा चात्वाले हन्ति । तथा चात्वालादुत्तरवेदिनिर्माणपर्याप्तं पुरीषं पिटकादौ गृहीत्वा "अनुत्त्वा देवश्रिते [हरामि]"[10] इति मन्त्रेणोत्तरवेदिं प्रति हरति । तं पुरीषं शङ्कुमिते

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-6- मा० वा० शु० य० वे० म० सं० - 5/9.
7 - का० श्रौ० सू० - 5/5/28.
8-9- मा० वा० शु० य० वे० म० सं० - 5/9.
10 - तत्रैव । "अनुत्त्वा देवश्रित इति चतुर्थं हरति देवेभ्यस्त्वा जुष्टं हरामीत्येवैतदाह" इति मा० श० प० ब्रा० - 3/5/1/32.

"एकस्फ्यायाङ्क्ति"[1] इति प्रतिप्रस्थातारं च प्रेष्यति ।

होता वाचयन् तन्त्रेण विहारं प्रविश्य गार्हपत्यसमीपे स्थित्वा दृष्टिमात्स्यान्मालम्भाय उपस्थाय होतृवदनात् तूष्णीं तृणं निरस्योपविशन्[2] - "प्रदेवन्देव्या धिया भरता जातवेदसम् ।" इत्यादिका अग्निमन्थनीया अनुब्रवीति ततो विरमति ।

अध्वर्युप्रतिप्रस्थातारौ च अग्नी प्रणयतावुभौ च निष्क्राम्य स्वां स्वां वेदिं प्रति स्वं स्वमग्निं हरन्तौ[3] स्वां स्वां वेदिमुत्तरेण गच्छतः । तत्र प्रतिप्रस्थाता स्वमग्निं तत्रस्थं कृत्वा प्राकृतात्कर्मविधानात् प्रभृति अध्वर्युवेदि-दक्षिणश्रोणिं यावद् लेखां करोति[4] ।

ततोऽध्वर्युरुत्तरवेदिं प्रदक्षिणीकृत्योत्तरवेदेर्दक्षिणतो देशेऽवस्थाय उदङ्मुखः स्थित्वाऽग्निमन्यस्मै धारणाय दत्त्वाऽन्यहस्ता लौकिकोदकपूर्णपात्रमादाय तदुदकेन ~~वे~~ "इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु"[5] इति मन्त्रेणोत्तरवेदिं पूर्वभागे प्रोक्षति, ततः "प्रचेतास्त्वा रुद्रैः पश्चात्पातु"[6] इति मन्त्रेणोत्तरवेदिं पश्चाद्भागे प्रोक्षति । ततो "मनोजवास्त्वा पितृभिर्दक्षिणतः पातु"[7] इति मन्त्रेणोत्तरवेदिं दक्षिणभागे प्रोक्षति, ततश्च "विश्वकर्मा त्वादित्यैरुत्तरतः पातु"[8] इति मन्त्रेणोत्तरवेदिमुत्तरभागे प्रोक्षति । तत उत्तरवेदिदक्षिणांसेऽग्नि

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - का०श्रौ०सू० - 5/4/7, मा०श०प०ब्रा० - 3/5/2/2.
2 - का०श्रौ०सू० - 3/5.
3-4- का०श्रौ०सू० - 5/4/8, 9.
5-8- मा०वा०शु०य०वे०मा०सं० - 5/11.

उभावेव उपयन्तौः स्व-स्वाग्नेर्दक्षिणतो नियतः ।

होता चाध्वर्युणा प्रतिप्रस्थाता च निर्मथ्यमानाग्नी दृष्ट्वा -
"जातवेदो निर्मथितोऽयमग्ने चित्रभानुः स्वनीक दैव्योऽधिहन्तमृधः सीद-
योनिषु ।"[1] इत्यादिकम् अनुमन्त्रयति[2] ।

उपयन्तीनिर्मथनानन्तरमध्वर्युः प्रणीतार्थमाहवनीयमनुकल्प्य प्रणीता-
प्रणयनं करोति[3] । ततो मध्यमाग्नीध्रं परित्यज्यान्यान् अग्नीन् परिस्तृणाति।
प्रतिप्रस्थाता च स्वमाग्नीध्रं परिस्तृणाति ।

ततोऽध्वर्युर्यथार्थं पात्रासादनं करोति । प्रतिप्रस्थातापि यथाप्रयोजनं
पात्रासादनं करोति ।

ततोऽध्वर्युर्गार्हपत्यसमीपे हविर्धान्ययुक्तं सरिङ्गम् अनो, वा हवि-
र्धान्ययुक्तां पात्रीं वा निदधाति ।

ततोऽध्वर्युः पात्रान्तरे प्रोक्षणीरन्वीय शूर्पाग्निहोत्रहवण्यादादानादिकं
करोति । यथादेवतं हविर्ग्रहणं प्रोक्षणं च ।

---

1- शु०य०वे०मा०सं० - 6/15/16, मा०वा०शु०य०वे०मा०सं० - 11/35, 11/36,
का०श्रौ०सू० - 3/5 (ऐ०ब्रा० - 5/2)

2- का०श्रौ०सू० - 3/5.

3- "प्रणीतापत्नीकर्मणाग्निमन्थनानुहव्यानुप्रैषजनाम्याचनहोतृवदनवरण-
प्राशित्राङ्गुलिपर्वाञ्जनावान्तरेडाभागापरमन्थनवर्जमन्यत् प्रतिप्रस्थाता ।
कृतानुकरोऽन्यत्र दक्षिणस्यात्" इति वचनात् (का०श्रौ०सू० - 5/4/33-34)
प्रतिप्रस्थाता प्रणीताप्रणयनादिकं नैव करोति ।

ततोऽध्वर्युप्रतिप्रस्थात्रोः पात्रोक्षणम् ।

ततोऽध्वर्योः कृष्णाजिनादानादिकम् । कण्डनान्ते यजादेवतां विभज्य हविष आसन्नः ।

ततोऽग्नेः कपालोपधानम् ।

ततो यजमानकर्तृकाध्वर्योराज्यस्य निर्वपणम् । ततः प्रतिप्रस्थातु-स्तत्र राज्यस्य निर्वपणम् । एवमेव क्रमेण वेद्योः करणं च ।

कपालोपधानसमकालमध्वर्युणा प्रारब्धस्य पेषणस्यान्ते पिष्टानां कृष्णाजिने प्रोक्षणम् । ततोऽध्वर्युणा पूर्वनिर्मिताया वारुण्याः पयस्यायाः कृते उपकृष्टाङ्गारादिलेपादिकः परिशाखान्तो दोहः ।

ततः प्रतिप्रस्थात्रा पूर्वनिर्मिताया मारुत्याः पयस्यायाः कृते उपकृष्टाङ्गारादिलेपादिकः[2] परिशाखान्तो दोहः ।

ततोऽध्वर्युकर्तृकं पिष्टानां तण्डुलानां पेषणम् । ततः पिष्टं विभज्य इदमग्नेः सवितुरिन्द्राग्न्योः कय च, इदममुकस्य इत्यादिकः । ततश्चर्वे-तण्डुलानां विभागः, इदं सोमस्य, इदं सरस्वत्या इत्यादिकः । ततो

---

1- यत्पुरोडाशान्यागसंपत्ति च - 1· आग्नेयोऽष्टाकपालः पुरोडाशः, 2·सौम्यश्चरुः, 3· सावित्रो द्वादशकपालोऽष्टाकपालो वा पुरोडाशः, 4· सारस्वतश्चरुः, 5· पौष्णश्चरुः, 6· ऐन्द्राग्नो द्वादशकपालः पुरोडाशः, 7· वारुणी पयस्या [अध्वर्योः], 8· मारुती [प्रतिप्रस्थातुः], 9·काय एककपालः पुरोडाश इति नव [का०श्रौ०सू० 5/1/15, 5/4/23]

2- अत्र प्रैषः प्रतिप्रस्थात्रोच्चारणीय इत्यापस्तम्ब इति देवयाज्ञिकपद्धतौ ।

यथाक्रमं संवापः । पुरोडाशपिण्डस्य त्रैधम् विभागः, तदग्नेः, तद्[1] सवितुः, तदैन्द्राग्नयोः, तदङ्गुष्ठस्यैतावन्मात्रम् । यथाक्रममधिश्रयणम् ।

अग्नीदध्वर्योराज्यमधिश्रित्य दक्षिणतः प्रतिप्रस्थातुराज्यमधिश्रयति ।

अधिश्रयणे ऐन्द्राग्नादुत्तरं वारुण्याः पयस्यायाः स्थानम्, तदनन्तरं प्रतिप्रस्थातुराज्यस्य दक्षिणतो मारुत्याः, तदुत्तरं कायस्येति क्रमनिवेशः ।

ततः पयसी वर्धयित्वा पर्यग्निकरणम्, यथाक्रमं श्रपणम्, तयोः पयस्योर्यथाक्रमं यथास्वं दध्नः क्षेपः, कुलालवत् च पुरोडाशानामभिवासनम्, पूर्वोक्तमार्गेणाङ्गुष्ठमात्रेण ताद्दश्वर्युप्रतिप्रस्थातारौ पयोदधिनी मानं यथास्वम् ।

ततोऽध्वर्युः प्रतिप्रस्थाता च स्फ्यमादाय स्वां स्वां वेदिं कुरुतः ।

ततोऽध्वर्युः "ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामः" इत्याह ।

ब्रह्मणा च पूर्वपरिग्रहस्तदा[1] ।

ब्रह्मानुज्ञाताध्वर्युप्रतिप्रस्थातारावुत्तरपरिग्रहं कुरुतः । ततो दक्षिणतः पुरीषमुद्धृत्य पुरस्तात्सम्मार्जनं च कुरुतः ।

ततोऽग्नीदध्वर्योः प्रोक्षणीर्धारयति । प्रतिप्रस्थाता च स्वां स्वकीयप्रोक्षणीर्धारयति ।

ततोऽध्वर्युः स्फ्यमुद्यम्य "प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुवः सम्मृड्ढि, पत्नीं सन्नह्याज्येनोदेहि" इति प्रेष्यति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - ऊहः कार्य इति केचिन्नेति केचित् ।

ततः पत्नी शिरसः शूर्पमवतार्य दक्षिणोदाय "यद्ग्रामे"[1] इति मन्त्रेण शूर्पेण[2] करम्भपात्राणि जुहोति[3] ।

ततो यजमानः "मो षू ण इन्द्रात्र"[4] इति मन्त्रं जपति ।

ततः प्रतिप्रस्थाता पत्नी करम्भपात्रहोमार्थं येन मार्गेणानीता तेनैव मार्गेण तां प्रतिनयति तां च "अक्रन्कर्म"[5] इति मन्त्रं वाचयति । ततः स्वस्थाने प्रापिता पत्नी तत्रैवोपविशति ।

ततः प्रतिप्रस्थातरि स्ववेदिस्थमीषं प्राचीनदक्षिणयुक्तसान्निध्येन उत्तरवैदिकमाध्वर्यवीयं संमृज्य प्रतिप्रस्थात्रिकसान्निध्येन दक्षिणमारुतवेदीयं प्रकृतिवत् सम्मार्ष्टि ।

ततोऽग्निकरणाद्याज्यभागान्तं कर्मोभावेव कुरुतः ।

आज्यभागानन्तरं प्रतिप्रस्थाता स्रुचौ पाणावादायैवोपविशति[6] ।
अध्वर्युर्विधिः प्रचरति ।

तत्र पौष्णयागान्ताः प्रधानयागा वैश्वदेवपर्ववदेव[7] । ऐन्द्राग्नयागश्च दार्शिकैन्द्राग्नयागवत्[8] ।

---

1 - मा० शाखा० शु० य० वे० मा० सं० - 3/45.
2 - मा० श० प० ब्रा० - 2/5/2/25.
3 - यजमानस्याऽपि हस्ते तत्कारिता माध्यन्दिनीयके नास्ति ।
4-5- मा० वा० शु० य० वे० मा० सं० - 3/46, 3/47.
6-7- का० श्रौ० सू० - 5/5/15, 5/4/23.
8 - "ऐन्द्राग्नस्य च दर्शे" इति कात्यायनश्रौतसूत्रे 3/6.

निरवप्तु' वरुणायानुब्रूहि" इति अध्वर्युर्होतारं प्रेष्यति ।

होता च - "इममे वरुण"[1] इति पुरोनुवाक्यां अन्वाविध पठति ।

अध्वर्युश्च प्रत्यक् निरवदानं कृत्वा सकृदुपरिष्टादभिघारयिताने प्रत्यभिघारणाभावात् प्रत्याश्राविते वरुणं यजेति होतारं प्रेष्यति ।

होता च "तत्त्वा यामि"[2] इति याज्यां अन्वाविध पठति ।

वषट्कृतेऽध्वर्युरप्सु जुहोति[3] ।

ततोऽध्वर्युः पुनर्जुह्वामुपस्तीर्य सकृन्निष्कार्यं जुह्वां प्रक्षिप्य "अग्नी-वरुणाभ्यामनुब्रूहि" इति होतारं प्रेष्यति ।

होता च - "त्वन्नो अग्ने"[4] इति पुरोनुवाक्यां अन्वाविध पठति ।

अध्वर्युश्च प्रत्यक् सकृन्निष्कार्यप्रदेशं कृत्वोपरिष्टाद् द्विरभिघारणाभाव्य प्रत्याश्राविते "अग्नीवरुणौ यज" इति होतारं प्रेष्यति ।

होता च "स त्वन्नो अग्ने"[5] इति याज्यां अन्वाविध पठति ।

वषट्कृतेऽध्वर्युरप्सु जुहोति ।

ततोऽध्वर्युः वारुणपयस्यानिष्कासमादाय "अवभृथ निचुम्पुण"[6] इति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2 - मा० वा० शु० य० वे० मा० सं० - 21/1; का० श्रौ० सू० - 3/7. 21/2.
3 - का० श्रौ० सू० - 10/8/26.
4-5 - मा० वा० शु० य० वे० मा० सं० - 21/3; का० श्रौ० सू० - 19/7/15;
का० श्रौ० सू० - 3/7; 21/4.
6 - मा० वा० शु० य० वे० मा० सं० - 3/48. 8/27.

ततो यजमानस्य कर्म न वा[1] ।

ततः शतं ब्राह्मणान् भोजयति[2] ।

ततो गार्हपत्याहवनीयौ यथाविधि समारोप्य स्वभवनं गत्वा निर्मथ्य पुनरुद्धृत्य यजमानः पौर्णमासेष्टिं कृत्वा पश्चादेकं वैश्वदेवादि नित्यं च कुर्यात्[3] ।

इति तृतीयं वरुणप्रघासपर्व निरूपितम् ।।

<u>अथ साकमेधाः</u>

कार्तिक्यां पौर्णमास्यां[4] प्रारभ्य द्वयोरह्नोः सम्पादनीयानाम् अनीकवतीष्टिः, सान्तपनीयेष्टिः, गृहमेधीयेष्टिः, क्रैडिनीयादित्येष्टिः[5], महाहविरिष्टिः, (महाहविः), पितृयेष्टिः (महापितृयज्ञः), त्र्यम्बकहोमः (त्र्यम्बकेष्टिः) इत्येतासामिष्टीनां साकमेधा इति संज्ञा । साकमेधाश्चातुर्मास्यानां तृतीयं पर्व ।

तत्र कार्तिक्यां पौर्णमास्यां प्रातरग्निहोत्रं हुत्वा यजमानः "अमुकगोत्रामुकशर्माहं, ऐष्टिकेन वृषभदक्षिणेन साकमेधकर्माहं करिष्ये, तत्र त्वं मे ब्रह्मा

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 5/2/13.

2- वरुणप्रघासे "शतं पचेत पचेत" इति वचनादेवमुक्तम् ।

3- देवयाज्ञिकपद्धतावेवमुक्तम् ।

4- का० श्रौ० सू० - 5/6/1.

5- यद्यपि क्रैडिनेष्टिः, क्रीडिनीयेष्टिः इति वाक्यैः प्रयुक्तं तथापि का० श्रौ० सूत्रानुरोधादस्माभिरेवं प्रयुक्तम् ।

तत्र च ब्रह्मप्रत्यर्पणनिरासान्तकारः, दक्षिणतो ब्रह्मयजमानयोरुपवेशनम्, ततो वेङ्•कदर्व्याः सम्मार्जनम्, बाह्यतश्च परिस्तीर्य अभिघारणाय स्रुवेण आ-पिताया क्षीरोदनस्थाल्याः सकाशाद् दर्व्याः "पूर्णा दर्वि"[1] इति मन्त्रो-दनस्य ग्रहणम्, स्वस्थानादुत्थाय प्रैषः, आहवाने इति इत्येवं शब्दे कृते, कृते इति सम्मा जुहुधीत्युक्ते "देहि मे"[2] इति मन्त्रेणाहवनीये एका क्रियते । पूर्णदर्वहोम-कर्मानुष्ठो न स्वाहाकारो ब्रह्मणोपवेशनं[3] दीयते । इति सपूर्णदर्वहोमा नान्त-पत्नीकेष्टितन्मान्तः प्रातिसी गृह्येष्टिरिष्टिः समाप्ता ।

ततो बर्हिर्होमादिः कर्मपर्यान्तः नान्तनीयेन्द्रवङ्•गकलापः समाप्तः[4] । इति गृह्येष्टिकर्म नान्तनीयेष्टिः समाप्ता ।

(क्रीडिनीयादित्येष्टिः)[5]

प्रातरग्निहोत्रमहुत्वैव पूर्णदर्वहोमादिकं कृतं चेद् यथाविधि प्रातरग्नि-होत्रं कृत्वा "क्रीडिनीयादित्येष्ट्यर्थमग्नी उद्धरिष्यामि" इति सङ्•कल्प्याहवनीय-दक्षिणाग्नी यथाविधि उद्धरति।

ततो यथाविधि मरुतः क्रीडिनः सप्तकपालेन पुरोडाशेनादितिं चरुणा यजे इत्यादिकं निर्वापमिन्वाधानं कुर्यात् ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2- भा० वा० श्रु० प० वे० भ० कौ - 3/49, 3/50।

3 - का० श्रौ० सू० - 5/6/41।

4- तत्रैव "प्रातर्वा होमकालात्" इति सूत्रात् 5/6/33।

5 - इमे हविषी समानतन्त्रे भवत इति देवयाज्ञिकः, "अदित्यास्तु सर्वमन्याहुतो व्याख्यातमुक्तमावर्ज्यैन चेद्" इति वचनं होमसूत्रकारोक्तिः (3/11) अत्र द्रष्टव्यम् ।

"सन्ततहोम वर्जम्" इति प्रयोगविशेषः ।

नव प्रयाजा वैकृतवदनुयाजा एव ।

तत आज्यभागौ ।

प्रधानयागे माहेन्द्रान्तानां हविषां[1] याज्यानुवाक्या क्रमाच्च पूर्वमेवोक्ताः । वैश्वकर्मणस्य तु "विश्वकर्मन्हविषा वावृधानः"[2] इत्यादिका पुरोनुवाक्या, "यानि ते धामानि"[3] इत्यादिका च याज्या । एतस्य पुरोडाशस्यार्धः पूर्ववदेव ।

ऐन्द्राग्नस्य कुम्भिजभागकल्पनाभावः, अन्येषां हविषां तद् भवतीति देवयाज्ञिकपद्धतौ ।

दक्षिणान्ते ददातीति प्रयोगविशेषः ।

अनुयाजा नव स्रुग्दाहेन वैकृतपर्ववत् ।

सूक्ते अग्नेः सोमस्येत्यादिको यथादेवतं प्रयोगः ।

शेषं समिष्ट यजुः ।

अन्यत् सर्वं वरुणप्रघासवत् कर्मावसानान्तम् । इति महाहविरिष्टिः ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. अत्र पञ्चानां हविषां वैश्वदेव पर्वणि, माहेन्द्रस्य च पूर्णमासप्रयोग-टिप्पणीषु ।

2. मा०श्रौ०सू०अ०प्र०ख० - 17/22 [आपस्तम्ब 12/18] देवतादिलक्षणे पुरोनुवाक्येति विनायके याज्यानुवाक्यायाः पाठभेदः; का०श्रौ०सू० 3/11.

3. मा०श्रौ०सू०अ०प्र०ख० - 17/21, का०श्रौ०सू० - 3/11.

॥महापितृयज्ञः॥

ततो दिनस्य त्रिषु भागेष्वन्त्ये भागे प्रवृत्ते[1] ऋत्विग्यजमानाः सर्वे प्राचीनावीतिनो भवन्ति । ततोऽध्वर्युः "पितृयज्ञार्थं दक्षिणाग्निमुद्धरिष्यामि" इति सङ्कल्प्य दक्षिणामुखो दक्षिणाग्निमुद्धरति । ततो यज्ञोपवीती भूत्वाऽऽहवनीयं प्राङ्मुख उद्धरति ।

यः पिण्डदानं करिष्यन् भवति स यजमानोऽध्वर्युर्वा नीविं करोति।

तत्र च यथाविधि पितृभ्यः सोमवद्भ्यः षट्कपालेन पुरोडाशेन, पितृभ्यो बर्हिषद्भ्यो धानाभिः, पितृभ्योऽग्निष्वात्तेभ्यो मन्थेन यक्ष्ये इत्यादिक निर्वापं दक्षिणामुखो यजमानो दक्षिणाग्नावेवाऽन्वाधानं कुर्यात्[2] । षड् पात्राणि चोपकल्पयति ।

आहवनीयस्य पुरस्तात् प्राङ्मुखो यजमानो दक्षिणामुखं ब्रह्माणं "पितृयज्ञेनाहं यक्ष्ये" इत्याद्युक्त्वा वृणीते ।

ततो ब्रह्मोत्थाय दक्षिणेनाहवनीयमागत्य दक्षिणाग्नेः पूर्वतः प्रत्यङ्मुखो दक्षिणाग्न्यभिमुखः तन्मध्ये दक्षिणाग्रमास्तीर्य संकल्प्योपविशति । तस्योत्तरतस्तथैव यजमान उपविशति ।

ततो यजमानो गार्हपत्यदक्षिणाग्नी अन्तरेणगत्वा दक्षिणाग्नेरुत्तरतो दक्षिणामुखस्तिष्ठन् दक्षिणाग्निमभिमुखोऽपि उपस्थाय मन्त्रोच्चारणेन प्रार्थयति । ततः स्वासने उपविशति ।

- - - - - - - - - - - - - - - - - - - - - - - - -

1- महापितृयज्ञोऽपराह्णे भवतीति देवयाज्ञिकपद्धतौ ।
2- पितृयज्ञे दक्षिणाग्निराहवनीयस्थानीयो भवति ।

अध्वर्योः पुनः कृष्णाजिनादानादिकः पेषणारम्भः । तत्र "धान्यमसि धिनुहि पितॄन्" इत्यूहः ।

अग्नीध्रो दक्षिणामुखस्तेनोपविष्टस्य कपालोपधानम् । तत्र च स उपवेषमादायाङ्गारानुत्तरतः करोति । "अप पितृकर्तृं जह" इत्यङ्गारस्याहरणम् । गार्हपत्यस्य दक्षिणार्धे कपालोपधानम् । ततो दक्षिणाग्नौ स्वस्थानस्थानामङ्गाराणामुपरि खर्परस्योपधानम् । उदकोपस्पर्शनानि गार्हपत्येऽधिश्रयणम् । निर्वापादुष्टस्य दक्षिणाग्नावधिश्रयणम् ।

ततो यजमान आज्यनिर्वापं कुरुते, वेदं च करोति । तत्र "देवपितृभ्यो वेदो भव" इति प्रयोगविशेषः ।

अध्वर्युः पेषणं कृत्वा प्रोक्षान्ते पिण्डानामीक्षणं पात्र्यां लेपनं च कृत्वा पात्रीं गृहीत्वा पूर्वेणाहवनीयं गत्वा वेदिमध्य उपविशति ।

अग्नीत् स्रुवं गृहीत्वोपस्पर्शनीः प्राङ्मुखस्थानीयाध्वर्युहस्ते निनयति । अध्वर्योः प्रतिग्रहणादि ।

आज्यस्य पुरोडाशस्य च गार्हपत्येऽधिश्रयणम्, धानानां दक्षिणाग्नौ भर्जनम् । धानासु "घर्मा स्थ विश्वायुषः" इत्यूहः । ततो गार्हपत्यादङ्गारमादायाज्यपुरोडाशयोर्दक्षिणाग्न्यधिश्रितधानानां च पर्यग्निकरणम्, गार्हपत्येऽङ्गारस्य प्रतिक्षेपश्च । तत उदकालम्भः ।

ततः पुरोडाशश्रपणम्, धानाश्रपणं च । धानाश्रपणे "मा भेष्ट मा संविग्ध्वम्" इत्यूहः । ततो धानानामुद्वासनम् । विकल्प "स्वदस्व पितृणाम् बर्हिषदाम्, स्वदस्व पितृणामग्निष्वात्तानाम्" इति धानानामालम्भः ।

आग्न्यागारात् सहमुष्टिं गृहीत्वा चतुष्पथादावुदङ्मुखोऽतिक्रम्य पूर्वतो गत्वो-दङ्मुखस्तत्रैव "इन्द्राय स्वाहा" इति मन्त्रेणोत्तराघारमाघारयति । तत एव स्रुवामञ्जनम् ।

ततोऽध्वर्युस्तस्मादेव मुष्टिं गृहीत्वा गृहीत्वा गत्वा "अग्नये स्वाहा" इति "सोमाय स्वाहा" इति उपविश्यैवाज्यभागौ जुहोति ।

ततोऽध्वर्युरतिरिक्तवर्जितानां पुरोडाशानामुत्तरार्धात् सकृत्सकृ-दवदायातिक्रम्य पूर्वतो गत्वोदङ्मुख उपविश्यैव[1] "एष ते रुद्र "एष ते रुद्र भागः[2]" इत्यादिना मन्त्रेण जुहोति ।

ततोऽध्वर्युरतिरिक्तं पुरोडाशमादायोत्तरतो गच्छति । अन्येऽपि तेऽनुगच्छन्ति । ततोऽध्वर्युराखुभिरुत्कीर्णे पांसुराशौ तं पुरोडाशम् "एष ते रुद्र भाग आखुस्ते पशुः" इति मन्त्रेणान्तर्हितं करोति ।

ततः सर्वे प्रत्यागत्य चतुष्पथं प्राप्य "अव रुद्रम्[4]" इति मन्त्रं जपन्ति ।

ततः सर्वे ऋत्विजो यजमानः पत्नी पतिकामाः सौभाग्यकामा वा यजमानकुमार्यश्च दक्षिणपाणिना सव्यानूरून् कुट्टयन्तो त्र्यम्बकं[5] मन्त्रं पठन्तोऽग्निं-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 1/2/7.

2/3- मा० वा० शु० य० वे० मा० सं० - 3/57.

4- ,, - 3/58.

5- "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्" इत्यादिमन्त्रं पठन्ति.
"त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्" इत्यादिकं कुमार्यः पठन्ति
[मा०वा०शु०य०वे०मा०सं० - 3/60. का०श्रौ०सू० - 5/10/13-16]

ततोऽध्वर्युप्रभृतयः सर्वे तं वीरुधं प्रदक्षिणीकृत्य पश्चादकोणिकामनुमन्त्री मार्जयित्वा विद्यागमनमागच्छन्ति ।

ततः सर्वे पादप्रक्षालनादिकृत्वाचम्याप उपस्पृशन्ति ।

ततः प्रणीताविमोकादि कर्मापवर्गान्तं[1] कर्म क्रियते[2] ।

ततो यजमानस्य वर्णं न वा[3] । ततः शतस्य ब्राह्मणानां भोजनम् ।

ततोऽग्निसमारोपं कृत्वा गृहान् गत्वा मथित्वा यथाविधि पौर्णमासेष्टिं कृत्वा पशादिकर्म च समाप्य वैश्वदेवादि नित्यं च कृत्वा भोजनम्[4] । इति साकमेधः ।

<u>अथ शुनासीरीयम्</u>

चातुर्मास्यानामुत्कर्षाय यो समाप्तावे फाल्गुन्यामुपक्रमे[5], साकमेधानन्तरं तस्मीयपर्वणि वीप्सेष्वहु यजनीयेऽहनि[6] वा, चातुर्मास्यानामेव वाय्वभि-

---

1. देवयाज्ञिकभाष्ये [5/10/23] एतादृशः क्रमः सूचितः ।
2. "अत्र च अग्निसमारोपणादि कर्मापवर्गान्तं व्याख्यानाभावे कौक-भागानुकूल्यात्" इति कर्कः [5/10/21]
3. "पर्वसंध्यासु वपने वा प्रागन्त्यात्" इति कात्यायनः 5/2/13.
4. यदि सायमग्निहोत्रकालपर्यन्तमपि साकमेधपर्वसमाप्तिर्न भवति तदाऽपि पर्व समाप्य पूर्णमासेष्टिं च समाप्यैव सायमग्निहोत्रमिति देवयाज्ञिकमतम् ।
5. मा०श०प०ब्रा० – 2/6/3/11; का०श्रौ०सू० – 5/11/15.
6. ,, – 2/6/3/10; ,, – 5/10/1-2.

ततोऽध्वर्युर्वपाश्रपणीभ्यां पशुबन्धनोन्मुक्तां त्रिगुणां रशनां "माहि-र्भूर्मा पृदाकुः"[1] इति मन्त्रेण चात्वाले प्रास्यति ।

ततोऽध्वर्युः "प्रतिप्रस्थातः पत्नीमुदानय"[2] इत्याह ।

ततः प्रतिप्रस्थाता पात्नेजनहस्तां पत्नीं गार्हपत्यस्य समीपात् पशुं प्रतिनयन् "नमस्त आताना"[3] इत्यादिकं यजुः इत्युक्त्वा पत्नीं वाचयति । पत्नी पठति ।

ततः पत्नी पशुशीर्षं प्राचोदङ्मुखी उपविश्य पशोः "वाचन्ते शुन्धामि"[4] इति मन्त्रेण मुखम्, "प्राणन्ते शुन्धामि"[5] इति मन्त्रेण नासिके[6], "चक्षुस्ते शुन्धामि"[7] इति मन्त्रेण चक्षुषी[8], "श्रोत्रन्ते शुन्धामि"[9] इति कर्णौ[10], नाभिन्ते शुन्धामि[11] इति मन्त्रेण नाभिम्, "मेढ्रन्ते शुन्धामि"[12] इति मन्त्रेण शिश्नम्, "पायुन्ते शुन्धामि"[13] इति मन्त्रेण गुदम्, पादान् समेत्य "चरित्रांस्ते शुन्धामि"[14] इति मन्त्रेण पादान् प्रोक्षति ।

ततः पात्नेजनोदकेनाध्वर्युर्यजमानश्च शेषं पशोः "मनस्त आप्याय-ताम्"[15] इति मन्त्रेण शिरः, "वाक्त आप्यायताम्"[16] इति मुखम्, "प्राणस्त

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - मा० वा० शु० य० वे० मा० सं० - 6/12.

2 - का० श्रौ० सू० - 6/5/26.

3-7- मा० वा० शु० य० वे० मा० सं० - 6/12-13, 14.

8 - द्वितीये चक्षुषि मन्त्रावृत्तिरिति देवयाज्ञिकः ।

9 - मा० वा० शु० य० वे० मा० सं० - 6/14.

10 - द्वितीये कर्णे मन्त्रावृत्तिरिति देवयाज्ञिकः ।

11-16- मा० वा० शु० य० वे० मा० सं० - 6/14, 15.

पृथिवी प्रोर्णुवाथाम्[1]" इति मन्त्रेणाच्छादयति । ततो वपां छित्वा प्रतिप्रस्था-त्रे प्रयच्छति ।

ततः प्रतिप्रस्थाता वपां चात्वाले प्रताप्य शामित्रेऽग्नौ प्रतप्य चा-त्वालोत्करान्तरेणाग्नीत्प्रणीताहवनीयसमीपमागत्योत्तरतोऽवतिष्ठते । अग्नीच्च शामित्रादेकमुल्मुकं गृहीत्वा चात्वालोत्करान्तरेणागत्याग्नीत्प्रणीताहवनीये प्रा-स्यति । ततोऽध्वर्युरपि चात्वालोत्करान्तरेणागत्य पूर्वं स्रुवस्तोकं कृत्वा "वायो वेस्तोकानाम्[2]" इति मन्त्रेणाग्नीत्प्रणीताहवनीये प्रास्यति ।

ततः प्रतिप्रस्थातोत्तरतस्तिष्ठन्नेवाहवनीये वपां प्रताप्य पुनरग्नी-दन्तराभूय परीत्योत्तरवेदेर्दक्षिणत आसीनो वपां नाहवनीयस्योपरि धारयित्वा श्रपयति ।

ततोऽध्वर्युः स्रुवेणाज्यधारया आज्यं गृहीत्वा "अग्निराज्यस्य वेतु स्वाहा[3]" इति वपामभिघारयति । ततोऽध्वर्युरेव "स्तोकेभ्योऽनुब्रूहि" इति मैत्रावरुणमनुज्ञापयति[4] ।

मैत्रावरुणश्च - "जुषस्व[5]" इत्यादिकं स्तोकीयं सूक्तं यथाविधि पठति।
ततः शृतायां वपायां प्रतिप्रस्थाता "शृता प्रचर[6]" इत्यध्वर्युमाह ।
ततोऽध्वर्युस्तत्रैव स्थितायां वपायामभिघारं करोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-3- मा० वा० शु० य० वे० म० सं० - 6/16.
4 - का० श्रौ० सू० - 6/6/17.
5 - का० श्रौ० सू० - 4/5 [ऋ०सं०मं० - 1/75/1, 3/21/1-5].
6 - का० श्रौ० सू० - 6/6/17.

मैत्रावरुणश्च "अग्निर्वृत्राणि"[1] इत्यादिकां पुरोनुवाक्यां[2] यथाविधि पठति ।

अध्वर्युश्च यथाविधि जुह्वाया आज्यं जुहूमादाय जुह्वामाघारयो-स्त्यातिक्रम्याग्नाय प्रत्याक्रान्तो "अग्नये प्रेष्य" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च "होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज"[3] इति आग्नेयाज्यभागयाज्यापाठाय होतारं प्रैष्यति ।

होता च "जुषाणो अग्निराज्यस्य वेतु"[4] इति याज्यां यथाविधि पठति ।

ततोऽध्वर्युर्जुहोति । ततोऽध्वर्युः दक्षिणः समीपे गत्वा "सोमायानुब्रूहि" इति मैत्रावरुणं प्रैष्यति ।

मैत्रावरुणश्च "त्वं सोमासि"[5] इत्यादिकां पुरोनुवाक्यां यथाविधि पठति ।

अध्वर्युश्च जुह्वाया आज्यं जुहूं यथाविधि आदाय जुह्वामाघारयो-स्त्यातिक्रम्याग्नाय प्रत्याक्रान्तो "सोमाय प्रेष्य" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च "होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज"[6] इति सौम्याज्यभागयाज्यापाठाय होतारं प्रैष्यति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - मा० वा० शु० य० वे० म० सं० - 33/9.

2-6- का० श्रौ० सू० - 6/2. 3. 4. 3 [फो: साम्नायणिकारत्वाद् कृष्णयाज्याज्यभागौ के इति केचित्, अग्निष्टोमपद्धतौ, 229 पृ०]

कृत्वाऽध्वर्युः "स्वाहाकृते ऊर्ध्वनभसम्मारुतङ्गच्छतम्" इति ते आहवनीयेऽनु-प्रहरति[1] । ततः स्रुवं स्रुचौ स्वस्थाने आसादयति[2] ।

ततो ब्रह्मादिक्रमेण सर्वे ऋत्विजो यजमानः पत्नी च "इदमापः"[3] इति मन्त्रेण चात्वाले मार्जयन्ते[4] ।

ततः पशुपुरोडाशनिर्वापः क्रियते[5] । तत्र प्रथमं "यजमान वाचं यच्छ" इति प्रैषः । ततः पात्रासादनम् । तत्र च शूर्पम्, द्वादश कपालानि[6], कृष्णाजिनम्, उलूखलमुसलम्, पात्री, धृष्टिः, संवपनोदकम्, शृतावदानम्, पुरोडाशपात्री, कर्मा-पवर्गाग्निम् इति पात्राण्यासादयन्ते। ततः सर्पिष्कपाभ्यां गार्हपत्यस्य पश्चिमतो निधानम् । ततः पात्रान्तरे प्रोक्षणीरुन्नीय स्रुवाग्निहोत्रहवण्यादि हविः साद-नान्तम् । अत्र ग्रहणे "इन्द्राग्निभ्यां जुष्टम्" इत्यादिको यथादेवतं प्रयोग-विशेषः । पात्रान्तरे निहिताः प्रोक्षणीर्हविर्ग्रहण्याऽऽनीय ब्रह्माणं पृष्ट्वा तेन प्रसूतो हविः प्रोक्षति । तत्रापि "इन्द्राग्निभ्यां त्वा जुष्टम्" इत्यादिको यथादेवतं प्रयोगविशेषः । ततः पात्राणां प्रोक्षणम्, प्रोक्षणीनां निरसीकरणम्। ततः

---

1- मा० वा० शु० य० वे० मा० सं० - 6/16.

2- का० श्रौ० सू० - 6/6/24.

3- मा० वा० शु० य० वे० मा० सं० - 6/17.

4- का० श्रौ० सू० - 6/6/25.

5- यद्यपि सूत्रकारेण पशुविधानानं पूर्वमुक्तं तथापि श्रुत्यनुरोधात् ततः पूर्वमेव पशुपुरोडाशनिर्वापप्रारम्भो भवति ।
[मा० श० प० ब्रा० - 3/8/3/2-3]

6- ऐन्द्राग्नको द्वादशैव कपालानीति देवयाज्ञिकः ।

पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा[1]" इति मन्त्रेण जुहोति ।

ततो होता "प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या" इति याज्याया उत्तरार्धं व्यतिषज्य पठति ।

ततोऽध्वर्युर्जुह्वा जुहूवदानानि जुहोति ।

ततः प्रदक्षिणमावृत्य जुह्वा पृषदाज्यधान्याः पृषदाज्यं गृहीत्वा "वनस्पतयेऽनुब्रूहि" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च "देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्[2] । प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः" इति पुरोनुवाक्यां व्यतिषिच्य पठति ।

ततोऽध्वर्युरत्याक्रम्याश्राव्य प्रत्याश्राविते "वनस्पतये प्रेष्य[3]" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च - "होता यक्षद्वनस्पतिम्[4]" इत्यादिकं प्रैषमाह[5][6] ।

---

1- मा० वा० शु० य० वे० मा० सं० - 6/19.
2- एवमेव मैत्रायणीसंहितायाम् [4/13/7]. तै० ब्राह्मणे च [3/6/11] पाठः । अतोऽयमेव पाठश्चिन्त्यो भाति ।
3- का० श्रौ० सू० - 6/8/18.
4- मा० वा० शु० य० वे० मा० सं० - 21/46.
5- वस्तुतस्तु मैत्रायणीसंहितोक्तः [4/13/7]. तैत्तिरीयब्राह्मणोक्तश्च [3/6/11/3-4] प्रैषो निरूढपशुबन्धे प्रयोज्यः ।
6- का० श्रौ० सू० - 4/9.

ततो होता "वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान्[1] । वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः"[2] इति याज्यां यथाविधि पठति[3] ।

ततोऽध्वर्युस्ततः पृषदाज्यं जुहोति ।

ततोऽध्वर्युरुपभृतोऽवदानानि जुह्वामानीय "अग्नये स्विष्टकृते अनुब्रूहि" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च - "पिप्रीहि"[4] इति पुरोनुवाक्यां यथाविधि पठति । ततोऽध्वर्युराश्राव्य प्रत्याश्राविते "अग्नये स्विष्टकृते प्रेष्य" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च "होता यक्षदग्निं स्विष्टकृतम्"[5] इत्यादिकं प्रैष[6]माह[7] ।

ततो होता "अग्ने यदद्य"[8] इति याज्यां यथा-

---

1- अत्र काठकोक्त निविल्पाठे "विराट्" इति पाठोऽपि दृश्यते ।
2- का० गृ० सू० - 84/1, मै० सं० - 4/13/7, तै० ब्रा० - 3/6/12/1.
3- ,, - 4/6.
4- शा० ऋ० म० सं० - 10/2/1 [का० गृ० सू० - 4/6]
5- मा० वा० शु० य० वे० म० सं० - 21/47.
6- वस्तुतस्तु मैत्रायणीसंहितोक्तः [4/13/7], तै० ब्राह्मणोक्तः [3/6/12/2] प्रैषो नापि निष्टपाठमध्ये समुचितो दृश्यते ।
7- का० गृ० सू० - 4/6.
8- शा० ऋ० म० सं० - 6/15/14.

गच्छ स्वाहा"[1] इति मन्त्रेण एतेनैव बीजिकाग्नौ जुहोति ।

ततोऽध्वर्युराश्राव्य प्रत्याक्रान्ते पुनः "प्रेष्य" इति मैत्रावरुणमाह।

[2] मैत्रावरुणश्च "देवीर्द्वारः सङ्घाते विड्वीर्यामञ्छ्रिथिराद्-ध्रुवा देवहूतौ वत्स ईमेनास्तरुण आमिमीयात्कुमारो जाक्रमातो मैना अर्वा रेणुककाटः पृणग् वसुने वसुधेयस्य व्यन्तु यज"[2] इति होतारं प्रेष्यति ।

होता च "देवीर्द्वारो वसुने वसुधेयस्य व्यन्तु" इति याज्यां यथाविधि पठति[3] ।

ततोऽध्वर्युरग्नेरेकभागे जुहोति ।

प्रतिप्रस्थाता वानिष्ठस्य गुदाकलस्य खाने भागौ छित्वा "तद् अन्त-रिक्षाङ्गच्छस्वाहा"[4] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युराश्राव्य प्रत्याक्रान्ते पुनः "प्रेष्य" इति मैत्रावरुणमाह ।

[3] मैत्रावरुणश्च "देवी उषासानक्ताद्यास्मिन्यज्ञे प्रय-त्यह्वेतामपि नूनं दैवीर्विशः प्रायासिष्टां[6] सुप्रीते सुधिते वसुने वसु-धेयस्य वीतां यज"[5] इति होतारं प्रेष्यति ।

होता च "देवी उषासानक्ता वसुने वसुधेयस्य वीतां" इति याज्यां

---

1 - भा० वा० शु० य० वे० म० सं० - 6/21।
2&3- का०श्रौ०सू० - 6/10, मै०सं० - 4/13/8, तै०ब्रा० - 3/6/13/1।
4 - भा० वा० शु० य० वे० म० सं० - 6/21।
5 - का०श्रौ०सू० - 6/10, मै०सं० - 4/13/8, तै०ब्रा० - 3/6/13/1।

यथाविधि यजति ।

ततोऽध्वर्युरग्नेर्दक्षभागे जुहोति ।

प्रतिप्रस्थाता वनिष्ठुखण्डकस्य नवमं भागं छित्त्वा तं "देव ८ दिशाङ्गच्छ स्वाहा[1]" इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः आश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

(4) मैत्रावरुणश्च - "देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि ७ युयवदान्यावक्षद्वसु वार्याणि यजमानाय वसुने वसुधेयस्य वीतां यज[2]" इति होतारं प्रेष्यति ।

होता च - "देवी जोष्ट्री वसुने वसुधेयस्य वीताम्" इति च याज्यां यथाविधि यजति[3] ।

अथ ततोऽध्वर्युरग्नेर्दक्षभागे जुहोति ।

प्रतिप्रस्थाता वनिष्ठुखण्डकस्याष्टमं भागं छित्त्वा तं "मित्रावरुणौ[4] गच्छ स्वाहा" इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

---

1- मा० वा० शु० य० वे० मा० सं० - 6/21।
2- का०श्रौ०सू० - 4/10, मै०सं० - 4/13/8, तै०ब्रा० - 3/6/13/1।
3- ,, - 4/11।
4- मा० वा० शु० य० वे० मा० सं० - 6/21।

गच्छ स्वाहा"[1] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः समानीयाश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

[7] मैत्रावरुणश्च - "देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत् सरस्वती रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य व्यन्तु यज[1]" इति होतारं प्रेष्यति ।

होता च "देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु" इति याज्यां यथाविधि यजति[2] ।

ततोऽध्वर्युरग्नेरधभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदकाण्डस्य पञ्चमभागं छित्त्वा तं "द्यावापृथिवी गच्छ स्वाहा"[4] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

[8] मैत्रावरुणश्च - "देवो नराशंसस्त्रिशीर्षा षडक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु

---

1- मा० वा० शु० य० वे० म० सं० - 6/21.
2- का०श्रौ०सू० - 6/10, मै०सं० - 4/13/8, तै०ब्रा० - 3/6/13/1.
3- ,, - 6/11, ,, - 4/13/8, ,, - 3/6/14.
4- मा० वा० शु० य० वे० म० सं० - 6/21.

प्रयाजस्विष्टकृद्याज्यामिव "ऊं" इत्यन्ते योजयित्वा पठति ।

होता च प्राकृतमिवानुयाजस्विष्टकृद्याज्यां पठति[1] ।

ततोऽध्वर्युरग्नेः पश्चाद्भागे जुहोति ।

प्रतिप्रस्थाता पायोमिष्टं जुहावश्च "अग्निर्नेन्द्र वैश्वानरस्य गच्छ स्वाहा[2]" इति मन्त्रेण पूर्वञ्जुहोति । ततो "मनो मे हार्दि यच्छ[3]" इति मुखमुपस्पृशति[4] ।

ततोऽध्वर्युः पृषदाज्योत्तरत उपविश्य समानीय "देवेभ्यः स्वाहा[5]" इति प्राचीनाहुतिं जुहोति । ततो "दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा[6]" इति मन्त्रेण जुह्वा स्वरुं जुहोति ।

ततः स्रुवाघाराज्योपभृत उपरि पृषदाज्योपभृतौ निधाय वसाहोमहवनीं जुहूमुपरि निधायाध्वर्युर्जुहोति । "इन्द्राग्न्योर्वनस्पतेरनुब्रूहि" इति जुह्वाः, "इन्द्राग्नी जनपतिस्तम्मनुद्धन्तु" इति उपभृतौ व्युत्पत्ते प्रयोगविशेषः[7] । ततो जुहूः उपभृतौ वाभ्युक्ष परिष्यन्दनम् ।

ततोऽध्वर्युः "सूक्तवाकाय सूक्ता प्रेष्य" इति मैत्रावरुणमाह ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - का० श्रौ० सू० - 1/7।
2-3- मा० वा० शु० य० वे० मा० सं० - 6/21।
4 - का० श्रौ० सू० - 6/9/11।
5 - देवपाशिभ्यस्तात्पर्यमुक्तम् ।
6 - मा० वा० शु० य० वे० मा० सं० - 6/21।
7 - का० श्रौ० सू० - 6/9/13।

मैत्रावरुणश्च "अग्निमद्य[1]" इत्यादिकं सूक्तवाकप्रैषमाह[2]।

ततो होता "इदं द्यावापृथिवी[3]" इत्यादिकं सूक्तवाकं यथाविधि पठति[4]।

ततः प्रस्तरादानादि कुर्वन्त्यध्वर्युः। तत्र प्रस्तरस्य होमोपकृष्यानन्तरम्, होतुर्मैत्रावरुणस्य च सूक्तवाकपाठः, तदन्ते मैत्रावरुणस्य स्वकृतहोमजपकर्मणि, अग्निः शुचिः संस्रावहोमः, "घृताच्यस्थ धुर्यौ पात सुम्नास्थ सुम्ने मा धत्त" इत्युक्त्वैव विमोकः। ततो वेदलम्भः।

ततः पत्नीसंयाजार्थं स्रुचमाददानो होता ध्रुवां आददानोऽध्वर्युः आग्नीध्रमाददानोऽग्नीध्रश्चेति त्रयो गार्हपत्यं प्रति गच्छन्ति। तत्र यान्त्यष्टौ प्रवृत्तिम्। सोमयागे त्वष्टृयागे च जाघन्या ओपविष्टभागादेव चतुरवत्तदानम्। कुषियागे उत्तानाया जाघन्या अन्तःप्रदेशाच्चतुरवदानम्। गृहपतियागार्थं जाघनीं पर्यावर्त्यन्युब्जां कृत्वा तत औपविष्टभागादवदानम्। ततो जाघनीं पर्यावर्त्योत्तानां कृत्वा तस्या अन्तः छाया अवदानम्। नात्र पर्यन्तनम्। न वा पदस्याहुतिः। तथैवानुरूप दक्षिणाग्निहोमः।

---

1- मा०वा०शु०य०वे०मा०सं० - 21/57-61, वस्तुतस्तु मै० संहितोक्तः (6/13/9) प्रैषो निरूढपशुबन्धे युक्तः। (तै० ब्रा० - 3/6/15/1)

2- का० श्रौ० सू० - 6/11

3- " - 1/8

4- देवताकीर्तने यथायथमूहः कर्तव्यः।

सम्भारांश्च निधाय देवयजनं प्रतिगमनम् ।

देवयजनं प्राप्य यजमानोऽरणी तीर्थे चादाय पूर्वद्वारेण शालां प्रविश्याहवनीयस्य पूर्वद्वारे निधाय शालासम्भारांश्च "एतदगन्म"[1] इत्यादिकं मन्त्रं पठति । ततः सोमस्य शालायां स्वविदुपस्थाने स्थापनम् ।

ततोऽध्वर्युर्मथित्वा गार्हपत्यार्थं सम्भाराग्निं मथित्वा तमग्निं स्थापयति । ततो यथाविधि आहवनीयार्थं[2] दक्षिणाग्न्यर्थं च सम्भार "अग्निमद्धोतारमग्निरथ्योतिर्हरोमार्थम्" इति प्रयोगविधिं कृत्वा आहवनीय-दक्षिणाग्न्योर्विहरणं करोति ।

ततः सोमाय गार्हपत्ये हविष्यान्नमुपढौकयति[3] ।

ततोऽपराह्णे सपत्नीको यजमानो धेनुदुग्धातिरिक्तमिष्टं भोजनं कुर्यात्[4] ।

अत्र यजमानो यागोपकरणानि संरक्षणार्थं विश्वसनीयाय पुरुषाय समर्पयति, यथाकालं यथार्थं च विनियोगाय याचति च तत् ।

ततोऽभ्युदीक्षा । ततोऽपरे परिस्थृते उदकपूर्णकुम्भस्थापनम् । ऊर्ध्वक्षितस्य नापितस्य च सन्निधानम् । तत्र यजमानं प्राङ्मुखमुपवेश्योदङ्मुखोऽध्वर्युर्यजमानस्य दक्षिणहस्तस्याङ्गुष्ठादारभ्य नखान् निकृन्तति[5] । ततो वामहस्तस्याङ्गुष्ठादारभ्य नखान् निकृन्तति । तदन्तरमेव दक्षिणपादस्य, ततो

---

1 - मा० वा० शु० य० वे० म० सं० - 5/38.

2-5- का० श्रौ० सू० - 7/2/3; 7/2/2; 7/2/4, 22; 7/2/5.

वाचयत्य । ततो दक्षिणं गोदानं विकार्यं "इमा आपः"[1] इत्यादिना मन्त्रेणो-दपात्रोदकेनोनत्ति । ततः "ओषधे त्रायस्व"[2] इति मन्त्रेण दर्भकूर्चमन्तर्दधाति । ततः "स्वधिते मैनं हिंसीः"[3] इति मन्त्रेण तत्र क्षुरं निदधाति । ततस्तूष्णीं सदर्भकूर्चान् केशांश्छित्त्वोदपात्रमध्ये प्रक्षिपति । एवमुत्तरं गोदानं कुर्यात् । ततोऽध्वर्युर्नापिताय क्षुरं ददाति । नापितश्च यजमानस्य केशश्मश्रु वपति । ततो यजमानः स्थावरा अपो गत्वा "आपो अस्मान्"[4] इत्यादिना मन्त्रेण स्नात्वा "उदिदाभ्यः"[5] इत्यादिना मन्त्रेणोदकपूर्वार्धमुत्क्रामति । ततोऽहतं क्षौमं ब्राह्मणहस्ताभ्यां निष्पष्टं[6] वासोऽद्भिरभ्युक्ष्य "दीक्षातपसोः"[7] इत्यादिना मन्त्रेण वस्ते[8] । न नीविं कुरुते । एवं प्रतिप्रस्थाताऽपरस्मिन् परिवृते कुर्यात् । पत्न्या वपनं न वा क्रियते[9] ।

ततोऽध्वर्युरङ्गुलिगृहीतं यजमानं पूर्वद्वारेण शालायां प्रवेशयति । प्रति-प्रस्थाता चापरेण द्वारेण। अङ्गुलिगृहीतां पत्नीम् । ततस्तौ स्वस्वस्थाने उपविशतः ।

---

1-3- मा० वा० शु० य० वे० म० सं० - 4/1.

4-5- .. - 4/2.

6 - वस्त्रस्यापि ब्राह्मणहस्ताभ्यां शुद्धिरित्यभिप्राय इति देवयाज्ञिकः ।

7 - मा० वा० शु० ये० वे० म० सं० - 4/2

8- अनोत्तरीयस्याभिधानादभाव इति प्रतीयते, समाचारात्तूत्तरीयं भवती-त्यन्ये । पत्न्यास्तूत्तरीयं भवत्येव । द्वितीयस्य वस्त्रस्यानिर्देशाद्ग्रह-त्वेऽपि परिधानस्योत्तरकालं उत्तरीयं स्यात् ।

9 - का० श्रौ० सू० - 7/3/21.

प्रतिप्रस्थाता चापरस्मिन् परिश्रिते[1] पत्नीमभ्यञ्जनादि कारयित्वा-परेण शालाद्वारेण प्रवेशयति[2] ।

ततः औद्ग्रभणहोमः । तत्राध्वर्युराहवनीयसमीप उपविश्य सम्बन्धना-थाय स्थाल्या आज्यमादाय स्रुवेण "आकूत्यै प्रयुजेऽग्नये स्वाहा"[3] इति मन्त्रेण हुत्वा "मेधायै मनसेऽग्नये स्वाहा"[4] इति मन्त्रेण द्वितीयामाहुतिं हुत्वा "दीक्षायै तपसेऽग्नये स्वाहा"[5] इति मन्त्रं जपति । ततः "सरस्वत्यै पूष्णेऽग्नये स्वाहा"[6] इति तृतीयामाहुतिं हुत्वा "आपो देवीः"[7] इत्यादिना स्वाहान्तेन मन्त्रेण चतुर्थीं जुहोति । ततो होमार्थं सम्पूर्णं जुह्वामासिच्य स्थाल्याः स्रुवेणाज्यं गृहीत्वा जुह्वामासिच्य पुनः स्रुवेण स्थाल्या आज्यं तथैव गृहीत्वा जुह्वामासिच्य जुह्वा उपर्युत्तानं स्रुवं धारयित्वा स्थालीस्थं आज्यं निनीय स्रुवं पूरयित्वा तदपि आज्यं स्रुवेणैव जुह्वां निनीय "विश्वो देवस्य"[8] इत्यादिना स्वाहान्तेन मन्त्रेण जुहोति । अथवा जुहूमेव पूर्णां कृत्वा पूर्वाश्चतस्र आहुतीर्हुत्वा पञ्चमीं जुहोति[9] ।

ततो दक्षिणविहारे यजमानं वीरहोम-प्रणीताविमोक-राजन्यभागादि-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 – "अपरस्मिन् परिश्रिते" इति सूत्रपाठः [का०श्रौ०सू० – 7/3/11]. देवयाज्ञिकभाष्ये नास्ति, पद्धतिरिति मुद्रितपुस्तके तु दृश्यते. [ "एतानि कर्माणि प्रतिप्रस्थातापरस्मिन् परिश्रिते कुर्यात् पत्न्याः करोति" इति वेदार्थदीपिकायाम् [12/7].

2 – गार्हपत्यमग्निमपरेण वा पत्न्याः प्रवेशनम् [का०श्रौ०सू० 7/3/12]

3-8 – मा० वा० शु० य० वे० म० सं० – 4/6, 4/7.

9 – का०श्रौ०सू० – 7/3/16[ श०प०ब्रा० – 3/1/4/22]

[दीक्षितनियमाः]

औदुम्बरीमारभ्य प्रभृति वाग्यतौ कृत्वा यजमानः पत्नी चावतिष्ठेते। अस्तमितेऽध्वर्युः "दीक्षित वाचं विसृजस्व", "पत्नि, वाचं विसृजस्व" इति पृथक् पृथक् विराम ।

यजमानोऽग्निमभ्यावृत्य "व्रत॰ कृणुतव्रत॰कृणुतव्रत॰ कृणुताग्नि- र्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः"[1] इत्याह ।

ततो यजमानो "गावो धुक्ष" इत्याह।

गावो दोहयित्वाऽध्वर्युर्दीक्षितव्रतं[2] गार्हपत्ये श्रपयति, पत्नीव्रतं[3] च दक्षिणाग्नौ । ततस्ते व्रते पृथक् पृथगेव शिक्ययोः कुम्भे आपयति ।

कुम्भे यजमानः कृष्णविषाण्या "[illegible]"[4] इति मन्त्रेण तोयमादत्ते । "अपो कुन्थामि"[5] इत्यादिकं मन्त्रेण पठित्वा पिबति । तोया- वशिष्टं "पृथिव्या सम्पृच"[6] इत्यादिना निनयति ।

यजमान आहवनीयस्य दक्षिणतः प्राक्शिरा अग्निकुण्डे एव "अग्ने त्वं सुजागृहि"[7] वयमिति + [illegible] इत्यादिकं मन्त्रं पठित्वा शेते ।

अपराह्णेऽध्वर्युर्दीक्षिताय पत्न्यै च व्रतं ददाति[8] । ऋत्विजो व्रीहि-

---

1 - मा० वा० शु० य० वे० मा० सं० - 4/11.

2 - अग्निहोत्रयवागूः, वैश्वस्याग्नि विकारा [का०श्रौ०सू० 7/4/25]

3 - पत्नीव्रतं प्रतिप्रस्थाता श्रपयति, आपयति, ददाति चेति सम्प्रदाय इति देवयाज्ञिकपद्धतौ ।

4-7- मा० वा० शु० य० वे० मा० सं० - 4/13, 14.

8 - का०श्रौ०सू० - 7/4/26 [एवमेव प्रातर्होमापराह्णे ददाति]।

पयो ह्योदनापूपादिकमध्वर्यवे[1] ददाति । दीक्षिताय व्रतमपि कांस्यपात्रेऽमृन्मये पात्रे वा दीक्षितपत्न्यै च ददाति ।

दीक्षितश्च "देवीं धियम्"[2] इत्यादिना मन्त्रेण व्रतार्थम् उपस्पृशति । "ये देवाः"[3] इत्यादिना मन्त्रेण व्रतयति । अन्ते आचामो "श्वात्राः पीताः"[4] इत्यादिना मन्त्रेण नाभिमालभते ।

पत्नी तत्पात्रे तूष्णीं व्रतयति ।

ततो यजमानो यदि स्वप्स्यन् भवति तर्हि तूष्णीं स्वपिति ।

यदा कदापि विबुद्धस्वप्नो यजमानस्तदाध्वर्युः "पुनर्मनः"[5] इत्यादिकं मन्त्रं वाचयति ।

ततोऽनुदितेऽध्वर्युः "दीक्षित वाचं यच्छ" इति निरुक्त्वा "पत्नि वाचं यच्छ" इति च निराह । उदिते "दीक्षित वाचं विसृजस्व" इति निरुक्त्वा "पत्नि वाचं विसृजस्व" इति च निराह ।

ततो यजमानोऽग्निमभ्यावृत्य पूर्वोक्तप्रकारेण वाग्यमनं कुरुते ।

दीक्षितः कुव्रात्रत्वा वा आहूय "त्वमग्ने व्रतपाः"[6] इत्यादिकं मन्त्रमाह ।

यदि दीक्षिताय कश्चिद् हिरण्यवस्त्रादिकमभिहरति[7] तदाध्वर्यु-

---

1 - का० श्रौ० सू० - 7/4/21-23.

2-6 - मा० वा० शु० य० वे० म० सं० - 4/4,11, 12, 15, 16.

7 - शत० प० ब्रा० - 3/2/3/25.

दीक्षितं "हिरण्यगर्भः" इत्यादिमन्त्रेण पुत्रादिकं गमयित्वा "दास्येहं" इत्यादिकं मन्त्रं वाचयति । बालम्बनस्तम्भोऽस्मिन्नयम् ।

दीक्षितः शूद्रस्पर्श-शूद्रसम्भाषण-प्रत्युत्थानाभिवादनोदकाभ्यवाय-अङ्गारावस्कन्दं वर्जयति । कृष्णां वाचं वदति, संस्कृतां वाचं वदति, अन्तरीं वाचं वदति, सत्यां वाचं वदति । नखकेशौ: शालायामास्ते, स्वापं वर्जयति च । सुप्यात्तु वेद्यामास्ते । नित्यदन्तधावनस्नानाभ्यञ्जनोपानदग्निहोत्रदर्शपूर्णमासहोमादिदेवदानादिकं च किमपि न कुर्यात् प्रागवभृथात् ।

एतेषां नियमानामतिक्रमेऽपि प्रायश्चित्तं तु नैव क्रियते । अथवा दीक्षितः "पत्नि उपह्वयस्व" इति पत्न्या उपह्वं प्रार्थयते । पत्नी च "उपहूतः" इति ब्रवीति ।। इति प्रथमदिनकृत्यम् ।।

[प्रायणीयेष्टिः]

दीक्षान्ते[2] प्रायणीयेष्टिर्भवति । तत्र कुशानास्तरणानुकल्पनम्, इध्म उपकल्पनम्, प्रणीताप्रणयनम्, आज्यनिर्वापश्चैव परिस्तरणम् । पात्रासादने आज्यस्थाने वसाधानी, उपवेषान्तर्धानकपालपात्रकर्मापरिकल्पनार्थमाज्यभागः, अष्टाकपालस्य स्थाने चरुः, श्रुतावदानस्थाने मेक्षणम् इति विशेषः । स्रुचोपरि स्थालीकपालपात्रस्य निधानम् । प्रणीतादिषु अदितये जुष्टम् इत्यादिकः प्रयोगः । "पथ्या-स्वस्त्या अग्ने" इति निर्वापनानुवाक्याध्ये प्रयोगविशेषः । आज्यभागानन्तरं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० श्रौ० सू० ब० वे० मा० सं० - 4/16.
2- यावत्यो दीक्षा भवन्ति तावतीनां सर्वासामन्ते इत्यर्थः ।

प्रैष-भागधेय-भागप्रदानान्तकम् । सोमायाः प्रमार्जितायाः वा वत्सायाः मेषस्य ऊर्णां चोदनीयार्थं सुचं स्थापनम् । इति प्रायणीयेष्टिः सोमक्रयो-पक्रमश्च ।

[सोमक्रयः]

प्रायणीयचरुस्थालीस्थापनानन्तरमध्वर्युः पदसोमार्थमाज्यं संस्कृत्य जुह्वां चतुर्गृहीतं गृहीत्वा "अन्वारभस्व यजमान" इति यजमानमाह। ततः शालाया द्वाराभिमुखमागच्छतः । ततोऽध्वर्युयजमानौ शालायाः पूर्वद्वारेण निष्क्रान्तः । द्वाराद् दक्षिणस्यां दिशि अवतिष्ठमानां सोमक्रयणीं एकहायनीं वत्सतरीं प्रतिगच्छतः । तत्राध्वर्युः "चिदसि"[1] इत्यादिकेन पुनरेतेन मन्त्रेण सोमक्रयणीमभिमन्त्रयते ।

ततः प्रतिष्ठमानामुदीचीं दिशं प्रतिनीयमानां सोमक्रयणी-मध्वर्युयजमानौ "वस्व्यसि"[2] इत्यादिना मन्त्रेणानुगच्छतः । सोमक्रयण्या दक्षिण-पूर्वपादस्य षट् पदान्यतिक्रम्य सप्तमं पदं परितो ब्रह्मादय उपविशन्ति । तत्र ब्रह्मयजमानौ दक्षिणतः, अध्वर्युः पश्चिमतः, प्रतिप्रस्थाता नेष्टा चोत्तरतः, दक्षिणापरस्यां दिशि पत्नी चोपविशन्ति ।

ततोऽध्वर्युः सप्तमे सोमक्रयणीपदे हिरण्यं निधाय सबन्धनमुपरि-स्तीर्य शालायां ध्रुवचतुर्गृहीत माज्यं हस्ते ध्रियमाणं तत् "अदित्यास्त्वा"[3]

- - - - - - - - - - - - - - - - - - - - - - - - -

1 - मा० वा० शु० य० वे० मा० सं० - 4/19, 20.

2-3 - ,, - 4/21, 4/22.

प्रति शकटं तत्र गच्छन्ति । गत्वा प्राग्वंशेऽध्वर्युः "एष ते गायत्रो भागः"[1] इत्यादिकं मन्त्रं यजमानं वाचयति । तत्र सोमक्रयिणं प्राप्य दक्षिणतः शकटं प्राग्ग्रीवं वैश्यश्च अध्वर्युयजमानौ सोमस्य दक्षिणत उपविशतः । अध्वर्युश्च परिश्रितः प्राङ्मुख उपविश्य "आस्माकोऽसि"[2] इत्यादिकेन मन्त्रेण सोममाकर्षति[3] । अतः परं सोमविक्रयी सोमं पर्याणो नैव अक्ष्यति । ततः सोमक्रये परिसृतानां तृणकाष्ठादीनामपनयनं क्रियते । ततोऽध्वर्युः सोमोपनहनं त्रिगुणं चतुर्गुणं वा प्राग्दशमुदग्दशं वा कृत्वा चर्म उपर्येव स्तृणाति । ततस्तस्मिन् "अभि त्यं"[4] इत्यादिना मन्त्रेण सर्वाभिरङ्गुलिभिः प्रथमवारं सोमं मिमीते, ततस्तेनैव मन्त्रेणाङ्गुष्ठरहिताभिश्चतसृभिरङ्गुलिभिर्द्वितीयवारम्, ततस्तेनैव मन्त्रेणाङ्गुष्ठतर्जनीरहिताभिस्तिसृभिरङ्गुलिभिस्तृतीयवारम्, ततस्तेनैव मन्त्रेण अनामिकाकनिष्ठाभ्यां चतुर्थवारम्, ततस्तेनैव मन्त्रेण कनिष्ठया पञ्चमवारम्, ततस्तेनैव मन्त्रेण पुनः कनिष्ठया षष्ठवारम्, ततस्तेनैव मन्त्रेण कनिष्ठानामिकाभ्यां सप्तमवारम्, ततस्तेनैव मन्त्रेण कनिष्ठानामिकामध्यमाभिरष्टमवारम्, ततस्तेनैव मन्त्रेण कनिष्ठानामिकामध्यमातर्जनीभिर्नवमवारम्, ततस्तेनैव मन्त्रेण सर्वाभिरङ्गुलिभिर्दशमवारम् । ततोऽवशिष्टं सर्वं सोममञ्जलिना गृहित्वा सोमस्योपर्येवाकरोति[5] । ततः सर्वतः सोमोपनहनस्यान्तान् संगृह्योष्णीषेण "प्रजाभ्यस्त्वा [illegible]"[6]

---

1-2 - मा० वा० शु० य० वे० मा० सं० - 4/24, 25.
3 - यजमान आकर्षति इति हरिस्वामिन इति देवयाज्ञिकपद्धतौ ।
4 - मा० वा० शु० य० वे० मा० सं० - 4/25.
5 - का० श्रौ० सू० - 7/7/10-16.
6 - मा० वा० शु० य० वे० मा० सं० - 4/25.

इत्यादिना मन्त्रेण मिनाति । ततोऽङ्गुष्ठा मध्ये विवर्तं करोति । ततश्च सोमं सोमविक्रयिणो पृच्छति ।

ततोऽध्वर्युः - "सोमविक्रयिन्, क्रय्यस्ते सोमो राजा3 ?" इति[1] पृच्छति।

ततः सोमविक्रयी - "क्रय्यः" इति प्रत्याह ।

ततोऽध्वर्युः - "तं वै ते क्रीणानि ?" इति पृच्छति ।

ततः सोमविक्रयी - "क्रीणीहि" इति प्रत्याह ।

[1] ततोऽध्वर्युः - "कलया ते क्रीणानि ?" इति पृच्छति ।

ततः सोमविक्रयी - "भूयो वा अतः सोमो राजार्हति" इत्याह ।

[2] ततोऽध्वर्युः - "भूय एवातः सोमो राजार्हति, महांस्त्वेव गोर्महिमा, गोर्वै प्रतिधुक्तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्, शफेन ते क्रीणानि ?" इति पृच्छति ।

ततः सोमविक्रयी पुनः - "भूयो वा अतः सोमो राजार्हति" इत्याह।

[3] ततोऽध्वर्युः पुनः - "भूय एवातः सोमो राजार्हति, महांस्त्वेव गोर्महिमा, गोर्वै प्रतिधुक् - - - पदा ते क्रीणानि ?" इति पृच्छति ।

ततः सोमविक्रयी पुनः - "भूयो वा अतः सोमो राजार्हति" इत्याह ।

[4] ततोऽध्वर्युः पुनः - "भूय एवातः सोमो राजार्हति, महांस्त्वेव गोर्महिमा, गोर्वै प्रतिधुक् - - - अर्धेन ते क्रीणानि ?" इति पृच्छति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० श० प० ब्रा० - 3/3/3/1; का० श्रौ० सू० - 7/8/2.

पत्नी चोष्णीषं वासो वा विप्लुत्य शिर उद्घाटयति । ततोऽध्वर्युः सोमविक्रयिणः सकाशाद् बलाद् हिरण्यमाच्छिनत्ति, पृष्ठा वत्साकाण्डेन तं घ्नन्ति, नैव वा घ्नन्ति।

ततो यजमानो हस्तेन सोमपोटलिकां गृह्णाति । गृहीतसोमं यजमान मध्वर्युः "परिमाग्ने[1]" इत्यादिकं मन्त्रं वाचयति । ततो यजमानः शिरसि सम्मुखं दक्षिणपाणिं निधाय तदुपरि सोमं स्थापयित्वा "उदायुषा स्वायुषोदस्थाममृता-ङ्अनु[2]" इति मन्त्रेणोत्तिष्ठति । ततो यजमानः "प्रतिपन्थाम्[3]" इत्यादिकेन मन्त्रेण दक्षिणतः स्थापितं शकटं प्रति गच्छति । ततोऽध्वर्युस्तस्मिन्नेव शकटे कृष्णाजिनं प्राग्ग्रीवमुत्तरलोमकम् "अदित्यास्त्वगसि[4]" इति मन्त्रेणास्तृणाति । तस्मिन्नेव कृष्णाजिने "अदित्यै सद आसीद[5]" इति मन्त्रेण सोमं निदधाति । ततः "सोममाल-भस्व" इति यजमानमाह । यजमानश्च सोममालभते । आलब्धसोमं यजमानम् "अस्तभ्नाद्द्याम्[6]" इत्यादिकं मन्त्रं वाचयति । ततोऽध्वर्युः "वनेषु व्यन्तरिक्षं ततान[7]" इत्यादिकेन मन्त्रेण सोमपर्याणहनेन सोमं परिहृत्य यजमानानुकृष्णाजिन-ग्रीवोऽन्यतरद्वा कृष्णाजिनं शकटस्य प्राग्भागे कीलकमारोप्य तत्र "सूर्यस्य चक्षुः[8]" इत्यादिकेन मन्त्रेण आसजति[9] ।

ततोऽध्वर्यु "उस्रावेतम्[10]" इत्यादिना मन्त्रेण दक्षिणमनड्वाहमनसि युनक्ति।

- - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वपृष्ठस्याग्रे . . . .

कृत्वापि तत्र द्रव्याणि पलेन मन्त्रेण सोमविक्रयिणो निर्द्धयति इति देवयाज्ञिको मन्यते ।

1-8 - मा० वा० शु० य० वे० मा० सं० - 4/28, 29, 30, 31, 32.

9 - द्वितीयकृष्णाजिनस्याभावे प्रथमस्यैव कृष्णाजिनस्य ग्रीवां छित्त्वा तथासजति।

10 - मा० वा० शु० य० वे० मा० सं० - 4/33.

होता चानुयन् अन्तरेण वर्त्मनी तिष्ठन् "[illegible]"[1] इत्यादिकमनूच्य "गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः"[2] इत्यन्तं विरमति ।

ततोऽध्वर्युः[3] शालां प्रतिगच्छन्नेव "सुब्रह्मण्योँ[4] सुब्रह्मण्योँ सुब्रह्मण्योमिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वःसुत्या-मागच्छ मघवन् देवा ब्रह्माण आगच्छतागच्छतागच्छत"[5] इति आह ।

ततः शालायाः पुरस्तात् प्रविश्य धाताग्नीषोमीयं पशुं अंगुलित-नानीय शकटसमीपे तिष्ठति ।

ततः शालासमीपे प्राप्य शकटमध्या पाठध्वर्युः "अग्नीषोमीयमनु-मालभस्व" इति यजमानमाह[6] । ततो यजमानस्तं पशुमालभते । कुशपवालम्भं । यजमानमध्वर्युः "नमो मित्रस्य"[7] इत्यादिकं मन्त्रं वाचयति[8] ।

ततोऽध्वर्युः शालायाः पुरस्तात् समीपे प्रागग्निकुण्डीयं वा शकटं स्था-पयित्वोत्तम्भनं दत्त्वान्स ईषाया अग्रभागं "वरुणस्योत्तम्भनमसि"[9] इति मन्त्रेणोप-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2- शा० ऋ० वे० म० सं० - 8/42/3, 5/65/2, 1/91/9-12.
3 - सुब्रह्मण्य एव सुब्रह्मण्यामाह्वयतीति परिभाषितम् इति देवयाज्ञिकः ।
4 - का० श्रौ० सू० - 7/9/17 (लाट्यायनश्रौतसूत्रे तु अन्यःप्रकारो दृश्यते 1/2/20)
5 - लाट्यायनश्रौतसूत्रे - 1/3/1.
6 - का० श्रौ० सू० - 7/9/19.
7 - मा० वा० शु० य० वे० म० सं० - 4/35.
8 - अग्नीषोमीयपश्वालम्भनिमित्ते केवलं मन्त्रपाठं कार्यम् ।
9 - मा० वा० शु० य० वे० म० सं० - 4/36.

ततः सन्दराभ्पूर्णं विनेय प्राशित्रभागः, इडाभक्षणम्, ब्रह्मयजमान-भक्षणभागाः, कुम्भिकायाम्, प्रस्तर-परिधि-विधृति-वेदिकाकुम्भदर्भोपवेषीयादि हरणम्, पत्नीसंयाजादिश्च ।

[तानूनप्त्रम्]

ततोऽध्वर्युर्यजमानप्रमुदानामर्थं वेदौ निदधाति । तस्मिन् ब्रह्मा प्रथममाज्यं स्वयं "आपतये त्वा"[1] इत्यादिना मन्त्रेण स्रुवं गृह्णाति । ततस्तूष्णीं आज्याः आज्यं स्रुवेण निगृह्णाति । यजमानोऽपि ऋत्विजो यथाक्रमेणाज्यं[2] गृह्णन्ति[3] । उद्गाता तु यथाविधि जपादिपूर्वकमेव करोति । ततो यजमानोऽप्येवमेवाज्यं गृह्णाति[4] इति केचित् । ततोऽध्वर्युस्तद् घृतानं दक्षिणस्यां वेदिश्रोणौ निधाय तत्र हिरण्यमवदधाति । सर्वे ऋत्विजः यजमाना हिरण्यं तद् घृतं "अनाधृष्टमसि"[5] इत्यादिना मन्त्रेण समवमृशन्ति । ततोऽध्वर्युस्तद् घृतभाजनस्थमाज्यं किञ्चित् कम्पयित्वामुष्मिन् पात्रमपिधाय स्रुचं आपयति[6] ।

---

1- मा० वा० शु० य० वे० मा० सं० - 5/5।
[मा० श० प० ब्रा० - 3/4/2/9]

2- यथाक्रमः का० श्रौ० सू० [7/1/7] प्रोक्तः ।

3- मा० श० प० ब्रा० - 3/4/2/9।

4- यजमानस्य ग्रहणं शाखान्तरेऽपि प्रसिद्धम् ।

5- मा० वा० शु० य० वे० मा० सं० - 5/5 [वेदान्तरे पाठभेदः]

6- "अपराह्णे क्रयिणं दीक्षिताय प्रयच्छति" [का०श्रौ०सू० - 8/2/2] इत्येतस्योपयोगः ।

[अवान्तरदीक्षा]

ततो यजमानः "अग्ने व्रतपाः"[1] इत्यादिना मन्त्रेणाहवनीये समिध-माधाय मदन्तीरुपस्पृश्य मुष्टिमेखले गाढतरं कुरुते ।

पत्नी च तूष्णीं गार्हपत्ये समिधमाधाय तथैव मदन्तीरुपस्पृश्य मुष्टिमेखले गाढतरं कुरुते ।

[सोमाप्यायनम्]

ततो ब्रह्मोद्गातृहोत्रध्वर्युप्रभृतयो ऋत्विजो यजमानश्चैता अनामिकायां हिरण्यं कृत्वा मदन्तीरुपस्पृश्याहवनीयं पूर्वेण गत्वा क्रमेण सोमं स्पृष्ट्वा "अंशुरंशुष्टे देव"[2] इत्यादिना मन्त्रेण[3] सोममाप्याययन्ते ।

[निह्नवः]

ततः प्रत्येकं मदन्तीरुपस्पृश्य ब्रह्मादिक्रमेण "एष्टा रायः"[4] इत्यादिना मन्त्रेण प्रस्तरे वामं हस्तं न्युब्जं दक्षिणमुत्तानं कृत्वा निह्नुवन्ति ।

तत आतिथ्येष्टिशेषभूतं भागपरिरक्षणादिकम् । तथा हि— भागपरिरक्षणम्, अग्नेरध्वर्युभागोऽग्नेराग्नीध्रभागो । ध्रुवे "विष्णोरस्यौजसि" इत्यादिको यथा-

---

1-2- मा० वा० शु० य० वे० म० सं० - 5/6, 7.
3 - आप्यायनमन्त्रे प्रतिवेदं स्वतः पाठभेदो दृश्यते ।
4 - मा० वा० शु० य० वे० म० सं० - 5/7.

पिष्टं संयवनोदकं च, रोहिणहवनी शंकुः कूर्चः, उदुम्बरसमिधः, कृष्णाजिनं, इतरौ महावीरौ, अनुपात्रे वेत्यासादयन्ति ।

ततोऽध्वर्युर्यथाविधि पवित्रच्छेदनम्, अग्निहोत्रहवण्यां मदन्तीनामानयनम्, उत्पवनम्, उदिङ्गनं प्रोक्षणं च करोति ।

ततः प्रोक्षणीसमुपोत्थाय "ब्रह्मन्प्रचरिष्यामः" इति ब्रह्माणमाह, "होतरभिष्टुहि" इति होतारम्, "प्रस्तोतः सामानि गाय" इति प्रस्तोतारम् ।

ततो ब्रह्मा प्रणौति, होताभिष्टौति[1] ।

अध्वर्युरुपविश्यैव महावीरं "यमाय त्वा प्रोक्षामि, मखाय त्वा प्रोक्षामि, सूर्यस्य त्वा तपसे प्रोक्षामि[2]" इति प्रतिवाक्यं प्रोक्षति । ततस्तूष्णीं परिघर्म्यस्यासादितपात्रस्य प्रोक्षणं करोति ।

पात्रप्रोक्षणानन्तरमेव प्रतिप्रस्थाता स्थूणां मधुं च शालायाः पूर्वद्वारेण निष्क्रम्य शालाया दक्षिणतो निदधाति । तत्र गोबन्धनार्थं स्थूणां दक्षिणतो

---

1- "ब्रह्म जज्ञानम्" इत्यादिभिः [आश्व० श्रौ० सू० 5/9/11] अभिष्टौति यथाविधि । तत्र निधीयमाने "अञ्जन्ति यम्" इत्याद्या, महावीरे रुक्मे ताप्यमाने "संसीदस्व" इत्याद्या, अङ्गारेषूपोह्यमानेषु "भवा नो अग्ने" इत्याद्याभिरिति प्रकारेण यथाविधिरभिष्टौति [आ० श्रौ० सू० 5/9/5-27] महावीरपात्रेषु ताप्यमानेषु पूर्वया द्वारा शालां प्रपद्य उत्तरेणाहवनीयं रज्जौ पात्राणि च गत्वा पश्चादुपविश्य होताभिष्टौति [10। अग्निः]

2- मा० वा० शु० य० वे० मा० सं० - 37/10.

ततोऽध्वर्युः "शुक्रङ्गाय" इति प्रस्तोतारं प्रेष्यति[1] । पत्नी उष्णीषेण अभिलिपितं शिरः प्रोर्णुते । होता "संसीदस्व" इत्यादिकायामृचि पठ्यमानायामध्वर्युर्मुञ्जप्रलवान् त्रिगुणानादीप्य प्रतिदिशं खरे स्थापयति । तत आज्यं संस्कृत्य महावीरे कृत्वा "अर्चिरसि"[2] इत्यादिना मन्त्रेण महावीरं खरमध्ये स्थापयति । ततोऽध्वर्युरेव महावीरस्योपरि प्रादेशं धारयन् यजमानम् "अनाधृष्टा"[3] इत्यादिकं मन्त्रं वाचयति ।

ततो यजमानो महावीरस्य दक्षिणतो "विश्वाभ्यो मा"[4] इत्यादिकेन मन्त्रेणोत्तानं पाणिं निदधाति । तत महावीरस्योत्तरतो भूमौ "मनोरश्वासि"[5] इति मन्त्रेण प्रादेशं निदधाति ।

ततोऽध्वर्युरिष्टिभ्यां गार्हपत्यस्य भस्मना महावीरं सर्वतः परिकिरति, गार्हपत्याङ्गारैश्च परिकिरति । ततस्पोदाभिर्वैकङ्कतकाष्ठैर्महावीरं परिवेष्टयति । तत्र प्रथमं "स्वाहा मरुद्भिः परिश्रीयस्व"[6] इति मन्त्रेण तेषु एकं महावीरस्य दक्षिणत एकमुत्तरत इति प्राग्ग्रौ द्वौ शकलौ निदधाति । ततस्तूष्णीमेव एकं महावीरस्य पश्चिमत एकं पूर्वत इति द्वौ उदग्ग्रौ शकलौ निदधाति, ततो महावीरस्य दक्षिणत एकमुत्तरतश्चैकमिति प्राग्ग्रौ द्वौ शकलौ निदधाति, ततः पुनः पूर्ववद् द्वावुदग्ग्रौ, ततः पुनः पूर्ववत्तूष्णीमेव द्वौ प्राग्ग्रौ, ततः परिशिष्टमेकं महावीरस्य दक्षिणतः प्राग्ग्रं निदधाति । ततोऽध्वर्युरेव पूर्ववर्तमानेन "दिव स

---

1- प्रैषानन्तरं प्रस्तोता शुक्रसाम मधु गायति (बा० बा० - 1/2/6 =
बा० गा० - 3/2/7)

2-6- मा० श्रा० शु० य० वे० मा० सं० - 37/11, 12, 13.

पत्नी "त्वष्टृमन्तः"[1] इत्यादिकं मन्त्रं वाचयति ।

ततः प्रस्तोता साम्नो निधने गीयमानेऽध्वर्युः "अदः केतुना"[2] इत्यादिकेन मन्त्रेण दक्षिणतः स्थापितं रौहिणपुरोडाशमाहवनीये जुहोति ।

ततोऽध्वर्युः "देवस्य त्वा"[3] इत्यादिकेन मन्त्रेण रज्जुसन्दानं गृह्णाति । ततः पिन्वनं गृह्णाति ।

प्रतिप्रस्थातापि तूष्णीं रज्जुसन्दानं पिन्वनं चादत्ते ।

ततो दोहनाय गच्छन्मार्गेण गार्हपत्यं प्राप्य: प्रतिप्रस्थात्रानुगम्यमानोऽध्वर्युः "इड एह्यदित एहि सरस्वत्येहि"[4] इति गामाह्वयति । ततो गोव्यापारिकानाम्ना "असौ एहि" इति त्रिरुच्चैराह्वयति । ततो "धेनु॰गाय" इति प्रस्तोतारं प्रेष्यति[5] ।

ततोऽध्वर्युप्रतिप्रस्थातारौ दक्षिणेन द्वारेण निष्क्रामतः ।

ततोऽध्वर्युः समीपे गत्वा "अदित्यै रास्नासीन्द्राण्या उष्णीषः"[6] इति मन्त्रेण गां पाशेन प्रतिमुच्य स्थूणायां बध्नाति । ततः "पूषासि"[7] इति वत्सम् उत्सृजति । ततो गोपश्चात्पादौ सन्दानेन बद्ध्वा "उस्राय दीक्ष्व"[8] इति वत्सं स्तन्यं पिबन्तमपनयति । ततः "अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व"[9] इति मन्त्रेण पिन्वने दोग्धि । कांस्यपात्रे दुग्धं

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-4- मा० वा० शु० य० वे० म० सं० - 37/20, 21, 38/1, 2।
5 - श० ब्रा० - 5/2/4/2, वा० गा० - 3/1/7।
6-9- मा० वा० शु० य० वे० म० सं० - 38/3, 4।

दुग्ध्वा दोहनकाले पिन्वने स्तनेभ्यः पतितान् दुग्धबिन्दून् 'स्वाहेन्द्रवत्स्वाहे-न्द्रवत्स्वाहेन्द्रवत्'[1] इति मन्त्रेणाभिमन्त्रयते । ततो 'यस्ते स्तनः'[2] इत्यादिना मन्त्रेण गोः स्तनानालभते ।

प्रतिप्रस्थाता च तूष्णीमेव गोदोहनसमकालमेवाजां पाशेन प्रतिमुच्य मध्ये कृत्वा वत्समुत्सृज्याजापयस्पादौ इन्द्राय वत्समनीय पिन्वने पात्रद्वये दुग्ध्वा स्तनावालभते ।

ततोऽध्वर्युः 'पयो गाय' इति प्रस्तोतारं प्रेष्यति[3] ।

तत 'उत्तिष्ठ ब्रह्मणस्पते'[4] इति होत्रोच्यमाने गोः समीपादध्वर्युरु-त्तिष्ठति । अजासमीपात् प्रतिप्रस्थाता च । तत 'उपद्रव पयसा'[5] इति होत्रो-च्यमानेऽध्वर्युः 'उर्वन्तरिक्षमन्वेमि'[6] इति मन्त्रेण यथागतं शालां प्रतिगच्छति । प्रतिप्रस्थाताऽप्येवं च तूष्णीम् ।

ततोऽध्वर्युर्दुग्धमग्नीधे दत्त्वा 'गायत्रं छन्दोऽसि'[7] इति 'त्रैष्टुभं छन्दोऽसि'[8] इति च मन्त्राभ्यां क्रमेण परीशासौ गृह्णाति । प्रतिप्रस्थाता चा-ग्नीधे दुग्धं दत्त्वा तूष्णीं मुञ्जवेदमादत्ते ।

ततोऽध्वर्युः - 'बहिरिन्द्रको गाय' इति प्रस्तोतारं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2- मा० वा० शु० य० वे० म० सं० - 38/4, 5.
3 - ऐ० ब्रा० - 1/1/8/5, आ० गा० - 3/1/8.
4 - शा० ऋ० म० सं० - 1/40/1.
5 - शाङ्० श्रौ० सू० - 5/10/10.
6-8 - मा० वा० शु० य० वे० म० सं० - 38/5, 6.

प्रेक्षते[1]। ततो महावीरं परीशासाभ्यां "द्यावापृथिवीभ्यां त्वा परिगृह्णामि[2]" इति मन्त्रेण परिगृह्य उद्वासयति। प्रतिप्रस्थाता च मुञ्जवेदेन महावीरकुक्ष-कुक्ष्योपयमन्या ध्रुवा "अन्तरिक्षेणोपयच्छामि[3]" इति मन्त्रेणाधस्तादुपगृह्णाति।

ततोऽध्वर्युरुपयता महावीरमवक्षिप्य शान्तायां ज्वालायाम् "इन्द्राश्विना[4]" इत्यादिना मन्त्रेण गोः पयोऽवनयति महावीरे। ततः "प्रैतु ब्रह्मणस्पतिः[5]" इत्यादिकयार्चा होता यजमानाध्वर्युप्रतिप्रस्थातारः आहवनीयं प्रति गच्छन्तु "समुद्राय त्वा[6]" इत्यादिकानि "पितृभ्यः स्वाहा[7]" इत्यन्तानि वातनामानि जपति। तत आहवनीयसमीपं प्राप्य "स्वाहा धर्माय[8]" इति मन्त्रेणोपयमन्यां ध्रुवं अवस्थापयोच्छकाले घर्माग्निःसृव परितः घृतमुपयमन्या ध्रुवेण घर्मच्छये आसिञ्चति। ततः "स्वाहा धर्मः पित्रे[9]" इति जपति। ततोऽतिक्रम्याध्वाग्नीध्र प्रत्याश्राविते "घर्मस्य यज" इति होतारमाह।

होता च होतृषदने उपविश्य "उभा पिबतमश्विना[10]" इत्यादिकां याज्यां[11]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - आ० आ० - 1/1/2/5, बृ० भा० - 3/2/3-6.

2-4 - मा० वा० शु० य० वे० म० सं० - 38/6.

5 - शा० ऋ० म० सं० - 1/40/3.

6 - अध्वर्युणा महावीरे ध्रियमाणे इन्द्राश्विना इति ऋचयो समुद्रायेति प्रस्तोता (तै० आ० - 4/1/3/6, आ० भा० - 2/2/3-6)

7-9 - मा० वा० शु० य० वे० म० सं० - 38/7-9.

10 - शा०ऋ०वे०म०सं० - 1/46/15, शाङ्० श्रौ० सू० - 5/10/18.

11 - इयं पूर्वाह्णप्रवर्ग्ये याज्या, अपराह्णप्रवर्ग्ये तु "अस्य पिबतम्" इत्यादिका (शाङ्० श्रौ० सू० - 5/10/21)

कर्माणीह यजति, ततो वषट्कारानुमन्त्रणं कृत्वा "भूर्भुवः स्वःस्वाहाग्ने वीहि वौषट्" इत्यनुवषट्कारं च करोति, ततो वषट्कारानुमन्त्रणं करोति ।

अत्रोर्ध्वं वषट्कृते "विश्वा आशा"[1] इत्यादिना मन्त्रेण जुहोति, ततो "दिविधाः"[2] इत्यादिना मन्त्रेण घर्मकुम्भं कम्पयति, ततो दिवस्पृशं कम्पयति । ततोऽनुवषट्कारे कृते "स्वाहाग्नये यज्ञियाय शं यजुर्भिः"[3] इति मन्त्रेण जुहोति । उदकमुपस्पृशति[4][5] च ।

ततो ब्रह्मा "अश्विना घर्मं पातम्"[6] इत्यादिना मन्त्रेण हुतोर्वं महावीरस्थं घर्ममनुमन्त्रयते ।

ततो यजमानः "अपातमश्विना"[7] इत्यादिना मन्त्रेणानुमन्त्रयते ।

ततोऽवशिष्टमहावीरस्थं घर्ममुत्पात्योत्कलन्तं घर्मं "इषे पिन्वस्व"[8] इत्यादिना मन्त्रेणानुमन्त्रयते । ततो "धर्मासि सुधर्मा"[9] इति मन्त्रेणोत्तरपूर्वार्धे प्रत्युत्क्रम्य "अमेन्यस्मे नृम्णानि"[10] इत्यादिना मन्त्रेणाहवनीयस्योत्तरतः स्थिते खरे महावीरं निदधाति ।

तत उपवेशाद्ध्वर्युर्वैकङ्कतशकलं घर्मेऽभ्यज्य तेन "स्वाहा पूष्णे शरसे"[11] इति मन्त्रेण हुत्वा शकलं प्रस्तरपरिधौ उपयच्छति । एवमेव "स्वाहा ग्रावभ्यः"[12]

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-3 – मा० वा० शु० य० वे० मा० सं० – 38/10, 11.

4 – अनुवषट्कृतस्य स्विष्टकृत्स्थानीयत्वात् स्विष्टकृतश्च रौद्रत्वात् ।

5 – घर्मे हुते "इमा उ वाम्" इत्यारण्योक्तं साम गायति प्रस्तोता [श० ब्रा० – 4/1/2/2, ला० श्रौ० – 4/1/15-16]

6-12 – मा० वा० शु० य० वे० मा० सं० – 38/12, 13, 14, 15.

इति मन्त्रेण "स्वाहा पितृदेवेभ्यः"[1] इति मन्त्रेण च प्रत्येकं पृथक् पृथक् शकलेन हुत्वा शकलं प्रथमाग्निष्वनुप्रस्यति । ततश्चतुर्थं शकलं घर्मे अवस्थाप्य हुतशेषोदीचीं दिशा नीयमानोऽपसव्यं कृत्वा दक्षिणतो वेदिमध्ये अंशिष उपगूहति । ततः सव्यं कृत्वो-दकमुपस्पृशति । ततः "स्वाहा द्यावापृथिवीभ्याम्"[2] इति मन्त्रेण "स्वाहा विश्वे-भ्यो देवेभ्यः"[3] इति मन्त्रेण च प्रत्येकं पृथक् पृथक् शकलेन हुत्वा प्रथमाग्निष्वनु-प्रस्यति । ततः सर्वं पिण्डकपालकं सम्मर्दयित्वा दक्षिणां दिशमभिनीयमानोऽर्ध-मुत्तरलोष्टं आदाय प्रतिप्रस्थाने "स्वाहा रुद्राय रुद्रहूत्यै"[4] इति मन्त्रेण समर्पयति। उदकमुपस्पृशति च । प्रतिप्रस्थाता च तं शकलं शालाया उत्तरत उदग्रं निरस्यति ।

ततः "स्वाहा सञ्ज्योतिषा ज्योतिः [गच्छताम्]"[5] इति मन्त्रेण महा-वीरस्थं घर्ममुपयमन्यामानयति ।

प्रस्तोता निधने समापितेऽध्वर्युः "अहः केतुना"[6] इत्यादिना मन्त्रेण[7] उत्तरं रौहिणपुरोडाशं जुहोति[8] । उच्छिष्टानि शकलानि चाहवनीये प्रहरति ।

तत उपयमन्यां स्रुचि आनीतस्य घर्मस्याग्निहोत्रहुता होमाय उत्तरेणा-हवनीयं मौञ्जं कूर्चं निदधाति । ततः "अर्कज्योतिषन्त्वा"[9] इत्यादिना मन्त्रेण

---

1-6- मा० वा० शु० य० वे० मा० सं० - 38/15, 16.

7 - अयं मन्त्रः पूर्वाह्णप्रवर्ग्ये, अपराह्णप्रवर्ग्ये तु "रात्रिः केतुना" इत्या-दिना मन्त्रेणोत्तररौहिणं जुहोति ।

8 - प्रस्तोता द्वितीयरौहिणपुरोडाशहवनकाले "इन्द्रमन्दः" इति रौहिणं साम सकृद् गायति (छा० ब्रा० - 4/1/5/6. ब्रा० गा० - 4/2/20)

9 - का० श्रौ० सू० - 4/14/13.

औदुम्बरीं समिधमाहवनीये आधाय तस्यां प्रदीप्तायाम् "सजूर्देवेन सवित्रा"[1]
इत्यादिना मन्त्रेण[2] उपयमन्या स्रुवा दधि हुत्वा स्रुवं स्रुचि निधाय गार्हपत्यमवेक्ष्ये-
चोपयमनीं स्रुचमादाय तूष्णीं भूयसीमुत्तरामाहुतिं जुहोति, भूयिष्ठं दधि स्रुचि परि-
शेषयति । ततो होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्राग्नीध्रयजमानाः क्रमेणोपहूयोपहूय
"मधुहुतम्"[3] इत्यादिना मन्त्रेण[4] दधिघर्मं वाजिनमिव भक्षयन्ति । तत उपयमनीं स्रुक्-
शुचिमन्दतरौ प्रक्षाल्य निदधाति ।

ततोऽध्वर्युः "सम्राड्गमानायानुब्रूहि" इति होतारं प्रेष्यति ।

ततो होता "आ यस्मिन्"[5] इत्यादिकमृचमभिष्टुत्य "सूयवसाद्"[6]
इत्यादिकया ऋचा निःपरिधाय मदन्तीमस्पृश्योरनुब्रूते वाग्यमनात् ।

अध्वर्युश्च ततो धर्मभाजनालम्भनं करोति । तत्र च "इमाम्"[7] इत्या-
दिना मन्त्रेण महावीरमालम्भनं करोति, तूष्णीमन्यानि पात्राणि ।

ततः सर्वे "ऋचं वाचम्"[8] इत्यादिकं शान्तिपाठं कुर्वन्ति ।

ततोऽध्वर्युरन्यो वापि कश्चित् शालाद्वाराणि उद्घाटयति ।। इति प्रवर्ग्यः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० मा० सं० - 3/10.
2- अपराह्णप्रवर्ग्ये सायमग्निहोत्रे प्रयोज्यो मन्त्रः प्रयोक्तव्यः ।
3- मा० वा० शु० य० वे० मा० सं० - 38/16.
4- शाङ्खायनश्रौतसूत्रे [5/10/31] तु मन्त्रान्तरमुक्तम् ।
5- शाङ्० श्रौ० सू० - 5/10/32.
6- शा० ऋ० वे० मा० सं० - 1/164/40.
7- मा० वा० शु० य० वे० मा० सं० - 38/17.
8- ,, - 36/1-24.

स्विष्टस्याग्नेः पूर्वार्धे होमः, ततः सोमायानुब्रूहीति प्रैषः[1], आश्राव्य प्रत्या-
श्राविते सोमं यजेति प्रैषः[2], ध्रुवायां गृहीतस्याज्यस्य द्वितीयस्विष्टस्याग्नेर्मध्ये
होमः, समानयनं कृत्वा विष्णवेऽनुब्रूहीति प्रैषः[3], आश्राव्य प्रत्याश्राविते विष्णुं
यजेति प्रैषः[4], अग्ने पश्चाद्भागे होमः। ततः ध्रुवोः सादनम्।

ततः सोमायनं निगुत्वयाजिकावाक्यम्।

ततः स्विष्टकृतिमन्त्रः, अग्निसम्मार्गप्रैषः, अग्निसम्मार्गः, अथाने
कर्मादिका प्रयोगः, अभ्युक्ष्य परिस्तरणम्[5], प्रस्तरस्यादानम्, अग्रस्य जुह्वां मध्य-
स्योपभृति, मूलस्याज्यस्थाल्यामञ्जनम्, ततः शुक्लाज्यं[6] गृहीत्वा यजमानेनान्वा-
रब्धस्य "या ते अग्नेऽयाशया तनूः"[7] इत्यादिकेन मन्त्रेणोपसदोमः[8]।

ततः परिधिविधुत्पादानादिसमिष्टान्तमाविधवाक्यम्।

तत आस्मालम्भः उदकालम्भः, ऋत्वाहुतिः, उत्तरेण ध्रुवोर्निधानम्,
वेदिविमोकसृज्यादि, स्रुग्व्यूहनहोमः, प्रणीताविमोकः।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- त्वं सोम क्रतुभिरित्यादिका (ऋ०सं० - 1/91/2) पुरोनुवाक्या।
2- अषाढं युत्सु इत्यादिका (ऋ०सं० - 1/91/21) याज्या।
3- यः पूर्व्यायेत्यादिका (ऋ०सं० - 1/156/2) पुरोनुवाक्या।
4- तमु स्तोतारः पूर्व्यमित्यादिका (ऋ०सं० - 1/156/3) याज्या।
5- प्रस्तरहोमाभावात् सूक्तवाको न भवतीति देवयाज्ञिकः, भवतीति कर्कः।
6- प्रतिप्रस्थातोपवेशनमार्ग्यं संस्कृत्याध्वर्यवे प्रयच्छतीति वाक्यार्थविदक्त-
कर्मानुसारविधायकतो।
7- मा० वा० शु० य० वे० मा० सं० - 5/8.
8- का० श्रौ० सू० - 8/2/31.

ततः शुक्रम्पात्रेभ्यः, शुक्रम्पाइवानं च । इत्युपसदिष्टिः पौर्वाह्णिकी ।

ततोऽपराह्णे तानूनप्तृकार्ये यजमानऋत्विग्भ्यानीयाऽध्वर्युर्जनानाय ध्रौ ददाति । पत्न्यै तु पूर्ववद् ध्रुवदानम् ।

॥ आपराह्णिकः प्रवर्ग्यः ॥

तत आपराह्णिकः प्रवर्ग्यः शान्तिपाठादिकः शान्तिपाठान्तः पूर्ववदेव । किन्तु "रात्रिः केतुना"[1] इत्यादिको रौहिणहोममन्त्र इति विशेषः । अग्निहोत्रकालप्राप्तस्य होमे "अग्निज्योतिरन्त्वा"[2] इत्यादिना मन्त्रेण समिदाधानम्, "सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा"[3] इति धर्महोम इति विशेषः ।

होत्रकर्मणि च "प्रातर्यावाणः"[4] इत्यादिकस्य सूक्तस्य स्थाने "आभात्यग्निः"[5] इत्यादिकं सूक्तं पठति होता, "घर्मस्य यज" इत्युक्तश्च होता "अस्य पिबतम्"[6] इति "यदुस्रियास्वाहुतम्"[7] इति च द्वे याज्यानुवाक्ये पठित्वा वषट्कारं करोति इति विशेषः । इत्यापराह्णिकः प्रवर्ग्यः ।

---

1- मा० वा० शु० य० वे० मा० सं० - 37/21.
2 - का० श्रौ० सू० - 4/14/13.
3 - मा० वा० शु० य० वे० मा० सं० - 3/10.
4-5- ऋ० वे० मा० सं० - 5/77/1-5. 5/76/1-5.
6 - ,, - 8/5/14.
7 - आश्व० श्रौ० सू० - 5/10/21.

॥ आपराह्णिकमुपसत् ॥

तत्र आपराह्णिकमुपसत् पूर्ववदेव । किन्तु होतृकर्मणि "इमाम्मे अग्ने"[1] इत्यादिका "या ते अग्ने"[2] इत्यादिका "तन्त्वा गीर्भिः"[3] इत्यादिका चेति तिस्रः सामिधेन्यः । याज्यानुवाक्ययोर्विपर्यासस्य विहितत्वात् आग्नेययागे "य उग्र इव"[4] इत्यादिका पुरोनुवाक्या, "अग्निर्वृत्राणि"[5] इत्यादिका याज्या, सौम्ययागे "अषाढं युत्सु"[6] इत्यादिका पुरोनुवाक्या, "त्वं सोम"[7] इत्यादिका याज्या, वैष्णवयागे च "तमु स्तोतारः"[8] इत्यादिका पुरोनुवाक्या, "यः पूर्व्याय"[9] इत्यादिका याज्या । निह्नवे च सव्यस्य पाणेरुत्तानत्वम्, दक्षिणस्य न्युब्जत्वम् इति विशेषः । इत्यापराह्णिकमुपसत् ।

ततोऽग्निमग्नीन्मित्रो ब्रूहि वाग्यमनप्रैषः । अस्तमिते वाग्विसर्गप्रैषः । व्रतं कृणुतप्रैषः, वाग्विसर्गः । निस्तनीं[10] व्रतदुघे दुह इति यजमानकर्तृकः प्रैषः । गावो दुग्धपात्रस्थितं दीक्षितव्रतस्य भक्षणम्, दक्षिणाग्नौ पक्वायाः । रात्रौ यत्नेन रक्षणम् । भोजनादिकं पूर्ववत् । अपरस्त्रयागे व्रतप्रदानं च पूर्ववत् । इति द्वितीयदिनकृत्यम् ।

उत्तरेद्युः प्रातर्विबुधवाचनम्, अनुदिते वाग्यमनप्रैषः, वाग्यमनम्,

---

1-3- शा० ऋ० वे० म० सं० - 2/6/1, 2, 3.
4-5- ,, - 6/16.39, 34.
6-7- ,, - 1/91/21, 22.
8-9- ,, - 1/156/3, 2.
10 - का० श्रौ० सू० - 8/3/1.

उदिते वायु-निमित्तप्रैषः, व्रतकरणप्रैषः, वायु-निर्गमः, त्रिस्तनीं व्रतदुघे दुग्धेति-प्रैषः, त्रिस्तनीं दोहयित्वा श्रपणं स्थापनं च पूर्ववत् ।

[पौर्वाह्णिकः प्रवर्ग्यः]

ततः पूर्वाह्णप्रवर्ग्यः ।

[पौर्वाह्णिकोपसद्]

ततः पूर्वाह्णोपसद् । तत्र "या ते अग्ने रजः शया तनूः"[1] इत्यादिक उपसद्धोममन्त्र इति विशेषः । होत्रकर्मणि च "वनान्मे अग्ने"[2] इत्यादिका, "अया ते अग्ने"[3] इत्यादिका, "तन्त्वा गीर्भिः"[4] इत्यादिका चेति तिस्रः सामिधेन्यः इति विशेषः । औद्गात्रकर्मणि च सुब्रह्मण्याह्वाने "त्र्यहे सुत्याम्" इति प्रयोगविशेषः ।

[वेदिमानम्]

ततो महावेदिमानम् । तत्र शालायाः पूर्वार्धस्तम्भात् प्राच्यां त्रिपदकान् षीन् प्रक्रमान् प्रक्रम्य तत्र शङ्कुं निहन्ति, सोऽन्तः पात्य[5] इत्युच्यते ।

---

1 - का० श्रौ० सू० - 8/3/2 [आग्न्याधेयकाले अंशुमती तृतीयदिने-[द्वितीयोपसद्दिने]-ऽपि "त्रिस्तनीं गावो दुह" [140 पृ०] इति यदुक्तं तच्चिन्त्यम् ।

2 - मा० वा० शु० य० वे० मा० सं० - 5/8.

3-5- शा० य० वे० मा० सं० - 2/5/1.

ततो ब्रह्मा उत्तरवेदिस्थानाद् दक्षिणस्यां दिशि किंचिद् व्यवधानान्तरं कृत्वोपविशति । ब्रह्मसंसृष्ट एव यजमानोऽप्युपविशति ।

ततो "यजमान वाचं यच्छ" इति प्रैषः । शालाद्वार्यस्य (आहवनीयस्य) उत्तरतः अग्निहोत्रहवणी, वज्रः, पवित्रार्थकुशाः, पवित्रच्छेदनकुशाः, अन्तर्धानितृणानि, कम्बा चेति पदार्थानासादयति । रज्जुः, शङ्कवः, अभ्रिः, पुरीषाहरणम्, प्रोक्षण्यः, सिकताः, आच्छादनकं चेति पदार्थानुकल्पयति ।

ततः पवित्रच्छेदनम्, मन्त्रयुक्तमग्निहोत्रहवण्यां कृत्वा प्रोक्षणीसंस्कारः, अन्तर्धानितृणाद्यानां प्रोक्षणम् ।

ततोऽन्तः पात्याङ्कोर्दक्षिणस्यां दिशि पञ्चदशसु सार्धेषु नवपदेषु वा प्रक्रमेषु शङ्कुं निखनन्ति, सा महावेदेर्दक्षिणा श्रोणिः, तथैवान्तः पात्याङ्कोरुत्तरस्यां दिशि पञ्चदशसु सार्धेषु नवपदेषु वा प्रक्रमेषु [illegible] शङ्कुं निखनन्ति, सा महावेदेरुत्तरश्रोणिः । ततोऽन्तः पात्याङ्कोः प्राच्यां दिशि षट्त्रिंशति प्रक्रमान् प्रक्रम्य शङ्कुं निखनन्ति, स वेदेः पूर्वार्धः, यूपावटस्थानं च । ततस्तस्मात् पूर्वार्धशङ्कोर्दक्षिणस्यां दिशि द्वादश प्रक्रमान् प्रक्रम्य शङ्कुं निखनन्ति, स महावेदेर्दक्षिणांसः, तत्र च पूर्वार्धशङ्कोरुत्तरस्यां दिशि द्वादशप्रक्रमान् प्रक्रम्य शङ्कुं निखनन्ति, स महावेदेरुत्तरांसः । एवं वेदिं मित्वा दक्षिणश्रोणेरारभ्य दक्षिणांसं यावत् स्फ्येन रेखां करोति । तत उत्तरश्रोणेरारभ्योत्तरांसं यावच्च स्फ्येन रेखां करोति[2] ।

---

1- का० श्रौ० सू० - ८/३/७.

2- "अंसतः स्फ्येन परिस्तृणीत मध्ये पृष्ठ्या" इति सूत्रान्तरे इति देवयाज्ञिकपद्धतौ ।

"या ते अग्ने हरिशया तनूः" इत्यादिको मन्त्र इति विशेषः ।

सुब्रह्मण्याह्वाने "श्वः सुत्याम्" इति विशेषः ।

तत्रोपसदाम्[2] ।

॥ आपराह्णिकः प्रवर्ग्यः ॥

ततः शालाद्वारपश्चिमादिकः शालाद्वारोद्घाटनान्त आपराह्णिकः प्रवर्ग्यः आपराह्णिकप्रवर्ग्यवत् ।

॥ आपराह्णिकोपसत् ॥

तत उपसत् । साऽपि आपराह्णिकपूर्वोपसद्वदेव । किन्त्वत्रहोमे "या ते अग्ने रजाशया तनूः[3]" इत्यादिको मन्त्र इति विशेषः ।

सुब्रह्मण्याह्वाने "श्वः सुत्याम्" इति विशेषः ।

॥ प्रवर्ग्योत्सादनम्[4] ॥

अध्वर्युः पात्रसमीपे वेदिमध्ये उपयमन्यादीनि सर्वाणि प्रवर्ग्य-पात्राणि निदधाति[5] । ततः शालाया दक्षिणेन द्वारेणोत्करदेशं निर्हृत्य

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- भा० श्रौ० सू० प० वे० प० सं० - 5/8।

2- सोपसदे वेदिं स्तीर्त्वा तन्मुहूर्तं सम्प्रवदन्ते" इति भा०आ०प०सू० - 5/6/3/4।

3- भा० श्रौ० सू० प० वे० प० सं० - 5/8।

4- का० श्रौ० सू० - 26/7/1।

~~5- [illegible]~~ ।

यजमानोऽपि ब्रह्मणः पश्चिमत उपविशति ।

ततोऽध्वर्युर्गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य शालाद्वार्यनामकमग्निं परिस्तीर्य संगमनाय चतुर्गृहीतमाज्यं "युञ्जते मनः"[1] इत्यादिना मन्त्रेण जुहोति ।

ततः शालाद्वार्ये एवाज्यं पूर्णाहुतिवत् संस्कृत्य पुनश्चतुर्गृहीतं गृह्णात्यध्वर्युः । ततो यजमानब्रह्माध्वर्यवः पूर्वद्वारेण निष्क्रम्य दक्षिणहविर्धानसमीपे आगत्योपविशन्ति । पत्नी च दक्षिणया द्वारा यान्ति[2] ।

ततोऽध्वर्युर्दक्षिणहविर्धानस्य दक्षिणे वर्त्मनि हिरण्यं निधाय परिस्तीर्य "इदं विष्णुः"[3] इत्यादिना मन्त्रेण पूर्वोक्तं चतुर्गृहीतमाज्यं जुहोति । ततः स्रुवं पत्न्या दक्षिणहस्ते नवनीतं च निदधाति । तेन दक्षिणहस्तस्थेन पत्नी "देवश्रुतौ देवेष्वाघोषतम्"[4] इति मन्त्रेण दक्षिणमक्षधुरं परागुपानक्ति । ततः सव्यहस्तात् स्रुवं दक्षिणहस्ते आनीय तेनैव मन्त्रेणोत्तरमक्षधुरं तथैवोपानक्ति ।

ततोऽध्वर्युराज्यस्थालीं स्रुवं च प्रतिप्रस्थात्रे समर्पयति ।

प्रतिप्रस्थाता आज्यस्थालीं स्रुवं चादाय चतुर्गृहीतमाज्यं जुह्वां गृहीत्वोत्तरस्य हविर्धानस्य दक्षिणे वर्त्मनि हिरण्यं निधाय परिस्तीर्य जुहोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - मा० वा० शु० य० वे० मा० सं० - 5/14.

2 - पत्नीमध्वर्युरानयति इति याज्ञिकाचार्यप्रयोगः, प्रतिप्रस्थाता-नयतीति तु विज्ञायते, पुरो [शत०ब्रा० - 3/5/3/13] इत्यत्र श्रुतत्वात्, अध्वर्योश्च व्याप्रियमाणत्वात् ।

3-4 - मा० वा० शु० य० वे० मा० सं० - 5/15, 17.

तां यथाविधि परिदधाति "विष्णोः स्यूरसि"[1] इति मन्त्रेण । नीविग्रन्थिकं कृत्वा "विष्णोर्ध्रुवोऽसि"[2] इति रज्जुग्रन्थिं करोति । परिवीतस्थाने रज्जुं भ्रामयन् बध्नाति ग्रन्थिं विश्रंसयति च । एवं सर्वासां स्थूणानां परिवीयां करोति ।

एवं परिश्रुतं हविर्धानमण्डपं निष्पाद्य "वैष्णवमसि विष्णवेत्वा [illegible]"[3] इति मन्त्रेण मण्डपमभिमृशति । इति हविर्धानमण्डपनिष्पादनम्[4] ।

[ उपरवखननम् ]

उपरवखननार्थम् अभ्रिः, दर्भमुष्टिः, यवाः, उदकम्, मृत्तिका, अधिषवणफलके, आनडुहं चर्म, सोमकुट्टनार्थाः प्रस्तराः, पञ्च ग्रावाणः, इति पदार्थानुपकल्पयन्ति ।

ततो दक्षिणस्यानसो दक्षिणतो अन्तरालाकारं कृत्वा लक्षयति ।

अध्वर्युश्च प्राङ्मुख उपविश्य "देवस्य त्वा"[5] इत्यादिना मन्त्रेणाभ्रिमादाय "इदमहं रक्षसां ग्रीवा अपिकृन्तामि"[6] इति मन्त्रेण प्रत्येकं मन्त्रावृत्त्या

---

1-3 - मा० वा० शु० य० वे० मं० सं० - 5/21.

4 - हविर्धानमण्डपे भोजनादिकं न कार्यम्, अतएवान्तः प्रवेशो द्विवारं तस्मिन्नेव कार्यः (का० श्रौ० सू० - 8/4/23-24)

5-6 - मा० वा० शु० य० वे० मं० सं० - 5/22.

दक्षिणहविर्धानाधः प्रउगस्याधो भूमौ यथाविधि[1] उपरवान् परिलिखति[2] ।

ततो "खनति"[3] इत्यादिना "वैष्णवीषु" इत्यन्तेन मन्त्रेण प्रत्येकं मन्त्रावृत्त्या यथापरिलिखितमुपरवान् खनति ।

ततः प्रथमं वातादुपरवात् पांसूनुद्धृत्य "इदमहन्तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निखान"[4] इति मन्त्रेण पुरस्तादुत्तरतो वा प्रक्षिपति । ततो द्वितीयादुपरवात् पांसूनुद्धृत्य "इदमहन्तं वलगमुत्किरामि यं मे समानो यमसमानो निखान"[5] इति मन्त्रेण पुरस्तादुत्तरतो वा प्रक्षिपति । ततस्तृतीयादुपरवात् पांसूनुद्धृत्य "इदमहन्तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निखान"[6] इति मन्त्रेण पुरस्तादुत्तरतो वा प्रक्षिपति, ततश्चतुर्थादुपरवात् पांसूनुद्धृत्य "इदमहन्तं वलगमुत्किरामि यं मे सजातो यमसजातो निखान"[7] इति मन्त्रेण पुरस्तादुत्तरतो वा प्रक्षिपति । ततस्तूष्णीमेव पुनः पुनः खात्वा पुनः पुनस्तूष्णीं पांसूनुद्धृत्य बाहुमात्रान्निम्नानुपरवान् कृत्वा[8] प्रथमादुपरवात् पांसूनुद्धृत्य "उत्कृ-

---

1 - हविर्धानमण्डपयोः मध्यापरच्छेदेन चतुर्धा विभज्य दक्षिणपूर्वचतुष्कद्वये (दक्षिणहविर्धानाधः प्रउगस्याधो भूमौ) प्रादेशद्वयपरिमाणं चतुरस्रं साधयित्वा तस्य कोणेषु परस्परं प्रादेशमात्रान्तराला उपरवाः खननीया इति देवयाज्ञिकपद्धतौ ।

2 - परिलेखने प्रथमं दक्षिणपूर्वं तत उत्तरापरं ततो दक्षिणापरं तत उत्तरपूर्वमिति क्रमोऽथवा प्रथममुत्तरापरं ततो दक्षिणपूर्वं ततो दक्षिणापरं तत उत्तरपूर्वमिति क्रमोऽथवा दक्षिणपूर्वादारभ्य प्रदक्षिणमुपरवान् परिलिखति (का० श्रौ० सू० - 8/5/3-5)

3-8- मा० वा० शु० य० वे० मा० सं० - 5/22-23.

कर्णिकाः स्तम्भान्[1] निखायोदुम्बर्यौ दक्षिण उत्तरतश्च यावदौ विधायतीः स्तम्भाः[2] निखाय पूर्वाभ्यामरत्न्यां च द्विहस्त पृष्ठाग्रभ्यसौ दक्षिणान्तं ऋर्वे स्तम्भं[3] च निखायोदग्रां मध्यमां निधाय वंशकाष्ठान्निधानबन्धनादि च यावदौ करोति ।

ततः स्तम्भौ दक्षिणभागे मध्यमं छदिः "इन्द्रस्य छदिरसि विश्वजनस्य छाया[4]" इति मन्त्रेणोदग्रां निदधाति । तस्मिन्नन्येष भागे तेनैव मन्त्रेणापरं छदिरारोपयति । तस्मिन्नन्येष भागे तेनैव मन्त्रेण पूर्वं छदिरारोपयति । एवमेव मध्यभागे उत्तरभागे च त्रीणि त्रीणि छदींषि मन्त्रपूर्वमारोपयति ।

ऊर्ध्वमौदुम्बरीमाच्छादनायामसुमाता "दिवं ऋमाति सन्ति नाम विश्वजनस्य छाया नमस्तेऽस्तु मा मा हिंसीः" इति करोति[5] ।

ततोऽवशिष्टैशानीकोणस्तम्भात आरभ्य पूर्वद्वारोत्तरस्तम्भं यावत् प्रथमे परिधारकाष्ठं, पूर्वद्वारदक्षिणस्तम्भात आरभ्याग्नेयीकोणस्तम्भं यावत् द्वितीयेन, आग्नेयीकोणस्तम्भात आरभ्य नैर्ऋतीकोणस्तम्भं यावत् तृतीयेन, नैर्ऋतीकोणस्तम्भात आरभ्य पश्चिमद्वारदक्षिणस्तम्भं यावत् चतुर्थेन, पश्चिमद्वारोत्तरस्तम्भात आरभ्य

---

1- "नाभिदघ्ने स्तम्भः" इति [का०श्रौ०सू० - 8/5/1] एतानि निखाताः कोणस्तम्भा यजमाननाभि दघ्नाः कार्याः ।
2- एताः स्तम्भा औदुम्बरीनिर्मिताः कार्या इति प्रतीयते ।
3- कार्याः स्तम्भा अपि नाभिदघ्नाः कार्याः ।
4- मा० वा० शु० य० वे० मा० सं० - 5/28.
5- मा० श्रौ० सू० - 1/7/15.

सम्प्रेष्यत्याग्नीध्रोद्वेदिं" इत्याग्नीध्रं प्रेष्यति, स्फ्यमुद्ध प्रहरति च ।

ततो निरुढपशुबन्धवच्छालाद्वार्ये पात्रासादनम्, सम्मार्जनकुशानां यत्नेन स्थापनम्, पत्नीसन्नहनम्, आज्योद्वासनम्, पत्न्या आज्यावेक्षणम्, आज्यस्यान्तः पात्रवद्यो प्रोक्षणीनां पश्चिमतः सादनम् ।

ततो यजमानः सोमकुम्भे कृत्वा शालाद्वार्यसमीपेऽऽस्ते ।

ततोऽध्वर्युः शालाद्वार्यमध्ये सोम क्रयणीपदं परिदीकरोति[1] ।

तत आज्यस्योत्पवनम्, प्रोक्षणीनामुत्पवनम्, आज्यस्यावेक्षणम्, पृषदाज्यकरणम्, स्रुवेण जुह्वां चतुराज्यस्य ग्रहणम्, उपभृति च, पृषदाज्यग्रहणम्, ऋत्विजामाज्यादिवीक्षणमात्मनीयं प्रति स्वनाय ।

ततो यजमानमनुविक्षताः पुरोहिताद्यः पत्नी च ऋत्विगादयोऽन्वारभन्ते ।

यजमानस्य तदन्वारम्भणार्थं वाहेन वासता छादनम् ।

ततोऽध्वर्युः प्रदीप्तस्थैनस्योपरि स्रुवं गृहीत्वाज्यं "त्वं सोम"[2] इत्यादिनामन्त्रेण प्रकृत्या पालाश्या[3] स्रुवा जुहोति । ततः स्रुवेण गृहीतमाज्यं "जुषाणो अप्तुः"[4] इत्यादिना मन्त्रेण जुहोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० – 8/6/30 [तद् तथा न कुर्यात्" इति माध्यन्दिनीय-शतपथे [3/6/3/8] निषिद्धत्वान्न कर्तव्यम्]

2- मा० वा० शु० य० वे० म० सं० – 5/35.

3- पालाशी स्रुह प्रचरणीति देवयाज्ञिकः, अग्निहोत्रहवणीव प्रचरणीति कर्कः ।

4- मा० वा० शु० य० वे० म० सं० – 5/35.

ततः अध्वर्युरग्न्योपपन्नीध्मिकमध्ये च होतारं प्रति "अग्नये प्रह्रियमाणायानुब्रूहि[1]" इत्याहाध्वर्युः[2] ।

ततो होता शालाद्वारीयस्य पश्चिमत उपविश्य "सावीर्हि देव[3]" इत्यादिकामृचं यथाविधि त्रिःपठित्वा पुनः प्रथमर्चं पठित्वा विरमति ।

अध्वर्युरग्निं हरन् अद उत्तरेण याति । गच्छन् प्राग्वंशे "अग्ने नय" इत्यादिकं मन्त्रं यजमानं वाचयति ।

ततो यजमानः सोमं हरन्नध्वर्युमनुगच्छति । ब्रह्मा चानुगच्छति । अन्येऽध्वर्युपुरुषाः पञ्च ग्राव्णो द्रोणकलशं सर्वाणि सोमभाजनानि ऊर्ध्वं बर्हिष्कुन्दं सम्भिलकं उपयमन्यौ त्रिशुष्कौ द्वे शने मन्थन चतुष्टयं चादायाग्नीध्रं प्रति गच्छन्तमध्वर्युमनुगच्छन्ति ।

उत्थायानुगच्छन् होताऽपि "अयास्य हवितः[4]" इत्यादिकमन्वाह[5] ।

ब्रह्मयजमानौ आग्नीध्रीयं प्राप्य पूर्वद्वारेण प्रविश्य धिष्ण्यस्य दक्षिणत उपविशतः ।

अध्वर्युराग्नीध्रीयं प्राप्य दक्षिणद्वारेण प्रविश्य धिष्ण्यस्योपरिष्टादग्निं

---

1 - "सोमाय प्रणीयमानायानुब्रूहि" इति वा प्रैषः [का०श्रौ०सू० 8/7/3]

2 - अग्नीषोमप्रणयनकाले प्रस्तोतानुब्रुवन् "अग्निर्मूर्धा" इत्यादिकमाग्नेयं साम [छ० आ० - 1/1/3/7, आ० गा० - 6/1/1] निगायति, तदनन्तरमेव "सन्नो पया सि" इत्यादिकं सौम्यं साम [आ०आ० 1/3/2, आ०गा० - 4/1/9] च निगायति ।

3-4- शाङ्ख० श्रौ० सू० - 5/14/8.

5 - शा०श्रौ०सू० - 1/40/1, 3, 3/27/7, 8, 9, 1/1/7, 8, 9.

श्रावयति[1] । ततो ग्रावद्रोणकलशोपमानानि चाग्नीध्रीयागारे निदधाति । सोमा-न्दौ चाग्नेयकोणे । अग्नीषोमीयं पशुमपि आनीय तत्र बध्नन्ति शाखान्तरात् ।

ततोऽध्वर्युः प्रवर्ग्यपात्राण्यादाय आज्यं स्रुचादायाग्नीध्रीयेऽग्नौ समिद्वतीषु "अयन्नो अग्निः"[2] इत्यादिना मन्त्रेण जुहोति[3] ।

ततः शेषमिध्माद्विकमादायाग्नीध्रीयमुत्तरेण गत्वा[4] पूर्वद्वारेण निष्क्रम्य गत्वा आज्यशेषमग्निमतिं सर्वेणाहवनीयमुत्तरतो निदधाति, आज्यानि सोमं च धारयन्त्येव । ब्रह्मा चाहवनीयं पूर्वेण गत्वा वेद्यन्ते उपविशति । यजमानोऽपि स्वान्वयेन गत्वा दक्षिणतो ब्रह्मणः समीपे स्वस्थाने उपविशति ।

ततोऽध्वर्युरुत्तरवेदौ कल्पयोक्तं उदोत्तराग्रप्रोक्षितं बर्हिः प्रोक्ष्य स्रुगा-सादनं प्रोक्षणीपात्रमाहवनीयस्योत्तरतो निधाय बर्हिर्विकीर्य पुरस्तादारभ्य प्रस्तर-ग्रहणं ब्रह्मणे प्रदानं तस्मात्परिधीनां स्तीर्यमाणवेदिभागे तस्मिन्नस्य निधानमध्वर्यु-कादनोत्कृष्ट बर्हिःस्तरणं च । ततः स्तृतस्य दक्षिणे भागे पात्राद्यासादनम् । ततः समिद्धुत्तरादानादि । द्वितीयसमिद्धाधानानन्तरमाज्यस्थाल्याः प्रवर्ग्यां स्रुचाज्यं गृहीत्वा

-------------------------

1- तत्काले होता अध्वर्यानुवचनं समाप्तवान् भवति ।

2- मा० वा० शु० य० वे० मा० सं० – 5/37.

3- तत्काले होता "सवस्मानः स्वस्त्योऽनग्ने जुषस्व" (ऋ० सं० वे० मा० सं० – 1/144/7) इत्यादिकामन्त्रान् ।

4- उत्तरेणाग्नीध्रीयमग्निमनुगच्छत्सु होता "यो विश्वतः प्रत्यङ्ङसि" (ऋ० सं० वे० मा० सं० – 1/144/7, 3/62/13-15) इत्यादिक-मन्त्रान् ।

गृहीत्वा "उरु विष्णो"[1] इत्यादिकमिति जुहोति[2]। ततः "सूर्यत्वचा"[3] इत्यादिकस्य मन्त्रस्य जपः।

ततः प्रदक्षिणमावृत्य विधृतिलक्षणात्मानम्नानां ग्रहण।

ततः कृपाणी प्रक्षाल्य यजमानस्त्वात् सोमक्रीतधेनिकामादाय दक्षिणाग्निक्षर्यं प्रविश्य[4] हविर्धानस्य उपस्थे प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य यजमाने सोममन्वारभमाणे कृष्णाजिनस्योपरि "देव सवितः"[5] इत्यादिना मन्त्रेण सोममासादयति[6]।

ततो यजमानोऽन्वारम्भं मुक्त्वा "स्तरस्व"[7] इत्यादिनामन्त्रेण सोममुपतिष्ठते।

ततश्च यजमान "स्वाहा निर्वरुणस्य"[8] इत्यादिना मन्त्रेण हविर्धान-

---

1 - मा० वा० शु० य० वे० म० सं० - 5/38.

2 - एतत्काले होता "सोमः अध्वनामदोऽमुपप्रयङ्" इत्यादिकम् (ऋ० सं० वे० म० सं० - 3/62/15, 9/67/29) इत्यन्वाह।

3 - मा० वा० शु० य० वे० म० सं० - 2/5.

4 - एतत्काले होता "अग्ने नियुतो नमोऽन्तमस्य" इत्यादिकम् (ऋ० सं० वे० म० सं० - 9/67/29, 1/156/4, 8/48/2) अन्वाह।

5 - मा० वा० शु० य० वे० म० सं० - 5/39.

6 - सोमे आसादिते होतोत्तरतो दक्षिणामुखो स्वच्छ इन्द्रविन्दु ब्रेत्यादिकम् (ऋ०सं०वे०म०सं० - 8/48/2, 9/72/6, 2/23/1, 8/42/1) अनूच्य "एवा वन्दस्व" इत्यादिकामृचं (ऋ०सं०वे०म०सं० - 8/42/2) त्रिः पठति। ततो गोमध्यादानादिकं च यथाचारं करोति।

7-8- मा० वा० शु० य० वे० म० सं० - 5/39.

फलकात् निष्कृष्य "अग्ने व्रतपाः"[1] इत्यादिना मन्त्रेणाहवनीये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ।

पत्नी च तूष्णीं शालाग्नौ[2] समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ।

ततोऽध्वर्युर्मदन्तीश्चात्वाले निनयति[3] ।

अग्नीषोमीयपशुनियोजनार्थं यूपाञ्जनादिकं निरूढपशुबन्धवदेव । नियोजने "अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि"[4] इति प्रयोगविशेषः । प्रोक्षणे च "अद्भ्यस्त्वौषधीभ्यः"[5] इत्यादिना संहितापठितेन मन्त्रेणैव प्रोक्षणम् । क्रीते सोमे दण्डो मैत्रावरुणाय न दद्यात् यजमानवरणानन्तरं तस्य प्रदानात् । अग्नीषोमीये पशौ हविष्कृता "स्वात्तः पशुः" इत्युक्तेऽध्वर्युः "शेतां नु मुञ्चतु"[6] इत्यनुक्त्वैवोत्तरं परिपश्व्याहुतिं जुहोति । अध्वर्युः पशुबन्धनस्थानां चात्वाले प्रास्य "नेष्टः पत्नीमुदानय"[7] इत्याह । उदकमे प्रयाजे कृते पूर्वं अयाया अभिधारणम्, ततो ध्रुवायाः, तत आज्यस्थाल्याः, ततः पृषदाज्यस्य । नानाज्यभागौ[8] ।

---

1- मा० वा० शु० य० वे० मा० सं० - 5/40.
2- "न गार्हपत्येऽतः" इति [का० श्रौ० सू० - 8/3/26] वचनात् ।
3- का० श्रौ० सू० - 8/7/19.
4-5- मा० वा० शु० य० वे० मा० सं० - 6/9.
6-7- का० श्रौ० सू० - 6/5/22, 26.
8 - शाङ्ख० श्रौ० सू० - 5/18/5. श्रौ० प्रा० - 3/5.

वपाश्रपणाय शुलाभ्यामुद्धृतां हिरण्यशकलाय आनयन्तु "अग्नीषोमा-भ्यां छागस्य वपायै मेदसोऽनुब्रूहि"[1] इति मैत्रावरुणमाह[2] ।

ततोऽध्वर्युर्वपां शुलाभ्यामधायोपरिष्टाद् हिरण्यशकलं निदध्याच्चो-त्थायाभिक्रम्याश्राव्य प्रत्याश्राविते "अग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्य" इत्याह[3] । वपायां हुतायां वपाश्रपण्योरन्यतरां जुहोत्यादानं चात्वाले क्षेपं मार्जनम् ।

[ वसतीवरीग्रहणम् ]

ततोऽध्वर्युर्वसतीवरीर्ग्रहणाय दृढं कलशमादाय चात्वालोत्करावन्तरेण निष्क्रम्यानसमीप एव पूर्वं[4] नद्यादिगताः स्यन्दमाना अपो गत्वा "हविष्मतीः"[5] इत्यादिना मन्त्रेण कलशेन स्यन्दमाना अपो गृह्णाति । ततः प्रत्यागत्य चात्वालोत्करावन्तरेण प्रविश्याग्नीध्रीयमुत्तरेण गत्वा शालाद्वार्यसमीपे "अग्नेर्वः"[6] इत्यादिना मन्त्रेण सादयति ।

तत उदके प्रत्यागत्य "शुक्रस्कण्डे शुक्रस्कण्डानामाशुञ्जय पेता-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 6/6/20.
2- मैत्रावरुणः "अग्नीषोमाविमम्" इत्यादिकमनुवाक्यामाह [शा० ऋ० वे० मा० सं० 1/93/1]
3- मैत्रावरुणश्च "होता यक्षदग्नीषोमौ छागस्य वपाया मेदसो जुषेतां हवि-होतर्यज" इत्याह, ततो होता "युवमेतानि" इत्यादिकां याज्यामनुवाक्यामाह [शा० ऋ० वे० मा० सं० -1/93/5]
4- पूर्वेऽस्तं गते रवौ गन्तुं लग्ने वा यथा वसतीवरीग्रहणं कार्यं तथा कात्यायनश्रौतसूत्रे [8/9/6-9] प्रोक्तम् ।
5-6- मा०वा०शु०य०वे०मा०सं० 5- 6/23 [का०श्रौ०सू० 8/9/10-12], 6/24.

इत्युक्त्वा[1] वषट्कृते जुहोति । तत उदकमुपस्पृश्य स्रुचौ निधाय प्राशित्रादि भाग-परिहरणान्तं कर्मकरणवत् पौर्णमासवत्[2] ।

॥ पश्वङ्गयागः ॥

ततः पशुविशसनादि निरूढपशुबन्धवत् । कर्मादीनामूहनमिति विशेषः । प्रधानयागे "अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि[3]" इत्युक्त्वा-ऽऽश्राव्य प्रत्याश्राविते "अग्नीषोमाभ्यां छागस्य हविः प्रेष्य" इत्यु-क्त्वाऽध्वर्युर्वषट्कृते[4] जुहोति ।

यूपाग्न्योरन्तरालेनैव प्रत्यागत्योत्तरेणाग्नीध्रं हविर्धानमण्डपं च तस्याः सदसि गमनम्, गृहपतेश्च सोमपानमार्गम् । जायन्याश्च यूपाग्न्यो-रन्तरालेनागत्योत्तरेणाग्नीध्रं हविर्धानमण्डपमाग्नीध्रीयं च पत्नीसंयाजार्थं शालायां गमनम् ।

अध्वर्युश्च पत्नीसंयाजार्थमाग्नीध्रीयमुत्तरेण[5] गत्वा शालायां पूर्वं गत्वा तं दक्षिणेनोपविशति । ततः शालायां पत्नीसंयाजा मार्जनान्ताः ।

---

1- मैत्रावरुणः "होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज" इत्याह ।
2- पशुपुरोडाशेज्यायां मैत्रावरुणस्य कर्म इति देवयाज्ञिकपद्धतौ ।
3- मैत्रावरुणः "होता यक्षदग्नीषोमौ छागस्य हविः" इत्यादिकं प्रैषमाह [ऋग्वेदखिलेषु - 5/7/2/1]
4- होता च [अग्नीषोमा हविः" इत्यादिकां याज्यां कामिकेष्ट्याह [शा० ३० वे० म० सं० - 1/93/7]
5- "हिरण्यपाणयोऽध्वर्यवः" [काठकसं० - 6/7/10] इति वचनात् ।

ततः पत्नी तां वसतीवरीकलशमालभते ।

ततोऽध्वर्युः प्राग्वंशद्वारेण गत्वा पुनः कलशमादाय पूर्वद्वारेण नि-ष्क्रम्याग्नीध्रीयपुरतो गत्वोत्तरस्यां वेदिश्रोणौ "इन्द्राग्न्योः[1]" इत्यादिना[2] मन्त्रेण वसतीवरीकलशं सादयति ।

ततोऽध्वर्युर्वसतीवरीकलशमादाय "विश्वेषां देवानाम्[3]" इत्यादिना मन्त्रेण आग्नीध्रीयस्य पश्चिमतः[4] सादयति । तत्र चाध्वर्युरेव यजमानात् सोम-पोट्टलिकामादाय आग्नीध्रीयागारे पूर्ववदेव आसन्द्यां सोमपोट्टलिकां तूष्णी-मेव निदधाति ।

यजमानस्तां[5] तां रात्रिं जागृदेव सोमं रक्षति[6] ।

अध्वर्युश्च सोमनिधानानन्तरमुत्करे गत्वा "सुब्रह्मण्ये सुब्रह्म-ण्यामाह्वय पैतापुत्रीयाम्[7]" इत्याह ।

---

1 - मा० वा० शु० य० वे० म० सं० - 6/24.

2 - "मित्रावरुणयोर्भागधेयीस्थ" इति मन्त्रेण वा [तत्रैव - 6/24]

3 - मा० वा० शु० य० वे० म० सं० - 6/24.

4 - कतुत्तरां श्रोणौ निधत्ते इति देवयाज्ञिकपद्धतौ ।

5 - "आग्नीध्रे यज्ञायुधानि सादयति तस्माद् यजमानो जागृदयति, प्राची पत्नी" इति मानवे इति देवयाज्ञिकपद्धतौ [का०श्रौ०सू० - 8/9/25]
"आग्नीध्र एतां रात्रिमृत्विजोऽलङ्कुर्वन्ति । प्राची पत्नी जागर्ति दक्षिणेन यजमानो राजानं गोपायञ् जागर्ति" इति वैखानसश्रौतसूत्रे - [14/20]

6-7- का० श्रौ० सू० - 8/9/25, 26, 8/9/11.

सुब्रह्मण्यश्च पूर्ववत् सुब्रह्मण्यामाह्वयति ।

ततो यथाप्राकृतं क्रमेण उपवसथ्यावसानादिकाः पशाजनान्ताश्च-त्वारो दोहाः[1] ।

आतञ्चने सानाय्यदोहानां भागाद् "इन्द्रस्य सरस्वतीमतस्त्वा भागम्" इति प्रयोगविशेषः । दधिघर्मदोहस्यातञ्चने तु "इन्द्रस्य त्वा भागम्" इत्येव प्रयोगः । ततो दोहानां सर्वेषां कुम्भे निधानं यत्ता प्रयत्नेन रक्षणं च।

ततः प्रातःसवनार्थपयस्यायाः कृते वत्सापाकरणम्[2] । तत्र च "इन्द्राय मित्रावरुणवते भागम्" इति गोभर्त्सनस्य मन्त्रे विशेषः ।

ततो यजमानमुख्या अदीक्षितवेदविदुत्तमेभ्यः कर्णवेष्टकम्, उन्मर्द-नार्थं चन्दनादिकम्, मालादिकमङ्गलम्, दन्तधावनम् इति ददति। इति चतुर्थदिनकृत्यम् ।

॥ सुत्याहः ॥

तत्रापररात्रे यजमानमुख्याः "ऋत्विजः प्रबुध्यध्वम्" इति पुनः पुन-रुक्त्वा सुप्तानृत्विजः प्रबोधयन्ति ।

ततः सर्वेऽपि ऋत्विजः शौचं दन्तधावनं च कृत्वा स्नात्वा धौत-

---

1- अनुवर्ण्ये दधिघर्म-(का०श्रौ०सू० - 10/1/20)-दोहरहितास्त्रय एव दोहाः प्रतिसवनं सानाय्येषु सत्स्वपि कर्मणो विशिष्टत्वात् ।

2- पूर्वोक्ता दोहा वत्सापाकरणं चाग्नीध्रेण शाखान्तरादिति देवयाज्ञिकभाष्ये (का०श्रौ०सू० - 8/9/27)

तां दिशं यान्ति । ब्रह्मापि याति । यजमानोऽपि याति ।

तत उदकं प्राप्याध्वर्युरप्सु परस्तीर्य समीपे उपविश्य "देवीरापो अपान्नपाद्"[1] इत्यादिना मन्त्रेण चतुर्गृहीतमाज्यं जुहोति । ततो मैत्रावरुणदण्ड-मादाय तेन कुमाज्यं "कार्षिरसि"[2] इति । मन्त्रेण दूरे प्रेरयति । ततः "समुद्रस्यत्वा"[3] इत्यादिना मन्त्रेण मैत्रावरुणदण्डेनापो गृह्णाति ।

तत ऋत्विजोऽपि "समुद्रस्य त्वा"[4] इत्यादिनैव मन्त्रेणाञ्जलिभिरा-पो गृह्णन्ति ।

पत्नी च द्वे पान्नेजन्यौ[5] कुम्भीश्च जलेन पूरयति ।

ततः सर्वे देवयजनं प्रत्यागच्छन्ति ।

सर्वेषु यथास्थानमीपं प्राप्तेषु अध्वर्युश्चात्वालोपरि अग्नीध्रमैत्रा-वरुणौ च "समापो अद्भिर्ग्मत"[6] इत्यादिना मन्त्रेण परस्परं संस्पर्शयति[7] । ततो-ऽध्वर्युर्होतृचमसो अग्नीध्रीयादानीय यजमानाय ददाति[8] । तत आहवनीयं प्रति गच्छन्ति । ततो होता "कःस्विदेकः"[9] इति पृच्छति । अध्वर्युश्च

---

1-4 - मा० वा० शु० य० वे० मा० सं० - 6/27, 28.

5 - एवं पात्रं यजमानपत्न्याः स्नानार्थं उपसिक्ताय, द्वितीयं पत्न्याः स्नानाय ।

6 - मा० वा० शु० य० वे० मा० सं० - 6/28.

7 - "इतरेतरं स्पृशन्ति व्यानमन्त्रैः" इति मतान्तरं का०श्रौ०सूत्रे [9/3/10] प्रदर्शितम् ।

8 - होतृचमसस्थानामेतासामपां "निग्राभ्याः" इति संज्ञा ।

9 - "कःस्विदेकीरिपऽः" इति शाङ्खायनश्रौतसूत्रे पाठः [6/7/8].
"अहंस्विदेकः" इत्याश्वलायनश्रौतसूत्रे पाठः [1/5/1]

ततोऽध्वर्युर्निग्राभ्या होतृचमसात् देवान्तेनानयति । ततः पृथक्
तत उपस्तीर्णं शापयित्वं च । ततोऽध्वर्युः पाणिप्रक्षालनम्, अनामिकायां हिर-ण्यबन्धनम् उपांशुसवनाद् ग्रावादानं "देवस्य त्वा"[1] इत्यादिना यजुरन्तं निवचनेन मन्त्रेण । ततोऽध्वर्युः प्राग्वंशकारात् वाग्यमनम् ।

ततो यजमानो होतृचमसमादाय पूर्वाग्नं धारयित्वा निग्राभ्यासु हस्तं निदधाति । ततोऽध्वर्युस्तं "निग्राभ्या स्थ"[2] इत्यादिकं मन्त्रं वाचयति ।

ततोऽध्वर्युः "इन्द्रायत्वा वसुमते रुद्रवते"[3] इति मन्त्रेण सोमस्य प्रथमं मुष्टिम् उपांशुसवनग्रावोपरि प्रक्षिपति, ततः "इन्द्राय त्वादित्यवते"[4] इति द्वितीयम्, "इन्द्राय त्वाभिमातिघ्ने"[5] इति तृतीयम्, "श्येनाय त्वा सोमभृते"[6] इति चतुर्थम्, "अग्नये त्वा रायस्पोषदे"[7] इति[8] पञ्चमम् । ततो मिश्रं सोमम् "यत्ते सोम दिवि"[9] इत्यादिना मन्त्रेणालभते ।

ततोऽध्वर्युरानन्थादु सोमान् मुष्टिमात्रं सोमं शुल्काभिषवार्थं पृथक् कृत्वा पात्रान्तरे स्थापयति । ततः कञ्चन प्रतिप्रस्थातुरङ्गुष्ठान्तरे कर्तुं पृथक् करोति । तत एवं कुर्वन्काकारतो नीतं महाद्रुं तृतीयसवनार्थं पृथक्कृत्य क्वचित् पुटे निदधाति । ततः शुल्काभिषवार्थं निग्राभ्याणां भागं कतिचिद् पात्रे आनीय रक्षति ।

---

1-2- मा० वा० शु० य० वे० म० सं० - 6/30.
3-7- ,, - 6/32.
8 - एतेषु मन्त्रेषु "मित्रो" इत्यध्याहारः कर्तव्यो भाति ।
9 - मा० वा० शु० य० वे० म० सं० - 6/33.

। महाभिषवः ।

ततः प्रतिप्रस्थातानेष्टुनेतारोऽपि पाणिप्रक्षालनं कृत्वाऽनामिकायां हिरण्यबन्धनं च कुर्वन्ति । ततोऽध्वर्युर्दक्षिणावतार एव स्वं स्वं ग्रावाणमादत्ते "देवस्य त्वा"[1] इत्यादिकेन मन्त्रेण । ततोऽध्वर्युः "रवासि त्वं"[2] इति मन्त्रेण मितो सोमे निग्राभ्या आसिञ्चति । ततः सोमं चतुर्षु भागेषु विभजति । ततः सर्वे मध्यमं देवं पूर्णं वा अपरत्वा अङ्गुष्ठं अङ्कुश्य वा प्रहरन्ति न तूष्णीं सोममिति विचारयन्तो "मा भेः"[3] इत्यादिना मन्त्रेणाभिषवफलकाधारस्थाभेद्यसोमोपरि प्रहारं कुर्वन्ति । ततस्तूष्णीमेव पुनः पुनः प्रहारं कुर्वन्ति । ततो विहाय कुटेन ऋतोक्ताः प्रक्षिप्तं सोमं पुनरभिहुत्य तूष्णीमेव पुनः पुनः प्रहारं कुर्वन्ति । ततः पुनर्निहत्य पुनरभिहुत्य तूष्णीमेव पुनः पुनः प्रहारं कुर्वन्ति । तत "आ तुर तुन्दते"[4] इत्यादिना मन्त्रेण सोममाप्याययन्ति[5] । ततोऽध्वर्युर्होतृचमसे ग्रहादानस्यानिहुत्य "प्राणाय"[6] इत्यादिकं यजमानं वाचयति । ततः सम्भृत्याभिषुतं सोमं गृहीत्वाऽऽधवनीये प्रक्षिप्य स्रुवेण सर्वत्र परिप्लाव्य निष्पीड्य सम्भृत्यैवादायाधवनीयस्थपत्रे प्रक्षिपति[7] । एवमेव द्वितीयोऽभिषवो निग्राभ्यावेक्षणादभुवनात्मानः । एवमेव तृतीयोऽपि । किन्तु तृतीयेऽभिषवे प्राणापागिति वाक्यानन्तरं स्वं ग्रावाणं होतृचमसेऽवधायाध्वर्युः पुनः प्राणापागित्यादि यजमानं वाचयति । ततः सम्भरणादिकम् । इति महाभिषवः ।२

---

1-4- मा० वा० शु० य० वे० म० सं० - 6/30, 34, 35, 5/7.

5 - का० श्रौ० सू० - 9/5/2.

6 - मा० वा० शु० य० वे० म० सं० - 6/36.

7 - का० श्रौ० सू० - 9/5/6.

धारातोऽपनीय "इन्द्रवायू"[1] इत्यादिना मन्त्रेण पुनस्तस्या एव धाराया सोमरसं गृह्णाति । ततो वेन ग्रहपात्रं परिमृज्य "एष ते योनिः"[2] इत्यादिना मन्त्रेण स्व-स्थाने सादयति ।

ततोऽध्वर्युर्मैत्रावरुणपात्रमादाय "अयं वां"[3] इत्यादिना मन्त्रेण तस्या एव धारायाः सोमरसं गृहीत्वा पात्रस्योपरि कुशं निधाय "राया वयं"[4] इत्यादिना मन्त्रेण पयसा श्रीणाति । ततो ग्रहपात्रं परिमृज्य "एष ते योनिः"[5] इत्यादिना मन्त्रेण ग्रहं स्वस्थाने सादयति ।

ततोऽध्वर्युः शुक्रपात्रमादाय "तम्प्रत्नथा"[6] इत्यादिना मन्त्रेण[7] तस्या एव धारायाः सोमरसं गृह्णाति । ततो ग्रहं मार्ष्टि । ततः "एष ते योनिः"[8] इत्यादिना मन्त्रेण ग्रहपात्रं स्वस्थाने सादयति ।

ततोऽध्वर्युर्मन्थिपात्रमादाय "अयं वेनः"[9] इत्यादिना मन्त्रेण तस्या एव धाराया सोमरसं गृह्णाति । ततः पात्रे कुशं स्थापयित्वा "मनो न"[10] इत्यादिना मन्त्रेण सक्तुभिः श्रीणाति । ततो ग्रहं मार्ष्टि । तत "एष तु ते योनिः"[11] इत्यादिना मन्त्रेण शुक्रपात्रस्योत्तरतः खरे सादयति ।

ततोऽध्वर्युराग्रयणस्थाली मादाय तस्या एव धारायाः "ये देवासः"[12] इत्यादिना मन्त्रेण सोमरसं गृह्णाति । द्रोणकलशापावित्र उन्नेतृधवनीयादुदञ्चनेन

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-8 - मा० वा० शु० य० वे० मा० सं० - 7/8, 9, 10, 12.

9 - "अयं वेन इत्येके" इति का० श्रौ० सू० - 9/6/12.

9-12- मा० वा० शु० य० वे० मा० सं० - 7/12, 16, 17, 19.

सोममादायाग्रयणाय धारां पातयति[1] । आत्वां पूर्णायामंशुः आग्रयणस्थाली-मुखं पवित्रेण सहैतो वैश्वदेवस्थाल्यामपि धारयित्वा "हि हि हि" इति कृत्वा "सोमः पवते[2]" इति च निरुक्त्वा शेषं मन्त्रम् "विश्वेभ्यस्त्वा देवेभ्यः" इति उपांशूच्चारयति[3] । ततोऽध्वर्युर्हिङ्कारं करोति । तत आग्रयणस्थाल्याः परि-मार्जनम्, "एष ते योनिः[4]" इत्यादिना मन्त्रेण स्वस्थाने खरे सादनम् ।

ततोऽध्वर्युरुक्थ्यस्थालीमादाय "उपयामगृहीतोऽसीन्द्राय[5]" इत्यादिना मन्त्रेण होतृचमसधारात एव सोमं गृह्णाति । पूर्णायां स्थाल्यां स्थालीं परिमृज्य "एष ते योनिः[6]" इत्यादिना मन्त्रेण स्वस्थाने खरे सादयति ।

ततोऽध्वर्युर्ध्रुवस्थालीमादायोद्गातृचमसेन नीत्वा "मूर्धानं दिवः[7]" इत्यादिना मन्त्रेण सोमरसं गृह्णाति । स्थाल्यां पूर्णायां स्थालीं परिमृज्य यथानीतं प्रतिपर्याहृत्य "एष ते योनिः[8]" इत्यादिना मन्त्रेण स्वस्थाने सादयति[9] ।

---

1 - याज्ञिकानां कर्मस्य वासिष्ठीयं मतः, देवयाज्ञिकस्तु कठ्यून्-दैवाजमीय-कल्पवृक्षे 'आग्रयणस्थाल्यां च उपांशुपात्रं पात्रान्तरे कृत्वा प्रतिप्रस्थाता वाऽऽसिञ्चति । सा एव धारा । द्वितीया तु वसती-धारैव' इति फलं मनुतामाह ।

2 - मा० वा० शु० य० वे० म० सं० - 7/21.

3 - का० श्रौ० सू० - 9/6/16-17.

4-8 - मा० वा० शु० य० वे० म० सं० - 7/21, 22, 24-25.

9 - ध्रुवस्याग्निमनाशकालपर्यन्तो तृतीयसवने होतृचमसे निनयनं कृत्वा सोमः ह्रियते । तत्पर्यन्तो यजमानो मूत्र-पुरीषे न कुर्यादिति नियमः [का० श्रौ० सू० - 9/6/23]

ण्डे एवं तृणं चात्वाले प्रक्षिपति ।

तत उद्गातारश्चात्वालस्य दक्षिणतो वेदिमध्ये स्वोपविशन्ति प्रत्यङ्-मुखा यथास्थानम् ।

ततोऽध्वर्युरुद्गातॄणां पुरस्ताद् द्वितीयं तृणं प्रास्यति ।

तत उद्गातारः पुरस्ताज्जपं[1] कुर्वन्ति ।

ततोऽध्वर्युरुद्गातृषु पुरस्ताज्जपं कुर्वत्सु प्रस्तोत्रे कुशमुष्टिं वा प्रयच्छन् प्रयच्छन्नेव वा "सोमः पवते"[2] इत्यनेन मन्त्रेण बहिष्पवमानस्तोत्रमुपाकरोति ।

ततः प्रस्तोता "ब्रह्मन् स्तोष्यामः प्रशास्तः" इत्युक्ते ब्रह्मा "एतन्नो देवसवितः"[3] इत्यादिकं "तेन मामव" इत्यन्तं पठित्वा[4] "स्तुत सवितुः प्रसूताः"[5] इति अनुजानाति ।

तत उद्गातारो बहिष्पवमानस्तोत्रगानादिकं[6] कुर्वन्ति ।

स्तोत्रकाले ऽध्वर्युप्रतिहर्तारौ प्रत्यङ्-मुखौ उद्गातॄणां पुरस्तादुप-

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- "पुरस्ताज्जपोपरिष्टाज्जपाः सर्वे अविशेषात् कृत्स्नाः स्युः" इति लाट्यायनः [1/9/13]
2- का० श्रौ० सू० - 9/6/34 [मा० श० प० ब्रा० - 4/2/5/7]
3- मा० वा० शु० य० वे० स० सं० - 2/12
4- अयो मन्त्रविकल्पो कात्यायनेन प्रदर्शितो [का०श्रौ०सू० - 11/1/20-21]
5- का० श्रौ० सू० - 11/1/19
6- लाट्यायनश्रौतसूत्रं द्रष्टव्यम् [1/112 - 11/12/20]

शुक्रः शुक्रशोचिषा"[1] इति मन्त्रेण प्रतिप्रस्थातृदक्षिणहस्तेन स्वदक्षिणहस्तेन यो-जयति शुक्रग्रहेण[2], प्रतिप्रस्थाता च "सञ्जग्मानौ दिवा पृथिव्या मन्थी मन्थि-शोचिषा"[3] इति मन्त्रेण अध्वर्युदक्षिणहस्तेन स्वदक्षिणहस्तेन योजयति । ततो-ऽध्वर्युः "निरस्तः शण्डः"[4] इति मन्त्रेण प्रोक्षितं तृणकं निरस्यति । प्रति-प्रस्थाता च "निरस्तो मर्कः"[5] इति मन्त्रेण । तत उभावपि अप उपस्पृशतः । ततोऽध्वर्युः "शुक्रस्याधिष्ठानमसि"[6] इति मन्त्रेण प्रोक्षितं तृणकमाहवनीये प्रक्षिपति । प्रतिप्रस्थाता च "मन्थिनोऽधिष्ठानमसि"[7] इति मन्त्रेण । ततो यजमानः "अच्छिन्नस्य ते देव सोम"[8] इत्यादिकं मन्त्रं जपति । नव चमसाध्वर्यव एकैकं चमसमादाय होमार्थं प्राङ्मुखास्तिष्ठन्ति[9] । ततोऽध्वर्युरुत्तरस्य दक्षिणतः प्रत्य-ङ्मुखस्तिष्ठन्नेव आगम्य प्रत्याश्राविते "प्रातःसवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य"[10] इत्याह । ततोऽध्वर्युः पूर्वोक्तप्रकारेण तिष्ठन् होता वषट्कृते "सा प्रथमा संस्कृतिर्विश्ववारा"[11] इत्यादिना मन्त्रेण विच्छिन्नधारया शुक्रं जुहोति । प्रतिप्रस्थाता च तेनैव मन्त्रेण विच्छिन्नधारया मन्थिनं जुहोति ।

---

1 - मा० वा० शु० य० वे० म० सं० - 7/13.

2 - का० श्रौ० सू० - 9/10/7. "पूर्वेणाक्षौ" इति च तत्र - 9/10/8.

3-8 - मा० वा० शु० य० वे० म० सं० - 7/12.13.16.13.16.14.

9 - चमसाध्वर्यवः पूर्वेण चमसोन्नयनम् इति कात्यायनोक्तेः क्रम इति देवयाज्ञिकोपन्यासे ।

10 - का० श्रौ० सू० - 9/10/11.

11 - मा० वा० शु० य० वे० म० सं० - 7/14-15.

ततोऽध्वर्युः प्रशास्तृचमसमादायाश्राव्य प्रत्याश्राविते "प्रशास्तर्यज" इति प्रेष्यति[1]। ततः प्रशास्ता[2] वषट्कृतेऽनुवषट्कृते[3] च किञ्चिदध्वर्युः जुहोति। अथ उपस्पृश्य प्रशास्तृचमसाध्वर्यवे चमसं समर्पयति च। स च चमसं सदः प्रति हरति च।

ततोऽध्वर्युर्ब्राह्मणाच्छंसिचमसमादायाश्राव्य प्रत्याश्राविते "ब्रह्मन्यज" इति[4] प्रेष्यति। ब्राह्मणाच्छंसी[5] वषट्कृतेऽनुवषट्कृते च शेषं स्वयं जुहोति। ततः अथ उपस्पृश्य ब्राह्मणाच्छंसिचमसाध्वर्यवे चमसं समर्पयति च। स च चमसं सदः प्रति हरति।

ततः पोतृचमसमादायाश्राव्य प्रत्याश्राविते "पोतर्यज" इति प्रेष्यति। पोता[6] वषट्कृतेऽनुवषट्कृते च शेषं स्वयं जुहोति। ततोऽपि उपस्पृश्य पोतृचमसाध्वर्यवे चमसं समर्पयति। स च चमसं सदः प्रति हरति।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 9/11/9।

2- प्रशास्ता (मैत्रावरुणः) "मित्रं वयम्" (ऋ०वे०मा०सं० - 1/23/4) इत्यादिकां याज्यां पठित्वा वषट्करोति।

3- "सोमस्याग्ने वीहीत्यनुवषट्कारः सर्वासु सोमयाज्यासु" इति शाङ्खायनः - 7/3/5।

4- का० श्रौ० सू० - 9/11/10।

5- ब्राह्मणाच्छंसी "इन्द्रस्त्वा वृषभम्" (ऋ०वे०मा०सं० - 3/40/1) इत्यादिकां याज्यां पठित्वा वषट्करोति।

6- पोता "मरुतो यस्य" (ऋ०वे०मा०सं० - 1/86/1) इत्यादिकां याज्यां पठित्वा वषट्करोति।

ततो नेष्टृचमसमादायाभाव्य प्रत्यागाविते "नेष्टर्वदस्व" इति प्रेष्यति । नेष्टा[1] वषट्कृतेनुवषट्कृते च शेषं अनु जुहोति । ततोप उपस्पृश्य नेष्टृचमसात्कर्तृ चमसे समर्पयति । स च चमसं सदः प्रति हरति ।

ततोऽग्नीध्चमसमादायाभाव्य प्रत्यागाविते "अग्नीद्वद" इति प्रेष्यति । अग्नीधा[2] वषट्कृतेनुवषट्कृते च शेषं अनु जुहोति । ततोप उपस्पृश्य अग्नीध्चमसात्कर्तृ चमसे समर्पयति[3] । स च चमसं सदः प्रति हरति च ।

ततोऽध्वर्युः "तृम्पन्तु होत्राः[4]" इत्यादिकं मन्त्रं जपति ।

॥ द्विदेवत्यग्रहाः ॥

ततोऽध्वर्युः सदसि गत्वा "आग्नीध्र[5]" इति ब्रुवन् होतुः पुरस्तात् प्रत्यङ्मुख उपविशति । ततो[6] होताऽध्वर्यवे ऐन्द्रवायवग्रहं समर्पयति "इह वसुः पुरोवसुः" इति मन्त्रेण । अध्वर्युश्च "देवसुः पुरोवसुः[7]" इति मन्त्रेण तं प्रति-

- - - - - - - - - - - - - - - - - - - - - - - -

1- नेष्टा "अग्ने पत्नीः" [ऋ०सं० - 1/22/9] इत्यादिकां याज्यां पठित्वा वषट्करोति ।

2- अग्नीत् "उक्षान्नाय" [ऋ०सं० - 8/43/11] इत्यादिकां याज्यां पठित्वा वषट्करोति ।

3- देवयाज्ञिकस्तु अध्वर्युरेवाग्नीध्चमसं सदः प्रतिहरतीत्याह ।

4- मा० वा० शु० य० वे० म० सं० - 7/15.

5- तत्रैव । "आग्नीदित्युक्तेऽध्वर्युणाऽऽग्नीध्रः" इति शाङ्खायनः - 7/5/11.

6- "अपाः" इत्याग्नीध्रोक्ते होता "स प्रथमो नः सोमं पाययन्ति" इत्याह [शा० श्रौ० सू० - 7/4/12]

7- का० श्रौ० सू० - 9/11/18.

गृह्णाति । तत "होतरुपह्वयस्व" इति होतारं पृष्ट्वा तेन "उपहूतः" इत्यनुज्ञातो मुखस्य ढौकयित्वा "वाग्देवी"[1] इत्यादिना मन्त्रेण स्वयं भक्षयति[2] । ततो "इन्द्र मे गात्राणि"[3] इत्यादिकेन मन्त्रेण मुखादीन्यङ्गानि आलभते[4] । ततस्तथैव होता ऐन्द्रवायवग्रहं भक्षयति स्वशाखामन्त्रेण[5] । ततः पुनर्होतारमनुज्ञाप्याध्वर्युः पूर्ववदैन्द्रवायवग्रहं भक्षयति । ततो होता पूर्ववत् पुनर्भक्षयति । ततश्च मन्त्रावृत्त्या[6] द्विःशेषं होतृचमसेऽवनयति[7] । अध्वर्युरपि द्विःशेषं होतृचमसेऽवनयति । ततोऽध्वर्युरैन्द्रवायवग्रहे पुरोडाशस्य स्वल्पं खण्डं प्रक्षिपति ग्रहं निदधाति च ।

---

1- का० श्रौ० सू० - 9/11/19.

2- "निर्मोदिरेव द्विदेवत्येषु चैते" इति शाङ्खायनवचनात् [7/8/12] ऋतुयाजेषु द्विदेवत्येषु च सोमपानं नैव कर्तव्यम्, केवलं सोमस्योपघ्राणमेव कर्तव्यम् मुखे ग्रहं नीत्वा, अथवा सोमस्याघ्राणमेव कर्तव्यमिति देवयाज्ञिकपद्धतौ ।

3- का० श्रौ० सू० - 9/12/4.

4- चमसभक्षप्रकरणे कात्यायनेन प्रतिपादितमालम्भनमिदं कर्म ग्रहेऽपि देवयाज्ञिकेन योज्यते इति विवेचनीयं वैदिकैः ।

5- "उपहूतो वायुरिन्द्रवायू सह प्राणेन" इत्यादिको मन्त्रः शाङ्खायनेनोक्तः [7/5/1]

6- "द्विरैन्द्रवायवोऽवस्यावनयनं तत्राभ्यावर्तते मन्त्र" इति शाङ्खायनः [7/4/16]

7- मन्त्रश्च तेनैवोक्तः "हुते त्वा भक्षितमवनयाम्युर्वीस्वन्तं देवेभ्य आयुष्मन्तं महयम्" इति [7/4/15.

ततोऽध्वर्यवे होता मैत्रावरुणग्रहं समर्पयति[1]। अध्वर्युश्च "ऐतौ वसुर्विदद्वसुः[2]" इति मन्त्रेण गृहीत्वोपहूयानुज्ञातः कुशोदकेनेत्या "वाग्देवी" इत्यादिना मन्त्रेण भक्षयति। पूर्ववदङ्गालम्भनं करोति। ततः शेषं होतुरुपनयति। ततो होतापि भक्षणादिकं करोति[3]। ततोऽध्वर्युर्मैत्रावरुणग्रहे पयस्याया खण्डं कण्डं प्रक्षिप्य ग्रहं निदधाति।

ततो होताऽध्वर्यवे आश्विनग्रहं समर्पयति[4]। अध्वर्युश्च "ऐतु वसुः संयद्वसुः[5]" इति मन्त्रेण गृहीत्वोपहूयानुज्ञातः आश्विनग्रहं प्रदक्षिणं शिरः पर्याहृत्यैव पूर्वोक्तमन्त्राभ्यां भक्षणालम्भने करोति। ततः शेषं होतुरुपनयति। ततो होतापि भक्षणादिकं करोति[6]। ततोऽध्वर्युराश्विनग्रहे धानाः प्रक्षिप्य तं निदधाति।

ततः प्रतिप्रस्थाता ऐन्द्रवायवादिग्रहानादाय परिचरणेन हविर्धानमण्डपं प्रविश्य दक्षिणस्य हविर्धानस्य उत्तरे वर्त्मनि प्रत्यक्संस्थान् निदधाति।

---

1- "इह वसुर्विदद्वसुः" इति तस्यैव मन्त्रः [शा० श्रौ० सू० - 7/5/2]

2- का० श्रौ० सू० - 9/11/22.

3- "उपहूतो मित्रावरुणो सह प्राणा" इत्यादिको भक्ष मन्त्रः शाङ्खायनेनोक्तः [7/5/3]

4- "इह वसुः संयद्वसुः" इति तस्यैव मन्त्रः [शा० श्रौ० सू० - 7/5/5]

5- का० श्रौ० सू० - 9/11/22.

6- "उपहूतो देवाश्विनौ सह श्रोत्रेण" इत्यादिको भक्षमन्त्रः शाङ्खायनेनोक्तः [7/5/6]

॥ वनीयपुरोडाशप्रचारोपः ॥

ततोऽध्वर्युर्होतुरिडामवान्तरेडापामीगृह्य तां होत्रे ददाति । तत इडा-प्रतिग्रहणादिकं प्रकृतिवत् । इडोपह्वानकाले मयीदमिति मन्त्रानन्तरं यजमानोऽध्वर्यौ यथार्थं यमानुप्रयच्छन्ति । "उपहूते द्यावापृथिवी" इत्युच्यमानेऽग्नीध्रे यजमान-स्य तर्पणम् । इडोपह्वानान्ते होता अवान्तरेडां भक्षयति[1] ।

॥ शुक्रामन्थिग्रहहोमनिमित्तचमसभक्षः ॥

ततोऽध्वर्युः प्रतिप्रस्थातारं होतारं चोपहूयानुज्ञातो होतृचमसस्थं शुक्र-ग्रहशेषं "वाग्देवी" इत्यादिना मन्त्रेण भक्षयति "हिन्व मे गात्राणि" इत्यादि-ना मन्त्रेण गात्रालम्भनं च करोति । ततः प्रतिप्रस्थाताऽध्वर्युं होतारं चोपहूयानु-ज्ञातो होतृचमसस्थं मन्थिग्रहशेषं "वाग्देवी" इत्यादिना मन्त्रेण भक्षयति "हिन्व" इत्यादिना मन्त्रेण गात्रालम्भनं च करोति । ततो होताऽध्वर्युं प्रतिप्रस्थातारं चोप-हूयानुज्ञातः स्वशाखामन्त्रेण[2] शुक्रामन्थिग्रहशेषस्वचमसानां तन्त्रेण भक्षं करोति[3] । ~~शेषं~~ लशेषं स्वचमसे निदधाति च[4] ।

---

1- एतदनन्तरं यजमानस्य छन्दोगोक्ता तत्प्रार्थना भवतीति देवयाज्ञिकपद्धतौ ।

2- "तेजसे त्वा ब्रह्मवर्चसाय भक्षयामीति मन्त्रः प्रातःसवने, ओजसे त्वेन्द्रि-याय भक्षयामीति माध्यन्दिने, प्रजायै त्वा पुष्ट्यै भक्षयामीति तृतीयसवने" इति शाङ्खायनः [7/5/12-14]

3- "शं नो भव हृद इन्दो इत्युरोऽभिमर्शनी जपित्वा" इति शाङ्खायनः [7/5/15]

4- एतद्भक्षणं होतुः वषट्कारनिमित्तं समाख्यानिमित्तं चेति बोध्यम् ।

ततो ब्रह्मचमसमादाय ब्रह्माणमुपह्वानुज्ञातो मन्त्रेण होता ब्रह्मचमसं भक्षयति[1]। ततो ब्रह्मा होतारमुपह्वानुज्ञातः स्वचमसेन भक्षयति[2] शेषं खलु।

उद्गातारः स्वचमसमन्योन्यमुपह्वानुज्ञाता भक्षयन्ति[3] शेषं खन्तः।

ततो होता यजमानचमसमादाय युष्मन्मुखस्थेयुपह्वानुज्ञातो भक्षयति। ततो यजमानो होतारमुपह्वानुज्ञातः स्वचमसेन भक्षयति शेषं खलु।

ततो होता मैत्रावरुणचमसमादाय मैत्रावरुणमध्वर्युं चोपह्वानुज्ञातो भक्षयति। मैत्रावरुणश्च होतारमध्वर्युं चोपह्वानुज्ञातः स्वचमसेन भक्षयति शेषं खलु।

ततो होता ब्राह्मणाच्छंसिचमसमादाय ब्राह्मणाच्छंसिनमध्वर्युं चोप-ह्वानुज्ञातो भक्षयति। ब्राह्मणाच्छंसी च होतारमध्वर्युं चोपह्वानुज्ञातः स्वचमसेन भक्षयति शेषं खलु।

ततो होता पोतृचमसमादाय पोतारमध्वर्युं चोपह्वानुज्ञातो भक्षयति। पोता च होतारमध्वर्युं चोपह्वानुज्ञातः स्वचमसेन भक्षयति शेषं खलु

ततो होता नेष्टृचमसमादाय[4] नेष्टारमध्वर्युं चोपह्वानुज्ञातो भक्षयति। नेष्टा च होतारमध्वर्युं चोपह्वानुज्ञातः स्वचमसेन भक्षयति शेषं खलु।

---

1- एतद् वषट्कारनिमित्तं होतुर्भक्षणम्, एवमेवान्यत्रापि बोध्यम्।
2- एतद् समाख्यानिमित्तं ब्रह्मणो भक्षणम्, एवमेवान्यत्रापि बोध्यम्।
3- "तस्मादुद्गातृचमसं नान्यो भक्षयेत्" इति निषेधकवादनाभिप्रायेण वषट्-कर्तारं ततो नैव भक्षयतीति बोध्यम् [ला० श्रौ० सू० - २/५/१-३]
4- नेष्टृचमसभक्षणप्रतिपादनं विशाखगोडवल्यादितायां देवयाज्ञिकपद्धतौ [312 पृ०] त्रुटितमपि अस्माभिरत्र पूरितं बोध्यम्।

ततो होताऽग्नीध्रचमसमादायाग्नीध्रमध्वर्युं चोपहूयानुज्ञातो भक्षयति । अग्नीध्र होतारमध्वर्युं चोपहूयानुज्ञातः स्वचमसेन भक्षयति शेषं खानु ।

॥ पुनरभ्युन्नीतहोमनिमित्तचमसभक्षाः ॥

ततोऽध्वर्युः प्रशास्तृ-(मैत्रावरुण)-चमसमादाय होतारं प्रशास्तारं चोपहूयानुज्ञातो भक्षयति । प्रशास्ता होतारमध्वर्युं चोपहूयानुज्ञातः स्वचमसेन भक्षयति शेषं खानु ।

ततोऽध्वर्युर्ब्राह्मणाच्छंसिचमसमादाय होतारं ब्राह्मणाच्छंसिनं चोपहूयानुज्ञातो भक्षयति । ब्राह्मणाच्छंसी च होतारमध्वर्युं चोपहूयानुज्ञातः स्वचमसेन भक्षयति शेषं खानु ।

ततोऽध्वर्युः पोतृचमसमादाय होतारं पोतारं चोपहूयानुज्ञातो भक्षयति । पोता च होतारमध्वर्युं चोपहूयानुज्ञातः स्वचमसेन भक्षयति शेषं खानु ।

ततोऽध्वर्युर्नेष्टृचमसमादाय होतारं नेष्टारं चोपहूयानुज्ञातो भक्षयति । नेष्टा च होतारमध्वर्युं चोपहूयानुज्ञातः स्वचमसेन भक्षयति शेषं खानु ।

ततोऽध्वर्युरग्नीध्रचमसमादाय होतारमग्नीध्रं चोपहूयानुज्ञातो भक्षयति । अग्नीध्र होतारमध्वर्युं चोपहूयानुज्ञातः स्वचमसेन भक्षयति शेषं खानु ।

तत उन्नेता पूतभृतउदञ्चनेन सोममादाय सदस्यागच्छति । होत्रादयो

---

१- अत्राध्वर्योरभ्युन्नीतहोमनिमित्तं कार्यं पूर्ववदुक्तं कारसनाद्या- निमित्तं भक्षः एवमन्यत्रापि कार्यं बोध्यम् ।

शुक्रपात्रमादाय द्रोणकलशसमीपे दक्षिणत उपविशति । प्रतिप्रस्थातापि मन्थिग्रह-
पात्रमादाय द्रोणकलशसमीपे अध्वर्योरुत्तरत उपविशति । तत्राध्वर्युः "उपयाम-
गृहीतोऽसि शण्डाय त्वा [गृह्णामि][1]" इति मन्त्रेण द्रोणकलशात् सोमं शुक्रपात्रे
गृह्णाति । तत्समकालमेव[2] इति मन्त्रे प्रतिप्रस्थातापि "उपयामगृहीतोऽसि मर्क-
ाय त्वा [गृह्णामि][3]" इति मन्त्रेण द्रोणकलशात् सोमं मन्थिपात्रे गृह्णाति । उभौ
पात्रमार्जनं कुरुतः । प्रतिप्रस्थाता पात्रमाददान एवावतिष्ठते । अध्वर्युरुत्थाय
यजतिस्थानं गत्वाश्राव्य प्रत्याश्राविते "शुक्रा प्रेष्य[4]" इति मैत्रावरुणं प्रेष्यति ।
वषट्कृते[5] अध्वर्युः ग्रहस्थं सर्वं[6] सोमं पात्राग्रेण जुहोति[7] । तत्राध्वर्युर्विक्षानिष्कर्षं
प्रतिपाति ।

ततः प्रतिप्रस्थातोत्थाय निष्क्रम्य बहिः प्राप्य तमागच्छतोऽध्वर्यो-
र्दक्षिणतो ग्रहं नीत्वा स्वयं चोत्तरतो गत्वा[8] यजतिस्थानं प्राप्याश्राव्य प्रत्या-

---

1- मा० वा० शु० य० वे० म० सं० - 7/30.
2- का० श्रौ० सू० - 9/13/4.
3- मा० वा० शु० य० वे० म० सं० - 7/30.
4- का० श्रौ० सू० - 9/13/9.
5- मैत्रावरुणः "होता यक्षदिन्द्रं होत्रात् मधुर्दिवा पृथिव्या शुक्रा सोमं पिबतु होतर्यज" इति प्रेष्यति तदनन्तरं, होता च "ये यजामहे इन्द्रं होत्रात् मधु-र्दिवा पृथिव्या शुक्रा सोमं पिबतु वौषट्" इति याज्यां पठति ।
6- "सर्वहुतः प्रागुत्तमाभ्याम्" इति कात्यायनः [9/13/8]
7- "पात्रमुखे विपर्यस्य" [का०श्रौ०सू० - 9/13/10] इति वचनात् पूर्वं यद् ग्रहा पात्राग्रेण हूयन्ते तदपवादः पात्रमुखेन तयो नो पुनः पात्राग्रेण । तयोस्तु अनुवषट्कारो न भवति ।
8- का० श्रौ० सू० - 9/13/7.

मार्जिके "ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[1] प्रतिप्रस्थाता स्वं सोमं पात्राग्रेण जुहोति । ततः प्रतिप्रस्थाता दक्षिणनिष्क्रमणं प्रति याति ।

ततो दक्षिणनिष्क्रमणं प्रविष्टः "उपयामगृहीतोऽसि शुक्राय त्वा [गृह्णामि][2]" इति मन्त्रोच्चारणे द्रोणकलशात् सोमं गृहीतवानङ्कुरादिशं प्राप्नोति । ततः प्रतिप्रस्थाता स्वकीयं पात्रमध्वर्योर्दक्षिणतो नीत्वा स्वयमुत्तरतो याति[3] । ततोऽध्वर्युप्रतिप्रस्थातारौ प्राधावाभ्य प्रत्याधाको "ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[4] स्वं पात्राग्रेण जुहोति ।

ततः प्रतिप्रस्थाता "उपयामगृहीतोऽसि शुचये त्वा [गृह्णामि][5]" इति मन्त्रेण सोमं गृहीत्वाऽध्वर्युं पात्रेण परिगृह्य निष्क्रम्याधावय प्रत्याक्रिके "ऋतुना-प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[6] स्वं सोमं पात्राग्रेण जुहोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- मैत्रावरुणः "होता यक्षन्मरुतः पोत्रात् सुष्टुभः स्वर्का ऋतुना सोमं पिबन्तु पोतर्यज" इति प्रैषं पठति, पोता च "ये यजामहे मरुतः पोत्रात् सुष्टुभः स्वर्का ऋतुना सोमं पिबन्तु वौषट्" इति याज्यां यथाविधि पठति ।

2- मा० वा० शु० य० वे० म० सं० - 7/30.

3- का० श्रौ० सू० - 9/13/7.

4- मैत्रावरुणः "होता यक्षद्ग्नावी नेष्ट्रात् त्वष्टा सुजनिमा सजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतु नेष्टर्यज" इति प्रैषमाह, नेष्टा च "ये यजामहे ग्नावी नेष्ट्रात् त्वष्टा- - -सोमं पिबतु वौषट्" इति याज्यां पठति ।

5- मा० वा० शु० य० वे० म० सं० - 7/30.

6- मैत्रावरुणः "होता यक्षदग्निमाग्नीध्रादृतुना सोमं पिबत्वग्नीद् यज" इति प्रैषं पठति, अग्नीच्च "ये यजामहेऽग्निमाग्नीध्रात्- - -पिबतु वौषट्" इति याज्यां पठति ।

ततोऽध्वर्युः "उपयामगृहीतोऽसि नभसे त्वा [गृह्णामि]"[1] इति सोमं गृहीत्वा द्वारि प्रतिप्रस्थात्रा पात्रेण परिगृहीतो निष्क्रम्यावाक्य प्रत्यावर्तितो "ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[2] तं सोमं पात्राग्रेण जुहोति ।

ततः प्रतिप्रस्थाता "उपयामगृहीतोऽसि नभस्याय त्वा [गृह्णामि]"[3] इति सोमं गृहीत्वा द्वारि अध्वर्यु पात्रेण परिगृह्य निष्क्रम्यावाक्य प्रत्यावर्तितो "ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[4] तं सोमं पात्राग्रेण जुहोति ।

ततोऽध्वर्युः "उपयामगृहीतोऽसीषे त्वा [गृह्णामि]"[5] इति सोमं गृहीत्वा द्वारि प्रतिप्रस्थात्रा पात्रेण परिगृहीतो निष्क्रम्यावाक्य प्रत्यावर्तितो "ऋतुभिः प्रेष्य"[6] इति मैत्रावरुणं प्रेष्यति । वषट्कृते[7] पात्रमुखेन[8] तं सोमं जुहोति ।

---

1- मा० वा० शु० य० वे० म० सं० - 7/30.

2- मैत्रावरुणः "होता यक्षदिन्द्रं ब्रह्मणा ब्राह्मणादृतुना सोमं पिबतु ब्रह्मन् यज" इति प्रैषं पठति. ब्राह्मणाच्छंसी च" ये यजामह इन्द्रं ब्रह्मणस्- - -पिबतु सोमं वौषट्" इति याज्यां पठति ।

3- मा० वा० शु० य० वे० म० सं० - 7/30.

4- मैत्रावरुणः "होता यक्षन्मित्रावरुणा प्रशास्तारौ प्राशास्त्रादृतुना सोमं पिबतां प्राशास्त्रं यज" इति प्रैषं पठित्वा "ये यजामहे मित्रावरुणा- - -पिबतां वौषट्" इति याज्यां पठति ।

5- मा० वा० शु० य० वे० म० सं० - 7/30.

6- का० श्रौ० सू० - 9/13/10.

7- मैत्रावरुणः "होता यक्षद् देवं द्रविणोदां होत्रादृतुभिः सोमं पिबतु होतर्यज" इति प्रैषं पठति. होता च "ये यजामहे देवं- - -सोमं पिबतु वौषट्" इति याज्याह ।

8- का० श्रौ० सू० - 9/13/10.

ततः प्रतिप्रस्थाता "उपयामगृहीतोऽस्यूर्जे त्वा गृह्णामि[1]" इति सोमं गृहीत्वा द्वारि अध्वर्युं पात्रेण परिगृह्य निष्क्रम्यापराय प्रत्याक्रान्तो "ऋतुभिः प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[2] पात्रगतेन स्वं सोमं जुहोति ।

ततोऽध्वर्युः "उपयामगृहीतोऽसि नभसे त्वा गृह्णामि[3]" इति सोमं गृहीत्वा द्वारि प्रतिप्रस्थात्रा पात्रेण स्वपरिगृहीतो निष्क्रम्यापराय प्रत्याक्रान्तो "ऋतुभिः प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[4] पात्रगतेन स्वं सोमं जुहोति ।

ततः प्रतिप्रस्थाता "उपयामगृहीतोऽसि नभस्याय त्वा गृह्णामि[5]" इति सोमं गृहीत्वा द्वारि पात्रेणाऽध्वर्युं परिगृह्य निष्क्रम्यापराय प्रत्याक्रान्तो "ऋतुभिः प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[6] पात्रगतेन स्वं सोमं जुहोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० म० सं० - 7/30.

2- मैत्रावरुणः "होता यक्षद् देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबतु पोतर्यज" इति प्रैषं पठति, पोता च "ये यजामहे देवं- - -सोमं पिबतु वौषट्" इति याज्याम् ।

3- मा० वा० शु० य० वे० म० सं० - 7/30.

4- मैत्रावरुणः "होता यक्षद् देवं द्रविणोदां नेष्ट्रादृतुभिः सोमं पिबतु नेष्टर्यज" इति प्रैषं पठति, नेष्टा च "ये यजामहे देवं- - -सोमं पिबतु वौषट्" इति याज्याम् ।

5- मा० वा० शु० य० वे० म० सं० - 7/30.

6- मैत्रावरुणः "होता यक्षद् देवं द्रविणोदामग्नाद् होत्रादपात् पोत्रादपान्नेष्ट्रात् तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदाः पिबतु द्राविणोदसः । स्वयमागुराः स्वयमभिगूर्ताः स्वयमभिगूर्ताय होत्राय ऋतुभिः सोमस्य पिबत्व-च्छावाक यज" इति प्रैषं पठति, अच्छावाकश्च "ये यजामहे देवं- - - सोमस्य पिबतु वौषट्" इति याज्याम् ।

ततः प्रतिप्रस्थातापि दक्षिणेनाभिक्रम्य प्रविश्य द्रोणकलशादीयं ग्रहे-ऽध्वर्युः "उपयामगृहीतोऽसि तपसे त्वा [गृह्णामि][1]" इति सोमं गृह्णाति । तत्सम-कालेन प्रतिप्रस्थातापि "उपयामगृहीतोऽसि तपस्याय त्वा [गृह्णामि][2]" इति सोमं गृह्णाति । ततोऽध्वर्युरुत्थाय निष्क्रम्यासाद्य प्रत्याश्राविते "ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[3] शेषं ऋतु[4] पात्रेण[5] सोमं जुहोति ।

ततः प्रतिप्रस्थातापि निष्क्रम्यासाद्य प्रत्याश्राविते "ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[6] शेषं ऋतु पात्रेण सोमं जुहोति ।

ततः प्रतिप्रस्थाताऽध्वर्युपात्रे शेषमानयति । ततोऽध्वर्युः शेषसहितं स्व-पात्रं गृहीत्वा वेदिं गच्छति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2- मा० शा० शु० य० वे० मा० सं० - 7/30.

3 - मैत्रावरुणः "होता यक्षदश्विनाऽध्वर्यू अध्वर्य्यवाद्दतुना सोमं पिबेताम-ऽध्वर्यू यजतम्" इति प्रैषं पठति, ततः अध्वर्युप्रतिप्रस्थातारौ "होतरेतद्-यज" [का०श्रौ०सू० - 9/13/12] इत्याहतुः, ततो होता "ये यजामहे अश्विना- - - -सोमं पिबेतां वौषट्" इति याज्यां पठति ।

4- का० श्रौ० सू० - 9/13/8.

5 - "वषट्कृत्तमौ" इति कात्यायनः [9/13/11]

6 - मैत्रावरुणः "होता यक्षदग्निं गृहपतिं गार्हपत्यात् सुकृपतिः स्यादग्नेः सुन्वतु यजमानः स्यात् सुकृतिस्त्वमनेन सुन्वता यजमानेनाग्निर्गृह-पतिर्गार्हपत्याद्दतुना सोमं पिबतु गृहपते यज" इति प्रैषं पठति. ततो यजमानः "होतरेतद्यज" इत्याह, ततो होता "ये यजामहे अग्निं गृह-पतिं- - - -सोमं पिबतु वौषट्" इति याज्यां पठति ।

होमादिभ्यः समर्पयन्ति । होमादयश्च चमसानामभावादन्यपात्रेणैव शेषं अन्ती भक्षयित्वा चमसानाधापयन्ति ।

ततश्चमसाध्वर्यवः पुनरादित्यचमसान् नीत्वा दक्षिणानिकटे पूर्ववद् निदधाति ।

ततोऽध्वर्युः पात्रं धृतो निर्मृज्य मार्जालीये प्रक्षाल्य खरे स्वस्थाने स्थापयति ।

। वैश्वदेवग्रहग्रहणम् ।

ततोऽध्वर्युः शुक्रपात्रेण द्रोणकलशात् परिप्लवया सोममादाय "ओमास-श्चर्षणीधृतः"[1] इति मन्त्रेण वैश्वदेवग्रहं गृह्णाति[2] । ततो ग्रहं मार्ष्टि । ततः प्रदक्षिणावृत्तिमितरथावृत्ती च करोति । ततो ग्रहं शुक्रस्थाने सादयति[3] ।

ततो द्रोणकलशस्थं सर्वं सोमं पूतभृत्यासिच्य द्रोणकलश-पवित्रयोः पूर्ववद् योजनं करोति ।

। प्रथमाज्यस्तोत्रोपाकरणप्रउगशस्त्रादिकम् ।

ततोऽध्वर्युस्तुग्भ्यां वैश्वदेवग्रहमुद्धृत्य उद्गातृणां पुरस्तादुपस्थ समासीनो दर्भः प्रकीर्य प्रस्तोत्रे दत्त्वा समर्पयन् "उपावर्तध्वम्"[4] इति मन्त्रेण स्तोत्र-

---

1- मा० वा० शु० य० वे० मा० सं० - 7/33.

2- ग्रहं गृह्णन्तमध्वर्युं यजमानोऽन्वारभते न वा (का०श्रौ०सू० - 9/14/2)

3- अध्वर्युः स्तोत्रमात्रकलशोऽग्रहं गृहीत्वा स्तोत्रोपाकरणं यावन्नाप्याहरति ।

4- का० श्रौ० सू० - 9/14/5.

मुपाकरोति । तत उद्गातारो यथाविधि स्तुवन्ति ।

[ सवनीयपशुपुरोडाशस्य माध्यन्दिनसवनार्थसवनीयहविषां च निर्वापः ]

उद्गातृषु स्तुवत्सु अग्नीत्[1] सवनीयपशुपुरोडाशस्य माध्यन्दिनसवनार्थ-सवनीयहविषां च पश्चाद्वर्जितानां निर्वापं करोति । तत पात्रमार्जनान्तं कृत्वा विरमति ।

ततः प्रतिप्रस्थातुः[2] पशुविशसनादि उखायां पश्वङ्गानां प्रक्षेपं यावत् कर्म ।

ततोऽध्वर्युः "शिरः प्रच्यावयतात् शिरः प्रच्युतस्य तूष्णीमुत्तमं कुरुतात्" इत्येतावता कण्ठेन हविर्धानं याति ।

ततोऽध्वर्युः सदसि होतुः पुरस्तात् प्राङ्मुख उपविशति ।

उत्तमे प्रतिहारे[3] प्रस्तोता "एषा3" इत्युक्त्वा दीक्षितो होता "शों सावो3" इति अध्वर्युमभिह्वयति ।

---

1. "प्रतिप्रस्थाता सवनीयान्निर्वपति यथा केषाञ्चिद् सोमोपाकरणकाले हवि-ष्कृदाह्वयेतेति" इति मानवे इति देवयाज्ञिकभाष्ये - 9/14/5.
2. यद्यपि देवयाज्ञिकपद्धतौ "अध्वर्योः पशुविशसनादि" इत्युक्तं तथापि अध्वर्योः प्रतिगरे व्यापृतत्वादस्माभिः प्रतिप्रस्थातुः पशुविशसनादि प्रतिपादितम् । "स प्रातःसवन आलब्ध आतृतीयसवनाच्छ्रप्यमाण उपास्ते [शत०प०ब्रा० 4/2/9/13] इति, पुरोडाशेन प्रसङ्गे प्रतिपादिते "अथ पशुं विशासति" [तत्रैव - 3/8/3/3] इति च वचनं विचार्यापि पशुविशसनं क्रियते इति च बोध्यम् ।
3. ला० श्रौ० सू० - 2/6/11.

ततोऽध्वर्युर्होतारं प्रति आगत्य प्रतिगराय नम्रो भवति । ततो[1] होता प्रउगशस्त्रं[2] शंसति । ततोऽध्वर्युः पूर्ववत् प्रतिगीर्य उत्थाय[3] प्रदक्षिणावृत्ती-तथावृत्ती च करोति ।

( वैश्वदेवग्रहप्रचारः )

ततोऽध्वर्युः सव्येन गत्वा पूर्वद्वारेण हविर्धानमण्डपं प्रविश्य वैश्व-देवग्रहमादत्ते ।

यजमानोऽप्यत्र हविर्धानमण्डपमध्ये एव क्वापि स्थाने स्थितो कृताञ्जलिस्तिष्ठते ।

ततोऽध्वर्युर्निष्क्रम्य वजितवेदीं गत्वाऽऽग्नीध्र प्रत्याश्रावितो "उक्थशा यज सोमस्य" इति होतारं प्रेष्यति । वषट्कृते[4] अनुवषट्कृते च होमं स्वयं हुत्वा प्रद-क्षिणावृत्तीतथावृत्ती च करोति ।

यजमानोऽप्यत्र वषट्कृतेऽनुवषट्कृते च स्वहस्तस्थान् चमसान् प्रायः प्रेम्णैव कम्पयन्ति ।

---

1- शां० श्रौ० सू० - 7/10/1-15.
2- शां०ऋ०वे०ब्रा० - 1/2/1 - 1/3/12 (शां०श्रौ०सू० - 7/10/1-15)
3- देवयाज्ञिकपद्धतौ क्वचित् (338 पृ०) प्रदक्षिणावृत्तीतथावृत्ती कृत्वोत्थाना-नुक्तं क्वचिच्च उपविश्योत्थाय प्रदक्षिणावृत्तीतथावृत्ती उक्ते (341 पृ०). कर्मान्तरत्वमभियुक्ता जानीयुः ।
4- "विश्वेभिः सोम्यं मधु" (शां०ऋ०वे०ब्रा० - 1/14/10) इत्यादिकां याज्यां पठित्वा होता वषट् करोति ।

॥ वैश्वदेवग्रहभक्षः ॥

ततोऽध्वर्युः ग्रह एव सदसि गच्छति । ततो होतारमध्वर्युमुखानुगतो ग्रहोर्धं भक्षयति । होतापि अध्वर्युमुखानुगतो ग्रहोर्धं भक्षयति ।

॥ वैश्वदेवग्रहकर्मणि नित्यकनाराशंसभक्षणादिकम् ॥

चमसाध्वर्यवश्चमसानादाय दक्षिणेनात् सदसि गत्वा यथास्वं चमसिभ्यो होत्रादिभ्यः समर्पयन्ति । होत्रादयश्चानुपहूतैव स्वस्वचमसस्थं सर्वं सोमं भक्षयन्ति ।

ततश्चमसाध्वर्यवश्चमसान् मार्जालीये तत्स्थेन प्रक्षाल्य शुद्धान् कृत्वोत्तरवेदिश्रोणिदक्षिणांसस्थान् मैत्रावरुणचमसप्रथमान्[1] निदधति ।

अध्वर्युश्च ग्रहपात्रं मार्जालीये स्वयमेव प्रक्षाल्य खरे स्वस्थाने स्थापयति।

॥ प्रथमोक्थ्यग्रहणम् ॥

ततोऽध्वर्युरुक्थ्यपात्रमादायोक्थ्यस्थाल्या "उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा"[2] इत्यादिना मन्त्रेणोक्थ्यपात्रे स्थालीस्थसोमतृतीयांशमानयति । ग्रहं परिमार्ष्टि । ततः प्रदक्षिणावृत्तिरथावृत्ती करोति । ततस्तूष्णीमुक्थ्यस्थाल्या उत्तरतो ग्रहं सादयति ।

---

1- उन्नयने मैत्रावरुणचमसस्य प्राथम्यात् [का०श्रौ०सू० - 9/14/14] निधानेऽपि तस्यैव प्राथम्यं युक्तम्, एवं च मैत्रावरुण-होतृ-ब्रह्मोद्गातृ-यजमान-ब्राह्मणाच्छंसि-पोतृ-नेष्ट्रच्छावाकाग्नीध्रचमसाः क्रमेण निधेयाः ॥

2- मा० वा० शु० य० वे० मा० सं० - 7/23.

॥ मैत्रावरुणादिचमसोन्नयनम् ॥

तत उन्नेता पूतभृतः सोममुदञ्चनेनादाय मैत्रावरुणादिचमसेषु क्रमेण सकृत्सकृदेवोपनयति ।

॥ द्वितीयाज्यस्तोत्रोपाकरण-मैत्रावरुणशस्त्रादिकम् ॥

ततोऽध्वर्युर्ग्रहाभ्यामुन्नयनपात्रं स्पृष्ट्वा पुरस्तादुपान्ते सदसि गत्वा तृणं प्रस्तोत्रे प्रयच्छन् "उपावर्तध्वम्" इति द्वितीयाज्यस्तोत्रमुपाकरोति। तत उद्गातारो यथाविधि स्तुवन्ति । अध्वर्युर्मैत्रावरुणस्याग्रे प्राङ्मुख उपविशति।

उत्तमे प्रतिहारे प्रस्तोत्रा "एषा" इत्युक्ते स्थितो मैत्रावरुणः "शोंसावोऽ" इति अध्वर्युमभिह्वयति । ततोऽध्वर्युर्मैत्रावरुणं प्रति आवृत्य प्रतिगराय सज्जो भवति । ततो मैत्रावरुणः मैत्रावरुणशस्त्रं शंसति । ततोऽध्वर्युः पूर्ववत् प्रतिगरं उत्थाय प्रदक्षिणावृत्तितथावृत्ती च करोति ।

॥ प्रथमोक्थ्यविग्रहप्रचारः ॥

ततोऽध्वर्युः स्वमार्गेण गत्वा पूर्वद्वारेण दक्षिणनिष्कर्षं प्रतिपद्योक्थ्यपात्रमादत्ते । चमसाध्वर्यवश्च चमसानादाय प्राङ्मुखा उत्तरवेदिमभ्रेणावतिष्ठन्ते। ततोऽध्वर्युर्निष्क्रम्य यजतिस्थानं गत्वाश्राव्य प्रत्याश्राविते "उपस्मा स्व सोमानाम्"[2]

- - - - - - - - - - - - - - - - - - - - - - - -

शाङ्ख०
1- [illegible] श्रौ० सू० - 7/11/2-4.
शा० ऋ० वे० म० सं० - 3/62/16-18, 5/71/1-3, 5/68/1-5, 7/66/1-9.
2- का० श्रौ० सू० - 9/14/13.

"उपयामगृहीतोऽसीन्द्राय त्वा"[1] इत्यादिना मन्त्रेणोपयमयति । आर्तो तूष्णीं स्वस्थाने निधाय ग्रहं परिमार्ष्टि, प्रदक्षिणावृत्तितथावृत्ती च करोति । ततो ग्रहं तूष्णीमुपयम्यात्या उत्तरतः सादयति ।

## ॥ ब्राह्मणाच्छंस्यादिकर्मानुष्ठानम् ॥

तत उन्नेतोदञ्चनेन पूतभृतः सोममादाय ब्राह्मणाच्छंस्यादिकमेषु क्रमेण चमसचमसेषूपनयति ।

## ॥ तृतीयाज्यस्तोत्रोपाकरण-ब्राह्मणाच्छंसिशस्त्रशंसनादिकम् ॥

ततः प्रतिप्रस्थाता दर्भमुष्टिभ्यामुपयामकौ सोमं स्पृष्ट्वा पुरस्ताज्जे क्षो सदसि गत्वा प्रस्तोत्रे ते "इन्द्र प्रयच्छ" "उपावर्तध्वम्" इति तृतीयाज्यस्तोत्रमुपाकरोति । तत उद्गातारो यथाविधि स्तुवन्ति । प्रतिप्रस्थाता ब्राह्मणाच्छंसिनोऽग्रे प्राङ्मुख उपविशति ।

उक्थे प्रतिहारे प्रस्तोता "एषा" इत्युक्त्वा प्रैषो ब्राह्मणाच्छंसी "शो सावोऽ" इति प्रतिप्रस्थातारमभिमृशति । ततः प्रतिप्रस्थाता ब्राह्मणाच्छंसिनं प्रति आवृत्य प्रतिगराय सज्जो भवति । ततो ब्राह्मणाच्छंसी ब्राह्मणाच्छंसिशास्त्रं[2] शंसति । प्रतिप्रस्थाता पूर्ववत् प्रतिगीर्य उत्थाय दक्षिणावृत्तितथावृत्ती च करोति ।

---

1- मा० वा० शु० य० वे० मा० सं० - 7/23.

2- शाङ्ख० श्रौ० सू० - 7/12/1-4.
[शा०ऋ०वे०सं० - 8/17/1-13, 3/40/1-9, 8/93/1-3]

( द्वितीयोऽध्वर्युग्रहप्रचारः )

ततः प्रतिप्रस्थातोत्तरेण हविर्धानमुपनिगत्य पूर्वद्वारेण द्वितीयोऽध्व-पात्रमादत्ते । चमसाध्वर्यवश्च चमसानादायापरेणोत्तरवेदिं प्राङ्मुखा अवतिष्ठन्ते।

ततः प्रतिप्रस्थाता निष्क्रम्यातिक्रम्याश्राव्य प्रत्याश्राविते "उपक्षता यज सोमानाम्" इति ब्राह्मणाच्छंसिनं प्रेष्यति । वषट्कारे अनुवषट्कारे च शेषं स्वानु जुहोति, प्रतिक्रमावृत्तीतस्यावृत्ती च करोति ।

चमसाध्वर्यवश्च वषट्कारेऽनुवषट्कारे च शेषं स्वान्स्वचमसान् जुह्वति ।

( द्वितीयोऽध्वर्युग्रहभक्षचमसभक्षश्च )

ततः प्रतिप्रस्थाता ग्रहौ ब्राह्मणाच्छंसिचमसेऽध्वर्युपात्रं स्वे निधाय ब्राह्मणाच्छंसिचमसमादाय सदसि गच्छति । चमसाध्वर्यवोऽपि चमसानादाय सदसि गत्वा ब्राह्मणाच्छंसिनोऽग्रे चमसान् स्थापयन्ति ।

ततः प्रतिप्रस्थाता ब्राह्मणाच्छंसिनमनुज्ञाप्यानुज्ञातो ब्राह्मणाच्छंसि-चमसेन ग्रहशेषं भक्षयति । ब्राह्मणाच्छंसी च प्रतिप्रस्थातारमनुज्ञाप्यानुज्ञातः स्वचमसेन ग्रहशेषं भक्षयति । ततो ब्राह्मणाच्छंसी होत्रादीननुज्ञाप्यानुज्ञातो होत्रादिचमसान् भक्षयति क्रमेण । होत्रादयश्च ब्राह्मणाच्छंसिनमनुज्ञाप्यानुज्ञाताः क्रमेण स्वस्वचमसं निः-शेषं भक्षयन्ति । ततो ब्राह्मणाच्छंसी च प्रतिप्रस्थातारमनुज्ञाप्यानुज्ञातः पुनः स्वचमसं निःशेषं भक्षयति ।

---

1- शाङ्खा० श्रौ० सू० - 7/12/4 ("पन्तु ऋतुविदं सुतम्" इत्यादिकां ऋ०सं०-सं० - 3/40/2, याज्यां पठित्वा ब्राह्मणाच्छंसी वषट्करोति ।

ततश्चमसाध्वर्यवश्चमसान् ततो निर्गृह्य मार्जालीये तच्चमसेन प्राच्य गुहान् कृत्वोत्तरवेदिमध्येन अच्छावाक-होतृ-ब्रह्मोद्गातृ-यजमान-मैत्रावरुण-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-आग्नीध्रचमसान् क्रमेणोदक्संस्थान् निदधाति ।

॥ माध्यन्दिनसवनार्थं सोमोपावहरणादिकम् ॥

ततोऽध्वर्युरच्छावाकोऽन्यविग्रहात् पूर्ववत् पञ्चग्राव्णोऽधिषवणचर्मोपरि संहतान् निधाय सोमोपनहनमेव दक्षिणहविर्धानानस ईषयोरन्तरालेन ग्राव्णामुपरि सोममवतारयति ।

ततो वसतीवरीणामर्द्धं "श्रिये देवा मरुतः"[1] इत्यादिना मन्त्रेणाधवनीये-ऽवनयति । ततः प्रत्येकं मन्त्रावृत्त्या तेनैव मन्त्रेण एकधनानामपि अर्द्धमाधवनीये-ऽवनयति ।

॥ तृतीयोऽभिषवक्रमः ॥

ततः प्रतिप्रस्थातोपयाममादायोपस्थालीमुद्धृत्य च तत्स्थं सर्वं सोमम् "उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा"[2] इत्यादिना मन्त्रेणोपयामेऽवन-यति । ततः पूर्ववत् स्थालीनिधानादिकं करोति ।

॥ अच्छावाकादिचमसेषून्नयनम् ॥

तत उन्नेतोदञ्चनेन पूतभृतः सर्वं सोममादाय अच्छावाकादिचमसेषु

- - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 9/14/20.

2- मा० वा० शु० य० वे० मा० सं० - 7/23.

चमसाध्वर्यवश्च वषट्कारेऽनुवषट्कारे च शेषं स्वान्स्वान्‌ चमसान्‌ जुह्वति ।

॥ तृतीयोऽच्छावाकग्रहोपभक्षचमसभक्षश्च ॥

ततः प्रतिप्रस्थाता ग्रहशेषमच्छावाकचमसेऽवनीय ग्रहं निधायाच्छावाकचमसमादाय सदसि गच्छति । चमसाध्वर्यवोऽपि चमसानादाय सदसि गच्छन्ति अच्छावाकस्याग्रे चमसान्‌ निदधति च ।

ततः प्रतिप्रस्थाताऽच्छावाकमुपहूयानुज्ञातोऽच्छावाकचमसेन ग्रहशेषं भक्षयति । अच्छावाकश्च प्रतिप्रस्थातारमुपहूयानुज्ञातः स्वचमसेन ग्रहशेषं भक्षयति। ततोऽच्छावाको होत्रादीन्‌ क्रमेणोपहूयानुज्ञातः क्रमेण होत्रादिचमसान्‌ भक्षयति। होत्रादयश्च क्रमेणाच्छावाकमुपहूयानुज्ञाताः क्रमेण स्वं स्वं चमसं निःशेषं भक्षयन्ति। ततोऽच्छावाकोऽपि प्रतिप्रस्थातारमुपहूयानुज्ञातः पुनः स्वचमसं निःशेषं भक्षयति ।

ततश्चमसाध्वर्यवश्चमसान्‌ सदसो निर्हृत्य मार्जालीये सप्रजलेन प्राग्द-शुकान्‌ कृत्वा हविर्धानमण्डपे नीत्वा उत्तरहविर्धानानस्याधस्तात्‌ पूर्ववत्‌ निदधति ।

॥ प्रातःसवनान्तक्रमः ॥

ततोऽध्वर्युः स्फ्यमादाय "प्रस्तोतः प्रकुरु" इति प्रस्तोतारमाह ।

ततः प्रस्तोता "सर्पत" इति सर्वानृत्विजो निष्क्रमणायानुजानाति ।

तत सोमरक्षणादिव्यवस्थां कृत्वा सर्वे ऋत्विजो मुखार्थं निष्क्रामन्ति । इति प्रातःसवनम्‌ ।

---

1- "सवनेष्वाशु प्रस्तोत्रोक्ता यथेतमरत्न्या द्वारा निष्क्रम्य परिचमेनाग्नीध्रीये ऽविर्वेद मुखं कुर्युः" इति आप० श्रौ० सू० - 2/6/13.

( माध्यन्दिनसवनम्[1] )

यजमाना ऋत्विजो हिरण्योपस्थानादि[2] दधिघर्मादि[3] वा हिरण्याभिमन्त्रणान्तं वा सर्वं कुर्वन्ति ।

( सोमाभिषवः )

यथाधिकारमृत्विक्षु सदोहविर्धानेषु प्रविष्टेषु अध्वर्युर्होतृचमसे वसतीवरीरवनीय यजमानाय समर्पयति । सोमस्योष्णीषं ग्रावस्तुते समर्पयति ।

ततोऽध्वर्य्वादयः प्रातःसवनवदधिषवणं पर्युपविशन्ति । ततोऽभिषवोपयोगिवस्तूनां यथायथमीषान्तरेणानयनं कुर्वन्ति । ततः पाणिप्रक्षालन-हिरण्यबन्धन-ग्रावादान-आप्यायन-निग्राभ्यवाचन-सोमोन्मान-अभिमन्त्रणानि अध्वर्युः कुरुते । ततोऽन्येऽपि पाणिप्रक्षालन-हिरण्यबन्धन-ग्रावादानानि कुर्वन्ति ।

ततोऽध्वर्युर्निग्राभ्याभिर्निषिच्य सोमं चतुर्षु भागेषु विभजति । ततः सर्वे स्वे स्वे भागे "मा भेः" इत्यादिना मन्त्रेण प्रहृत्य तूष्णीं मनसाध्यायन्तः "हता३ हता३" इति मन्त्रेण प्रतिप्रहारमावृत्तेन सोममभिषुण्वन्ति[4] । ततः सोममुत्सृज्य द्वितीये पर्याये "हता हता"[5] इति प्रतिप्रहारमावृत्तेन मन्त्रेणाभिषुण्वन्ति । ततः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- प्रातःसवनविवरणेन सोमयागस्वरूपं भूम्नाधिगतमित्यतः प्रकृतिरूपेण प्रतिपादनं क्रियते ।

2-3- का० श्रौ० सू० - 9/6/18, 10/1/1, 9/9/1.

4- माध्यन्दिने सोमाभिषवे ग्रावस्तुत् सोमोपनहनेन मुखं परिवेष्ट्याभिष्टौति (का० श्रौ० सू० - 7/15/2-18)

5- का० श्रौ० सू० - 10/1/6.

च    अध्वर्योः स्फ्यादानम्, प्रस्तोतुरुद्गमनम्, चात्वाले तृणस्य प्रासनम्, दक्षिणोत्तरेण सदसि गमनम्, उद्गातॄणां स्वस्थाने समुपवेशनम्[1], तेषामुत्तो द्वितीयस्य तृणस्य प्रक्षेपः, अध्वर्युप्रतिप्रस्थातृयजमानानां प्रत्यङ्मुखानामुपवेशनम् . पुरस्ताज्जपे कृते "सोमः पवते" इति माध्यन्दिनपवमानस्तोत्रोपाकरणम् ।

स्तूयमाने प्रातःसवनदेवोऽग्नि तुः सोमसवनम् ।

प्रथमस्तोत्रसमये यजमानस्य अभ्यारोहजपोऽपि पूर्ववत् ।

॥ अग्निविहरणप्रैषादिकम् ॥

स्तोमान्ते अध्वर्युरित्थम् "अग्नीदग्नीन्विहर बर्हिः स्तृणीहि पुरोडाशानलङ्कुरु, प्रतिप्रस्थातर्दधिघर्माय दध्याहर दक्षिणा उपावर्तय" इति प्रैष्यति ।

ततोऽग्नीधः पूर्ववद् धिष्ण्येष्वग्निविहरणम्, बर्हिस्तरणम्, पुरोडाशालङ्करणादि कर्माणि जानन्तम् । ततो दधिघर्मादिहविरञ्जनं यथादैवतम् ।

॥ दधिघर्मयागः[2] ॥

ततः प्रतिप्रस्थाता सदोऽग्रे दधिघर्ममानयति । तत स्थोत्तरवेदिमपत्रेणासादनमारभ्यात्र । ततः सदसः पुरस्तादानीय शालापवित्रं स्थापयामग्निहोमहवन्यां "यावतीर्द्यावापृथिवी[3]" इत्यादिना मन्त्रेण वह्नौ निनयनं कुर्वन्नध्वर्युः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- लाट्या० श्रौ० सू० - 1/11/18-24; 2/3/10.

2- "दधिघर्मे दधिघर्मः" इति कात्यायनः 10/1/18.

3- मा०वा०सं०प०ऐ०म०सं० - 38/26 [का०श्रौ०सू० - 26/7/54-55] 38]. मा०श०प०ब्रा० - 14/3/1/30-31]

प्रेष्य" इति प्रेषणम्[1]। वषट्कृते होमः[2]। ततः समानीय निर्गमः। स्विष्टकृद्यागः[3] प्राशित्रावदानं ब्रह्मणे समर्पणं च। अथ उपहूतायेडाया अवदानं ऋत्विग्ब्रह्मभाग-यजमानभागानां च। सदो गत्वा इडाया होतृहस्ते निधानम्।

( चमसोन्नयनम् )

ततश्चमसोन्नयनं[4] प्रातः सवनवत्। किन्तु अच्छावाकचमसस्यापि सहैवोन्नयनमिति ज्ञात्वा चमसानामुन्नयनम्।

( शुक्रामन्थिग्रहप्रचारः )

ततः शुक्रामन्थिग्रहप्रचारः सवनहोमः प्रातःसवनवत्। तत्राच्छाव-केत्यादिवचनान्ते आनाय्य प्रत्याश्राविते "माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मधुश्चुत[5] इन्द्राय सोमान्प्रस्थितान्प्रेष्य" इति प्रैषं[6] इति विशेषः।

---

1- "होता यक्षदिन्द्रं हरिवाँ- - -माध्यन्दिनस्य सवनस्य पुरोडाशाँ- - -" इति मैत्रावरुणकर्तृकः प्रैषः (प्रैषाध्याये)

2- "ये यजामहे इन्द्रं हरिवाँ- - -माध्यन्दिनस्य सवनस्य पुरोडाशाँ- - -वेतु वौषट्" इति याज्या।

3- स्विष्टकृद्यागे "माध्यन्दिने सवने जातवेदः" इत्यादिका (आश्व०श्रौ०सू०-3/28/4) पुरोनुवाक्या, "होता यक्षदग्निं पुरोडाशानां जुषतां हविर्होतर्यज" इति मैत्रावरुणप्रैषः। याज्या प्रातःसवनवत्।

4- "असावि देवम्" इत्यादिकं सूक्तम् (ऋ०वे०सं० 7/21/1-10) उन्नीयमान सूक्तम्।

5- मधुश्चुत इत्यस्य स्थाने मन्थिवत इति वा प्रयोगः (का०श्रौ०सू० - 10/2/4)

6- "होता यक्षदिन्द्रं माध्यन्दिनस्य सवनस्य" इत्यादिकः प्रैषः (प्रैषाध्याये) "पिबा सोममभि" (ऋ०वे०सं० 6/17/1) इत्यादिका याज्या।

( पुनरभ्युन्नीतचमसहोमः )

चतुर्षु चमसेषु प्रख्यापितेषु अवशिष्टानामनुवषट्कारेऽहुतानां चमसानां मैत्रावरुणादिचमसानां द्रोणकलशात् सोममादाय तेषां चमसाध्वर्यवः पुनरभ्युन्नयनं कुर्वन्ति ।

ततोऽध्वर्युराश्राव्याश्राव्य प्रत्याश्राविते क्रमेण "होतृयज" "ब्राह्मणाच्छंसिन्यज" "पोतर्यज" "नेष्टर्यज" "अच्छावाक यज" "अग्नीद्यज" इति प्रेष्य प्रेष्य वषट्कृते वषट्कृते अनुवषट्कृतेऽनुवषट्कृते च जुहोति । ततः "तृप्यन्तु" इत्यादिमन्त्रस्य जपः पूर्ववत् ।

( सवनीयपुरोडाशप्रचारः )

ततोऽध्वर्युः सदसि गत्वा "अयाऽग्नीत्" इति ब्रुवन् होतुरग्रे उपविशति । ततो होता इडां समर्पयति । तत इडाप्रतिग्रहणादिकं प्रकृतिवत् । इडोपह्वानकाले चमसाध्वर्यवोऽपि यथार्थं चमसानुद्यच्छन्ति । इडोपह्वानान्ते होतावान्तरेडां प्राश्नाति ।

---

1- "स ईं पाहि" इत्यादिका (ऋ०वे०सं० - 6/17/2) मैत्रावरुणस्य "एवा पाहि" इत्यादिका तत्रैव (6/17/3) ब्राह्मणाच्छंसिनः, "अर्वाङेहि" इत्यादिका (तत्रैव - 1/104/9) पोतुः, "तवायं सोम" इत्यादिका (3/35/6) नेष्टुः, "इन्द्राय सोमाः" इत्यादिका (तत्रैव - 3/36/2) अच्छावाकस्य, "आपूर्णो अस्य" इत्यादिका अग्नीधो याज्या (आश्व० श्रौ० सू० - 7/17/6-11)

( ऊर्ध्वाभ्युद्धरणहोमनिमित्ताचमनम् )

ततः प्रातःसवनवदेव ऊर्ध्वाभ्युद्धरणहोमनिमित्ताचमनम् । अनाच्छावाकचमसस्यापि भक्ष इति विशेषः ।

( पुनरभ्युन्नीतहोमनिमित्ताचमनम् )

ततः पुनरभ्युन्नीतहोमनिमित्ताचमनमपि, प्रातः सवनवदेव । अत्र अच्छावाकचमसस्यापि भक्षणमिति विशेषः ।

( सवनीयपुरोडाशभक्षणादिकम् )

ततो ब्रह्मादीनामाग्नीध्रीये इडाभक्षणं यजमानस्य हविःशेषभक्षणं पत्न्या हविष्यभोजनं च प्रातःसवनवत् ।

ततः पत्नीः समस्य मार्जनम् । ततो भागपरिहारः । ततो दक्षिणाग्नौ पिष्टलेपाहुतिः, प्रणीताविमोकः, राक्षसभागप्रक्षेपः, सवनीयहविर्भागावेक्षणं सवनीयहविर्भागप्राशनं[1] च ।

( दक्षिणादानम् )

ततः शालायां गत्वा च ब्रह्मयजमानौ शालाद्वार्यं दक्षिणेनोपविशतः । ततोऽध्वर्युराज्यस्थाल्याः चतुर्गृहीतमाज्यं प्रचरण्यां गृहीत्वा यज्ञदक्षिणात्वेन दातुमुपक्लृप्ते वस्त्रे ताम्बूले हिरण्यं बद्ध्वा चतुर्गृहीतमध्ये गुप्यवहाय शालाद्वार्ये रुग्न-

---

1- सवनीयपुरोडाशभागप्राशनं तु अनुबन्ध्यान्ते (उदयनान्ते वा) भवतीति देवयाज्ञिकपद्धतौ ।

दाधानपूर्वकं चतुर्गृहीतमाज्यम् "उदुत्यम्"[1] इत्यादिना मन्त्रेण जुहोति, पुनश्चतुर्गृहीतं गृहीत्वा पूर्ववत् कृत्वा "चित्रं देवानाम्"[2] इत्यादिना मन्त्रेण चतुर्गृहीतमाज्यं जुहोति ।

ततः सर्वे आग्नीध्रीयं गच्छन्ति । तत्राध्वर्युः स्रुवगृहीतं गृहीत्वा वासः प्रान्तं हिरण्यमवधाय "अग्ने नय"[3] इत्यादिना मन्त्रेण समिद्धाधानपूर्वकमाज्यमाग्नीध्रीये जुहोति, पुनः स्रुवगृहीतं गृहीत्वा पूर्ववत् कृत्वा "अयन्नः"[4] इत्यादिना मन्त्रेण समिद्धाधानपूर्वकमाज्यं जुहोति ।

ततो यजमानस्तद् हिरण्यमादाय शालायाः पुरस्तात् तिष्ठन् वेदेर्दक्षिणतः स्थिता दक्षिणा गाः "रूपेण वो रूपम्"[5] इत्यादिना मन्त्रेणाभिमन्त्रयते ।

ततो गवां शतं च शालाद्वारयोरन्तरालेन नयनम्, नयोदन्तिकमायाणां च आग्नीध्राद् यजमानस्यानुगमनम् । तत उत्तरेण सदो दक्षिणेनाग्नीध्रीयं नीत्वा चात्वालोत्करान्तरेण नीत्वाग्नीध्रीयस्य पूर्वतः स्थापनम्[6] ।

ततो यजमान "वि स्वः पश्य व्यन्तरिक्षम्"[7] इति मन्त्रेण सदः प्रति गच्छति, "यतस्व सदस्यैः"[8] इति सदसि स्थितान् पुरुषान् प्रेक्षते । ततो "ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम्"[9] इति मन्त्रेणाग्नीध्रीयं गच्छति । तत्रोपविश्य "अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत"[10]

- - - - - - - - - - - - - - - - - - - - - - - -

1-5- मा० वा० शु० य० वे० मा० सं० - 7/41, 42, 43, 44, 45.

6 - अग्निमन्तरेण सुब्रह्मण्याह्वानं वा (का०श्रौ०सू० - 10/2/13)

7-10- मा० वा० शु० य० वे० मा० सं० - 7/45, 46.

इति मन्त्रेण अग्नीधे[1] हिरण्यं तिस्रो गाः वासो विभागमष्टविभागं[2] मध्यन्दिनक-
मार्धविभागं च दत्ते । पत्नी च "अहमपि ददे" इति अनुमतिं कुरुते ।

ततो यजमानो "ब्रह्मन्नद्य" इत्यादिना मन्त्रेण सदसः पुरस्तादुप-
विष्टमाग्नीध्रं प्रतिगच्छति । आग्नीध्रसमीप उपविश्य" "क आत्रेयः। कआत्रेयः। क
आत्रेयमन्नाद्यमन्नाग्नेयमन्नोद्देश्यमन्नोऽमृतमस्मान्यस्मोपधनम्[3]" इत्युक्त्वा दक्षिणा-
हिरण्याद्भिन्नं हिरण्यमादाय "अस्मद्राता देवत्रा गच्छत प्रदातार-
माविशत" इत्यनेनैव मन्त्रेण दत्ते । पत्नी च "अहमपि ददे" इत्युक्त्वानुमन्यते ।

ततो यजमानः सदसि गत्वा ब्रह्मणे, उद्गात्रे, होत्रे च क्रमोक्तेनैव
मन्त्रेण यथाभागं दक्षिणाः दत्ते । पत्नी च "अहमपि ददे" इत्युक्त्वानुमतिं कुरुते ।

ततो यजमानः पुनः सदसि गत्वा प्रस्तोत्रे, प्रशास्त्रे, ब्राह्मणाच्छंसिने,
पोत्रे, नेष्ट्रे, अच्छावाकाय, उन्नेत्रे, ग्रावस्तुते, सुब्रह्मण्याय चोक्तेनैव मन्त्रेण
क्रमेण दक्षिणाः दत्ते । पत्नी चानुमन्यते ।

ततो यजमानो यज्ञाङ्गभूतपरिकर्मिभ्योऽन्येभ्यश्चोपद्रष्टृभ्यः अश्रो-
त्रियात्मकथकप्रायमानभिन्नेभ्यः[4] सदः प्रसृप्तेभ्य आग्निष्टोमिकदक्षिणा-
द्रव्यव्यतिरिक्तं हिरण्यादिकं रजतभिन्नं किञ्चिद् द्रव्यं दत्ते । पत्नी चानु-
मन्यते ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - "तदग्नीधे प्रथमाय दक्षिणां ददाति" इति मा०श०प०ब्रा० - 4/3/4/20.
2 - "चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्वः" इति च तत्रैव -
4/3/4/7.
3-4- का० श्रौ० सू० - 10/2/20, 33-34.

ततो यजमानः प्रतिहर्त्रे चोक्तेनैव मन्त्रेण यथाभागं दक्षिणाः दत्ते ।
पत्नी चानुमन्यते ।

॥ मरुत्वतीयग्रहप्रचारः ॥

ततोऽध्वर्युर्ऋतुपात्रगृहीतं मरुत्वतीयग्रहमादाय "इन्द्राय मरुत्वतेऽनुब्रू-हि" इति मैत्रावरुणं प्रेष्यति[2] । ततो निष्क्रम्य यजमानस्थानं गत्वाश्राव्य प्रत्या-श्राविते "इन्द्राय मरुत्वते प्रेष्य" इति मैत्रावरुणमाह[3] । वषट्कृते[4] अनुवषट्कृते च शेषं सर्वं जुहोति ।

॥ माहामरुत्वतीयग्रहणम् ॥

ततोऽध्वर्युः पात्रं प्रतिप्रस्थात्रे समर्प्य हविर्धानमण्डपं प्रविश्य ऋतुपात्रे

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "यथारम्भं द्वादश द्वादशिभ्यः षड् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्र-स्तिस्र इतरेभ्यः" इति कात्यायनश्रौतसूत्रे [10/2/24] । तत्र ब्रह्मोद्-गातृहोत्रध्वर्यव आद्या ब्राह्मणाच्छंसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातारो द्वितीयाः, पोतृ-प्रतिहर्त्रच्छावाकनेष्टारस्तृतीयाः, अग्नीत्सुब्रह्मण्य ग्रावस्तुदुन्नेतारश्चतुर्थाः [का० श्रौ० सू० - 7/1/7]
2- "इन्द्र मरुत्वः" इत्यादिका [ऋ०सं०मं० - 3/51/7] पुरोनुवाक्या [आश्व० श्रौ० सू० - 7/19/2]
3- "होता यक्षदिन्द्रं मरुत्वन्तम्" इत्यादिकः प्रैषाध्यायोक्तः प्रैषः [आश्व० श्रौ० सू० - 7/19/3]
4- "सजोषा इन्द्र" इत्यादिका [ऋ० सं० मं० सू० - 3/47/2] याज्या [आश्व० श्रौ० सू० - 7/19/4]

द्रोणकलशात् पूतभृतो वा "मरुत्वन्तम्"[1] इत्यादिना मन्त्रेण मरुत्वतीयग्रहं गृहीत्वा परिमृज्य प्रदक्षिणावृत्तितश्चावृत्ती कृत्वा "एष ते योनिः"[2] इत्यादिना मन्त्रेण खरे आग्रयणस्थाल्याः पूर्वतः सादयति ।

॥ मरुत्वतीयग्रहोपक्रमः ॥

ततोऽध्वर्युः पूर्वद्वारेण निष्क्रम्य प्रतिप्रस्थातुर्हस्तात् मरुत्वतीयग्रहशेषं गृहीत्वा स्वान्वरेण सदो गत्वा होतारमनुज्ञाप्यानुज्ञातो मरुत्वतीयग्रहशेषं भक्षयति । होतापि अध्वर्युमनुज्ञाप्यानुज्ञातो भक्षयति । ततोऽध्वर्युः स्वयमेव पात्रं निर्णिज्य मार्जालीये प्रक्षाल्य नीत्वा हविर्धानमण्डपे खरे स्थापयति ।

॥ मरुत्वतीयशस्त्रशंसनम् ॥

ततोऽध्वर्युः पूर्वद्वारेण निष्क्रम्य स्वकान्वरेण सदसि गत्वा होतुः पुरस्तात् प्राङ्मुख उपविशति । होत्रा "अध्वर्यो शों सावो३म्"[3] इत्यभिहूतो होतारं प्रत्यावृत्य प्रतिगराय तत्परो भवति । होता मरुत्वतीयं शस्त्रं[4] शंसति । अध्वर्युर्यथाविधि प्रतिगीर्य शस्त्रान्ते उत्थाय प्रदक्षिणावृत्तितश्चावृत्ती च करोति ।

---

1- मा० वा० शु० य० वे० मा० सं० - 7/36.

2- ,, - 7/36.

3- शा० श्रौ० सू० - 7/19/6.

4- ,, - 7/19/5-25.

॥ महामरुत्वतीयग्रहप्रचारः ॥

ततोऽध्वर्युर्हविर्धाने गत्वा महामरुत्वतीयग्रहमादत्ते । प्रतिप्रस्थाता-ऽपि स्वस्य दिशि स्थापितं द्रोणकलशात् शुक्रतो वा "उपयामगृहीतोऽसि मरुतान्त्वौजसे (गृह्णामि)"[1] इति मन्त्रेण कु० मरुत्वतीयग्रहं गृहीत्वा पात्रं परिमृष्टे[2] । यजमानोऽध्वर्युश्च हविर्धाननिकटप्रदेशे एव प्राङ्मुखा यजमानमनुसरन्ति। ततोऽध्वर्युर्निष्क्रम्य यजतिस्थानं गत्वा आश्राव्य प्रत्याश्राविते "उक्थशा यज सोमस्य" इति प्रैष्यति[3] । वषट्कृते[4] अनुवषट्कृते च शेषं जुहोति प्रदक्षिणावृत्तीत्यावृत्ती च करोति । प्रतिप्रस्थातापि अध्वर्युमनुनिष्क्रम्य तमनु जुहोति[5] । यजमानोऽपि चमकम्पनं कुर्वन्ति ।

॥ महामरुत्वतीयग्रहभक्षः ॥

ततोऽध्वर्युप्रतिप्रस्थातारौ सोमौ ग्रहौ आदाय सदसि गच्छतः । ततोऽध्वर्युर्होता च परस्परमुपहूय महामरुत्वतीयग्रहशेषं भक्षयतः । प्रतिप्रस्थाता स्वानुहूयैकाकी कु० मरुत्वतीयग्रहशेषं भक्षयति[6] । ततस्तौ पात्रे मार्जालीये प्रक्षाल्य रक्षतः

---

1- मा० वा० शु० य० वे० मा० सं० - 7/36.

2- सादनमन्त्रस्यानाम्नातत्वात् कु० मरुत्वतीयस्य नासादनमिति करिष्यामीति देवयाज्ञिकपद्धतौ ।

3- का० श्रौ० सू० - 9/13/29.

4- "ये त्वाहिहत्ये" इत्यादिका (मा०वे०मा०सं० - 3/47/4) याज्या (का० श्रौ० सू० - 7/19/25)

5- का० श्रौ० सू० - 10/3/4-6.

6- एतत् सम्प्रदायपद्धतिकारमतेन. देवयाज्ञिकस्तु प्रतिप्रस्थातृहोत्रोः परस्परमुपहूय भक्षं न्याय्यं मन्यते ।

॥ महामरुत्वतीयग्रहहोमनिमित्तकनाराशंसभक्षणादिकम् ॥

चमसाध्वर्यवोऽपि चमसान् सदसि नयन्ति । चमसिनश्चानुपहूयैव स्वस्वचमसेन सोमं भक्षयित्वा चमसाप्यायनं कुर्वन्ति । ततश्चमसाध्वर्यवश्चमसान् हविर्धानमण्डपे स्थापयन्ति ।

॥ माहेन्द्रग्रहग्रहणम् ॥

ततोऽध्वर्युः शुक्रपात्रे द्रोणकलशात् परिप्लवया सोममादाय "महाँ इन्द्रो नृवत्"[1] इत्यादिकया पुरोरुचा माहेन्द्रग्रहं गृह्णाति[2] । ततः परिमार्जनम्, प्रदक्षिणावृत्तिरुपावृत्ती, "एष ते योनिः"[3] इत्यादिना मन्त्रेण ग्रहं स्थाने सादयति ।

ततोऽध्वर्युर्द्रोणकलशस्थं सर्वं सोमं पूतभृत्यासिञ्चति ।

॥ पृष्ठस्तोत्रोपाकरणम् ॥

ततोऽध्वर्युर्दर्भतृणाभ्यां माहेन्द्रं ग्रहमुपस्पृश्य सदसि गत्वोद्गातृभिः पुरस्तात्प्रत्यङ्मुखः प्रस्तोत्रे दर्भतृणे समर्पयन् "उपावर्तध्वम्" इति पृष्ठस्तोत्रमुपाकरोति ।

तत उद्गातारो यथाविधि पृष्ठस्तोत्रं गायन्ति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० मा० सं० - 7/39.
2- अत्र यजमानोऽध्वर्युमालभते विकल्पेन वैश्वदेवग्रहस्थानानिर्देशात्
(का० श्रौ० सू० - 10/3/11)
3- मा० वा० शु० य० वे० मा० सं० - 7/39.

मुकल्पनम्, प्रणीताप्रणयनम्, पात्रासादने - स्फ्याग्निहोत्रहवण्यौ, ादा कपालानि, कर्परः, पवस्थाली, शम्याकृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पिष्टान्तर्मुद्गं दधि च, शृताक्दानं मेक्षणं च, पुरोडाशपात्री, पन्धिकपात्री इति पदार्था आसाद्यन्ते । ततः स्फ्योपनिहितपात्रीस्थापनम्, हविर्ग्रहणं सादनान्तं यथादेवतम् । हविर्निर्वापमः कृत्वा पुत्राभ्यामेव पवित्राभ्यामुत्पवनम् । हविः प्रोक्षणम् । अवहननम् । अग्निष्ठानान्ते विभज्य ऐन्द्राग्नस्य ब्राह्मणस्य च, दधि सोमयेत्या- लम्भः, वषट्कृतानां च ऐन्द्राग्नस्य वरेण्य इन्द्रस्य पृथक्करणेति । पेषणादि- सेचनान्ते पुरोडाशार्थमिष्ट्यौः पूर्ववदालम्भः । इन्द्रस्यैकादशानां कपालानां ब्राह्मणस्यैकस्य कपालस्योपधानम् । उपर्यन्त्यधिश्रयणादग्न्यादिसमिन्धनान्तं सर्वं प्राशः स्वनमह् । शृताक्दान-मेक्षण-पन्धिकपात्री-पुरोडाशपात्रीणां सम्मार्गः । ततः समार्जनानामन्तीरके प्राशनम् । ततोऽग्नीदाग्नीध्रियस्य परिचक्षा आशिरं दधि मन्थति ।

## । निष्केवल्या ख्यातिम् ।

माहेन्द्रे प्रग्रमूढ स्तोत्रे समा पेठवर्णुरोत्तु: पुरस्तात् प्राङ्मुख उप- विशति । होता "अध्वर्यो शों सावोउ" इत्यभिमुखो होतारं प्रति आवृत्य प्रति-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

पूर्वानुवृत्तम्ग्रे . . . .

करम्भः, इन्द्राय हरिवतीकरो दधि [मा०श्रौ०प०सू० - 4/2/5/22, 4/2/5/17, का०श्रौ०सू० - 9/1/15-16, 10/3/19-20]

1- "पराचादाग्नीध्रीय आशिरं मन्थति; इति मानवश्रौतसूत्रवचनादेवं कार्यमिति देवयाज्ञिको भाष्ये पठती चाह ।

गत्वा तत्परो भवति । ततो होता यथाविधि निष्केवल्यशस्त्रं[1] शंसति । अध्वर्यु-र्यथाविधि प्रतिगरं कृत्वान्ते उत्थाय प्रदक्षिणावृत्तितथावृत्ती च करोति ।

॥ माहेन्द्रग्रहप्रचारः ॥

ततोऽध्वर्युर्होतृनिकटपे गत्वा माहेन्द्रग्रहमादत्ते । चमसाध्वर्यवश्च होतृनिकटपथा एव चमसानुद्यच्छन्ति । ततोऽध्वर्युर्निष्क्रम्य यजतिदेशे गत्वा-श्राव्य प्रत्याश्राविते "उक्थशा यज सोमस्य" इति प्रेष्यति[2] । वषट्कारे अनु-वषट्कारे च ग्रहं जुहोति प्रदक्षिणावृत्तितथावृत्ती च करोति । चमसाध्वर्य-वश्च चमसान् पूर्ववत् कम्पयन्ति ।

॥ माहेन्द्रग्रहभक्षः ॥

ततोऽध्वर्युर्माहेन्द्रग्रहशेषं गृहीत्वा सदसि गच्छति । अध्वर्युहोतारौ यथाविधि माहेन्द्रग्रहशेषं भक्षतः । ततोऽध्वर्युर्मार्जालीये ग्रहपात्रं प्रक्षाल्य खरे स्थापयति ।

॥ माहेन्द्रग्रहहोमनिमित्तकनाराशंसचमसभक्षणादिकम् ॥

चमसाध्वर्यवोऽपि चमसान् सदसि नयन्ति । चमसिनायानुपहूतेन स्व-

---

1- "एवमेतं पृष्ठं निष्केवल्यं, बृहद् वा" इति [शाङ्०श्रौ०सू० - 7/20/1-2] स्थितेः पृष्ठभेदेन निष्केवल्यशास्त्रस्यापि भेदो भवति । स च शाङ्०वायना-दिवचनात् [7/20/2-10] अवगन्तव्यः ।

2- "पिबा सोममिन्द्र" इत्यादिका [शाङ्०श्रौ०सू० - 7/22/1] याज्या [शाङ्० श्रौ० सू० - 7/20/11]

स्वकाले निःशेषं भक्षन्ति । तदनन्तरमध्वर्यवो मार्जालीये चमसान् प्रक्षाल्योत्तर-वेद्यन्तरेण मैत्रावरुणचमसप्रमुखान् होत्रादिचमसान् निदधाति ।

॥ उक्थ्यग्रहग्रहणादिकम् ॥

तदनन्तरमुक्थ्यग्रहाः प्रातःसवनवदेव । किन्तु तेषु उक्थ्यग्रहेषु ग्रहणमन्त्रस्तु "उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते"[1] इत्येव । प्रथमोक्थ्यग्रहे द्वितीयपृष्ठस्तोत्रस्य[2] गानम्, मैत्रावरुणशस्त्रस्य[3] शंसनम्, द्वितीयोक्थ्यग्रहे तृतीय-पृष्ठस्तोत्रस्य[4] गानम्, ब्राह्मणाच्छंसिशस्त्रस्य[5] शंसनम्, द्वितीयोक्थ्यग्रहप्रचारान्ते "इदन्तृतीयं सवनम्"[6] इत्यादिना मन्त्रेण मन्त्रावृत्त्या वसतीवरीशेषस्य एकधन-शेषाणां वाथकीये आसेचनम्, तृतीयोक्थ्यग्रहे चतुर्थपृष्ठस्तोत्रस्य गानम्, अच्छा-[7]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० मा० सं० - 7/22।
2- रथन्तरपृष्ठे बृहत्पृष्ठे चैकमेव गानं कौथुमानाम् [जैमिनीयानां द्वितीय-पृष्ठस्तोत्रमिदं भिन्नम्]।
3- मैत्रावरुणशस्त्रं रथन्तरपृष्ठे बृहत्पृष्ठे च समानमेव [शां०श्रौ०सू० 7/22/1-5] "आन्तु भः" [शा०ऋ०सं० 4/20/4] इति याज्या [शां०श्रौ०सू० - 7/22/6]
4- रथन्तरपृष्ठत्वे बृहत्पृष्ठत्वे च तृतीयपृष्ठस्तोत्रे भेदो भवति, नोक्थे रथन्तरपृष्ठे इत्येवं बृहत्पृष्ठे [शां०श्रौ०सू० - 7/23/1-2]
5- पृष्ठभेदेन ब्राह्मणाच्छंसिशस्त्रस्वरूपं भिद्यते, तच्च शां०श्रौतसूत्रानुसारम् [7/23/1-8] वेदितव्यम्, "ऋजीषी वज्री" इत्यादिका [शा०ऋ०सं० - 5/40/4] याज्या ।
6- का० श्रौ० सू० - 10/5/22।
7- अच्छावाकशस्त्रं रथन्तरपृष्ठे बृहत्पृष्ठे च समानमेव [शां०श्रौ०सू० 7/24/1-5]। "पिबा वर्धस्व" इत्यादिका [शा०ऋ०सं० 3/36/3] याज्या [शां० श्रौ०सू० 7/24/6]

वाचा तस्य कीर्तनं च भवति । तत्र स्तोत्रेषु शस्त्रेषु च प्रातःसवनस्तोत्रेभ्यो भिन्नता भवति । याज्यासु च ।

माध्यन्दिनसवनान्तेऽध्वर्योः "प्रशास्तः प्रसुहि" इति प्रैषः, ततः प्रशास्ता "सर्पत" इति सर्वानृत्विजो निष्क्रमणायानुजानाति[1] ।

ततः सोमरक्षणादिव्यवस्थां कृत्वा[2] सर्वेऽपि ऋत्विजो यजमानश्च निष्क्रामन्ति ॥ इति माध्यन्दिनसवनम् ॥

## ॥ तृतीयसवनम्[3] ॥

### ॥ अध्वर्य्वादीनां हविर्धाने प्रवेशः ॥

अथाध्वर्युः "एहि यजमान" इत्याह । ततोऽध्वर्युयजमानप्रतिप्रस्थात्राग्नीध्रोन्नेतारः पूर्वद्वारेण हविर्धानं प्रविशन्ति । पत्नी चापरेण द्वारेण । तत्र च उभयोर्हविर्धानद्वारयोः पिधानम् ।

ततोऽध्वर्युः पूतभृत उपरि सव्यहस्तेनादित्यपात्रमादाय दक्षिणहस्तेना-

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 9/14/22-23, 10/3/24;

2- "सोमातिरेकं रक्षेत्" इति काण्वे इति देवयाज्ञिकपद्धतौ (का०श्रौ०सू० - 9/14/20)

3- यद्यपि "ते सर्पन्त एव माध्यन्दिने सवने पुरा तृतीयसवनादेतमुद्युः" इति (मा०श०प०ब्रा० 4/3/5/2) श्रुतेरादित्यग्रहहोमात् प्रागेव तृतीयसवनारम्भः प्रतीयते, तथापि "अंशवादि माध्यन्दिनम्" (10/1/1) इति सूत्रकृतापि सूत्रकारेण तृतीयसवने तस्याऽनुक्तित्वात् अतृतीयसवनमिति व्यवहारः नादित्यग्रहहोमस्यैव तृतीयसवनत्वमिति विज्ञायते ।

दित्यस्थाल्याः शृतं सोमं "कदाचन स्तरीरसि"[1] इत्यादिना मन्त्रेणावनयति । तत आदित्यपात्रं धारासोपगृह्य "कदाचन प्रयुच्छसि"[2] इत्यादिना मन्त्रेण पुनः पात्रं धारायां नयति स्थाल्यां शेषं च करोति । ततो "यज्ञो देवानाम्"[3] इत्यादिना मन्त्रेण ग्रहस्य मध्ये परिप्लवे प्राप्ते वा गोक्षीरेण दध्ना श्रीणाति । ततः "विवस्वन्नादित्य"[4] इत्यादिना मन्त्रेण उपांशुसवनेन ग्राव्णा सोमं दधि च व्याङ्वानयति ।

ततोऽध्वर्युरन्यैः उपांशुसवनग्रावाणं सम्मर्शयन् "आसन्ना ग्रावाणः" इत्याह ।

तत उन्नेता यच्चापि ग्राव्णो यत्नेनाधकीर्णं तदस्याय निष्कासयाधि-षवणचर्मणि निदधाति । अथवा यतो ग्रावकर्णीयात् सोमांशुरपि यतो ग्राव्णो-द्धाय निष्कासयाधिषवणचर्मणि निदधाति ।

ततोऽध्वर्युः परिमार्ष्टि, पाणिनादित्यस्थाल्या वा ग्रहं पिदधाति।

ततो धारयोद्धारितयोऽध्वर्युयजमानौ उत्तरवेदिं प्रति निष्क्रामतः । ततो यजतिस्थानं प्राप्य यजमानेनान्वारब्धोऽध्वर्युः "आदित्येभ्यः प्रियेभ्यः[5] प्रियधामभ्यः प्रियव्रतेभ्यो महस्स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षे-भ्योऽनुब्रूहि" इत्याह[6] । अनुवक्ते होताऽपुरोवाक्या प्रत्याश्राविते "आदित्ये-

---

1-4- मा० वा० शु० य० वे० मा० सं० - 8/2, 3, 4, 5।

5 - प्रैषार्थे वा एतानि विशेषणानि योज्यानि (का०श्रौ० - 10/6/10)

6 - "आदित्यानामवसा" इत्यादिका (ऋ०वे०मं०सू०ऋ० - 7/51/1)
पुरोनुवाक्या (आश्व०श्रौ०सू० - 8/1/4)

ष्य: "प्रेष्य" इति मैत्रावरुणं प्रेष्यति । वषट्कृते[1] शेषं सह जुहोति । ततो ग्रहशेष-स्थालीशेषौ प्रतिप्रस्थाता संपर्चति ।

ततः यजमानाः सर्वे ऋत्विजो[2] भक्ष्योपस्थानादि सदोविसर्पणादि वा कर्म कुर्वन्ति ।

॥ आग्रयणग्रहग्रहणादिकम् ॥

ततो यथाधिकारमृत्विजो हविर्धानमण्डपं प्रविशन्ति । ततः प्रतिकर्ता पूतभृतं च पवित्रेण समार्ष्टि । तत उद्गातारः पूतभृदुपरि पवित्रं वितन्वन्ति । ततोऽध्वर्युराग्रयणस्थालीस्थं सोमं पात्रान्तरे कृत्वा तत्पात्रं सव्येनादत्ते आग्रयण-स्थालीं दक्षिणेन पूतभृत उपरि आदत्ते । ततोऽध्वर्युः सव्यहस्तस्थेन पात्रेण सोमं पूतभृत उपरि वितते पवित्रे सन्ततधारया आसिञ्चति, प्रतिप्रस्थाता आदित्यग्रह-मेकेन हस्तेन आदित्यस्थालीमन्येनादाय ताभ्यां सन्तताभ्यां धाराभ्यां पवित्रे सोम-मासिञ्चति, उन्नेता आधवनीयादुदञ्चनेन सोममादाय धारया पवित्रे आसिञ्चति, अध्वर्युश्च ताभ्यामसंसृष्टाभ्यां धाराभ्यां[3] दक्षिणहस्तधृतायामाग्रयणस्थाल्यां "ये देवासः"[4]

---

1- "होता यक्षदादित्यान् प्रियान्" इत्यादिकः प्रैषः [प्रैषाध्याये] [का० श्रौ० सू० - 8/1/5], "आदित्यासो अदितिर्मादयन्ताम्" [मा० शु० य० वे० मा० सं० - 7/51/2] इत्यादिका याज्या [का० श्रौ० सू० - 8/6/6]
2- प्रतिप्रस्थातापि आदित्यग्रहशेषमादित्यस्थालीशेषौ धारयन् कस्मैचिच्चम-साध्वर्यवे परिकर्मिणे वापि दत्त्वा कर्म करोति ।
3- का० श्रौ० सू० - 10/5/1-4.
4- मा० वा० शु० य० वे० मा० सं० - 7/19.

इत्यादिना मन्त्रेणाग्रयणग्रहं गृह्णाति । ततो वायव्येनाग्रयणस्थालीमपि गृह्य हिङ्कारादि । प्रतिप्रस्थात्रादीनां वायुविसर्जनम् । परिमार्जनं सादनं च ।

ततोऽध्वर्युः "आशीर्म ऊर्जम्"[1] इत्यादिना मन्त्रेण पुत्रमुत्थाय शिर-मभिजिघ्रति ।

ततः पत्नी "भद्रस्त्वे नरः"[2] इत्यादिना मन्त्रेण पुत्रमुपमार्ष्टि ।

। विप्रुड्ढोमादिकम् ।

ततः पाणिप्रक्षालनम्, समन्वारब्धानां निष्क्रमणम्, विप्रुड्ढोमः, अध्वर्योर्दक्षिणादानम्, उपविष्टानां सर्पणम्, गृहीत्वा स्रुचौ एकस्य चात्वाले प्रक्षेपः, सदसि गमनम्, उद्गातॄणां स्वस्थाने उपवेशनम्, समन्वारम्भविसर्गः ।

। आर्भवपवमानस्तोत्रोपाकरणादिकम् ।

ततोऽध्वर्युरुद्गातृणामग्रतस्तूष्णीं तिर्यक् कुशं प्रक्षिपति । तत उद्गातृभिः पुरस्ताज्जपे कृतेऽध्वर्युर्दर्भग्रहो वा कुशमुष्टिं वा प्रयच्छन् किमप्यप्रयच्छन्नेव वा "सोमः पवते" इति आर्भवपवमानस्तोत्रमुपाकरोति । उद्गातार आर्भवपवमानस्तोत्रं यथाविधि गायन्ति ।

अध्वर्युप्रतिप्रस्थात्रुन्नेतार उद्गातॄणां पूर्वतः प्रत्यङ्मुखा उपविशन्ति । ब्रह्मापि प्रस्तोतारं दक्षिणेनोपविशति ।

---

1- का० श्रौ० सू० - 10/5/6.
2- मा० वा० शु० य० वे० मं० सं० - 8/5.

पूतभृत एवोन्नयनं करोति ।

उन्नीयमानसूक्तानुवचनान्ते यजमानः "अचिक्रन्दन्" इत्यादिकं मन्त्रं जपति ।

( सवनमुखचमसहोमः )

ततोऽध्वर्युर्होतृचमसमादत्ते । चमसाध्वर्यवश्चान्यान् चमसान् गृह्णन्ति।

ततोऽध्वर्युराश्राव्य प्रत्याश्राविते "तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो विश्वदेव्यावतस्तीव्रवत आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्य"[1] इति मैत्रावरुणं प्रेष्यति[2] । वषट्कृते[3] शेषं सदस्यन्ये जुह्वति, अनुवषट्कृते च महर्त्विजः चमसयजमानचमसान् ।

ततोऽध्वर्युः "प्रैतु होतुश्चमसः - - -होत्रकाणां चमसाध्वर्यव उपावर्तध्वमाशीर्भिरुन्नयध्वम्"[4] इत्याह ।

ततो होत्रादिचमसान् सदसि नयन्ति । होत्रकाणां चमसाध्वर्यव प्रात्रादिचमसेषु आशीर्भिः पूतभृत एवोन्नयनं कुर्वन्ति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० सू० - 10/5/13.

2- "होता यक्षदिन्द्रं तृतीयस्य सवनस्य" इत्यादिकः (प्रैषाध्यायोक्तः) होतृचमसादिप्रैषः ।

3- "इन्द्र ऋभुभिः" इत्यादिका (शु० य० वे० मा० सं० - 3/60/5) याज्या (शत० श्रौ० सू० - 3/2/5)

4- का० श्रौ० सू० - 9/11/5, 10/5/15.

[ऋतुग्रहोन्नीतद्विदेवत्यभक्षप्रचारः]

ततोऽध्वर्युः प्रशास्तृचमसमादायाश्राव्य प्रत्याश्राविते "प्रशास्तर्यज" इति प्रेष्यति। वषट्कृते[1] अनुवषट्कृते च शेषं स्वयं जुहोति। चमसं सदसि प्रख्यापयति च।

एवमेवाध्वर्युः "ब्राह्मणाच्छंसिन्यज"[2] "पोतर्यज"[3] "नेष्टर्यज"[4] "अच्छावाक यज"[5] "आग्नीध्र यज"[6] इति प्रेष्यन्प्रेष्यन् वषट्कारे वषट्कारे अनुवषट्कारेऽनुवषट्कारे च ब्राह्मणादिचमसानादायादाय शेषान् स्वयं जुह्वाजुह्वा सदसि प्रख्यापयति। ततोऽध्वर्युरुपविश्य "तृम्पन्तु" इत्यादिकं मन्त्रं जपति।

[ सवनीयपुरोडाशप्रचारोपः ]

ततोऽध्वर्युः सदसि गत्वा "आगन्नग्नीत्" इति ब्रुवन् होतुरग्रे उपविशति।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "इन्द्रावरुण सुतपाविमं सुतम्" इत्यादिका [ऋ०वे०सं० - 6/68/10]
मैत्रावरुणस्य याज्या।

2- "इन्द्रश्च सोमम्" इत्यादिका [ऋ०वे०सं० - 4/15/10]
ब्राह्मणाच्छंसिनो याज्या [आ०श्रौ०सू० - 8/2/7]

3- "आ वो वहन्तु" इत्यादिका [ऋ०वे०सं० - 1/85/6]
पोतुर्याज्या [आ०श्रौ०सू० - 8/2/8]

4- "अमेव नः" इत्यादिका [ऋ०वे०सं० - 2/36/3]
नेष्टुर्याज्या [आ०श्रौ०सू० - 8/2/9]

5- "इन्द्राविष्णू पिबतम्" इत्यादिका [ऋ०वे०सं० - 6/69/7]
अच्छावाकस्य याज्या [आ०श्रौ०सू० - 8/2/10]

6- "इमं स्तोमम्" इत्यादिका [ऋ०वे०सं० - 1/94/1]
आग्नीध्रो याज्या [आ० श्रौ० सू० - 8/2/11]

ततो होत्रे इडां समर्पयति । तत इडाप्रतिग्रहणादिकं प्रकृतिवत् । इडोपह्वकाले चमसाध्वर्यवोऽपि चमसं चमसानुयच्छन्ति । इडोपह्वानान्ते होतावान्तरेडां भक्षयति ।

॥ सवनमुखचमसभक्षनिमित्तचमसाख्याः ॥

ततोऽध्वर्युर्होतारमुपह्वानुज्ञातो होतृचमसं भक्षयति होता चाध्वर्युमुपह्वानुज्ञातः । ततो होता ब्रह्मादिचमसानुपहोतृचमसवर्जितान् तत्तच्चमसमुपह्वानुज्ञातः क्रमेण भक्षयति पुनरभ्युन्नीतान् होतृचमसात् अध्वर्युमुपहूय भक्षयति । उद्गातारः स्वचमसमन्योन्यमुपह्वानुज्ञाता भक्षयन्ति शेषं सन्तः । ब्रह्मादयः स्वस्वचमसान् होतारमुपह्वानुज्ञाता भक्षयन्ति शेषं सन्तः । होतापि अध्वर्युमुपहूय स्वचमसं पुनर्भक्षयतीत्येवं स्यात् । प्रशास्त्रादय होतारमध्वर्युं चोपह्वानुज्ञाताः स्वस्वचमसं भक्षयन्ति शेषं सन्तः ।

॥ पुनरभ्युन्नीतहोतृचमसभागनिमित्तचमसाख्याः ॥

ततोऽध्वर्युर्होतारं प्रशास्त्रादींश्चोपह्वानुज्ञातः क्रमेण प्रशास्त्रादिचमसान् भक्षयति । ततः प्रशास्त्रादयो होतारमध्वर्युं चोपह्वानुज्ञाताः स्वं स्वं चमसं भक्षयन्ति शेषं सन्तः ।

ततः सर्वेषां चमसानां पूर्ववदाप्यायनम्, दक्षिणहविर्धानानसोऽक्षस्य परिवप्तौ निधानं च ।

॥ पुरोडाशशकलपिण्डदानम् ॥

ततश्च यजमानाः षोडशर्त्विजः पुरोडाशशकला आदाय दक्षिणा-

मण्डपे स्वयमाग्निध्रो[1] यजमानपितृपितामहप्रपितामहेभ्यो नामगोत्राभ्यां नीवि-
कर्षणपूर्वं तेषो कुशमयान्तर्धानप्रदेशे जलसहिताञ्जल्या दक्षिणतो पितृयज्ञवत् पिण्ड-
दानं कुर्वन्ति । ततः "अत्र पितरः" इत्यादिजपः, आवृत्योदङ्मुखानामासनम्,
पर्यावृत्य "अमीमदन्त" इत्यादिजपः । ततो नीविविस्रंसनम् । अञ्जलयः ।
गृहान्नः" इत्यादिजपः ।

॥ सवनीयपुरोडाशभक्षणादिकम् ॥

ततो ब्रह्मणोऽध्वर्युराग्नीत्प्रभृतयो होतार आग्नीध्रीये इडां भक्षयन्ति ।
यजमानोऽपि पुरोडाशादिकं शेषं भक्षयति । पत्नीशाले पत्न्यपीदानीमेव
हविश्शेषं भुङ्क्ते[2] । ततः समस्य मार्जनम्, प्रस्तरे पवित्रकरणम्, भागमार्जनम्,
शाखायाश्च आहवनीये प्रहरणम्, अध्वर्योराज्यलेपः, पिष्टलेपाहुतिः, प्रणीता-
विमोकः, हतभागसम्प्राशनम्, सवनीयभागाशनम्, भागप्राशनम्, अध्वर्योः
प्रक्षालनम् ।

॥ सावित्रग्रहस्य ग्रहणं प्रचारश्च ॥

ततोऽध्वर्युर्हविर्धाननिकटं प्रविश्य उपांशुपात्रेऽन्तर्यामपात्रे वा[3] आग्रयण-

---

1- "येषामृत्विजां यजमाना न सन्ति ते सन्निहितचमसे पिण्डदानं कुर्वन्ति, यथा नेष्टृचमसेऽध्वर्य्वादयः, होतृचमसे ग्रावस्तुत्, उद्गातृचमसे सुब्रह्मण्यः" इति देवयाज्ञिकपद्धतौ ।

2- "पत्नी हविश्शेषं भुङ्क्ते इति कठसूत्रेणापि सूचनात्" इति देवयाज्ञिकभाष्ये [का० श्रौ० सू० - 10/5/13]

3- का० श्रौ० सू० - 10/5/16.

ध्यायति:[1] "वाममद्य"[2] इत्यादिना मन्त्रेण सावित्रग्रहं गृह्णाति, परिमार्ष्टि. "देवाय सवित्रेऽनुब्रूहि"[3] इति अनुवाचयति, निष्क्रम्याश्रुत्याश्राव्य प्रत्या-श्राविते "देवाय सवित्रे प्रेष्य" इति प्रेष्यति च । वषट्कृते[4] जुहोति ।

। वैश्वदेवग्रहग्रहणम् ।

ततोऽध्वर्युः सावित्रग्रहणपात्रमादाय कलशान्निष्कृष्य प्रविश्य तेनैव पात्रेण पूतभृतः सकाशात् "उपयामगृहीतोऽसि सुशर्मासि"[5] इत्यादिना मन्त्रेण वैश्वदेवग्रहं[6] गृह्णाति । ततः परिमार्ष्टि, प्रदक्षिणावृत्तिस्तथावृत्ती च करोति । ततः "एष ते योनिः"[7] इत्यादिना मन्त्रेण ग्रहं खरे सादयति ।

। वैश्वदेवशस्त्रादिकम् ।

ततोऽध्वर्युः सदसि गत्वा होतुः पुरस्तात् प्राङ्मुख उपविशति । ततो होता "अध्वर्यो शोंसावो३"[8] इत्यभिहूतो होतारं प्रति आवृत्य प्रतिगराय

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "सावित्रपात्नीवतहारियोजनोपांशुग्रहणात्" इति कात्यायनः 9/5/21.

2- मा० सं० वा० शु० य० वे० म० सं० - 8/6.

3- "अभूद्देवः सविता" इत्यादिका [ऋ०वे०म०सं० - 4/54/1] पुरोनुवाक्या [आश्व० श्रौ० सू० - 8/3/2]

4- "होता यक्षद् देवं सवितारम्" इत्यादिकः प्रैषाध्यायोक्तः प्रैषः [आश्व०श्रौ०सू० 8/3/3]. "दमूना देवः सविता" इत्यादिका [आश्व०श्रौ०सू० 8/3/4] याज्या.

5- मा० वा० शु० य० वे० म० सं० - 8/8.

6- का० श्रौ० सू० - 10/6/2.

7- मा० वा० शु० य० वे० म० सं० - 8/8.

8- आश्व० श्रौ० सू० - 8/3/8.

तत्परो भवति । ततो होता वैश्वदेवशस्त्रं शंसति[1] ।

अध्वर्युर्यथाविधि प्रतिगृणाति ।

वैश्वदेवशस्त्रे "एका च दशभिश्च"[2] इत्यादिकायामृचि शस्यमानायां प्रतिप्रस्थाता द्विदेवत्यग्रहपात्राणि दक्षिणहविर्धानान्न उत्तरवर्त्मना उत्थाप्य मार्जालीये प्रक्षाल्य हविर्धाननिकटे खरे स्वस्थाने स्थापयति ।

अध्वर्युर्वैश्वदेवशस्त्रे "प्र द्यावा यज्ञैः"[3] इत्यादिकासु ऋक्षु शस्यमानासु तासामर्धर्चेषु "मदामो दैव" इति त्रिः प्रतिगृणाति[4] ।

शस्त्रान्ते चाध्वर्युः "ओ३म्" इति प्रतिगीर्य प्रदक्षिणावृत्तीतरथा- वृत्ती च करोति ।

॥ महावैश्वदेवग्रहप्रचारः ॥

ततोऽध्वर्युर्हविर्धाननिकटं गत्वा महावैश्वदेवग्रहमादत्ते । चमसाध्वर्यवश्च चमसं स्वं चमसानादाय हविर्धाननिकट एव प्राङ्मुखा अवतिष्ठन्ते । ततोऽध्वर्यु- र्निष्क्रम्य वजितिवेदीं गत्वाश्राव्य प्रत्याश्राविते "उक्थशा यज सोमस्य" इति

---

1- शाङ्० श्रौ० सू० - 8/3/8-18.
2- का० श्रौ० सू० - 10/5/4 ॥मा० वा० शु० य० वे० मा० सं० - 27/33॥ ॥शाङ्० श्रौ० सू० - 8/3/10॥
3- शा० ऋ० वे० मा० सं० - 1/159/1-3.
4- का० श्रौ० सू० - 10/5/5.

भिप्रायमतिक्रम्याश्राव्य प्रत्याश्राविते "सोम्यस्य यज" इति प्रेष्यति । वषट्कृते जुहोति[1] ।

पुनः पूर्ववद् ध्रुवातश्चतुर्गृहीतमाज्यमादाय जुहोति[2] ।

ततोऽध्वर्युः सोम्यचरुमध्ये गर्तं कृत्वा तमाज्येन पूरयित्वा सोम्यचरुं सदसि नयति ।

उद्गाने ध्रियमाणं तं चरुं होताऽध्वर्युहस्तस्थमेवाङ्गुष्ठाङ्गुलिभ्यां घृत-मुपस्पृशति "चक्षुष्पा असि चक्षुर्मे पाहि" इति चक्षुषी विमार्ष्टि च[3] ।

ततोऽध्वर्युः सोम्यचरुमुद्गात्रे समर्पयति ।

## ॥ धिष्ण्यव्याघारणम्[4] ॥

ततोऽध्वर्युराज्यस्थालीतः स्रुच्यां चतुर्गृहीतमाज्यं गृहीत्वा पूर्वद्वारेणा-ग्नीध्रीयं प्रविश्य प्रत्यङ्मुख[5] उपविश्य त्रीन् शलाकान् आग्नीध्रीयाग्नावाधाय[6] प्रदीप्य "विभूरसि"[7] इत्यादिना मन्त्रेण प्रत्यग्न्याज्याष्टगार्हीं जुहोति ।

---

1- "त्वं सोम पितृभिः" इत्यादिका (ऋ०वे०सं० - 8/48/13) याज्या (शां० श्रौ० सू० - 8/4/2)
2- "उरु विष्णो" इत्यादिका याज्या (शां० श्रौ० सू० - 8/4/3)
3- शां० श्रौ० सू० - 8/4/5-6.
4- धिष्ण्यव्याघारणशब्दो यद्यपि अस्मिन् प्रकरणे कात्यायनेन नैव प्रयुक्तः, तथापि कल्पनादौ प्रयुक्तः ।
5- मानवीयतया-कर्मोत्सुक्यानुरोधादेवमुक्तम् ।
6- का० श्रौ० सू० - 10/6/13.
7- मा०वा०शु०य०वे०सं० - 5/31,34 (एकवचनान्तपदकोऽनुषङ्गः शाखान्तरादिति कर्कः) ।

अग्नीध्र धिष्ण्येषु शलाकानाग्नीध्रीये प्रदीपिताः होत्रादिधि-ष्ण्येषु निदधाति[1] ।

अध्वर्युराग्नीध्रीयात् पूर्वद्वारेण निष्क्रम्य पूर्वद्वारेण सदः प्रविश्य प्रत्यङ्मुख उपविश्य "वह्निरसि"[2] इत्यादिना मन्त्रेण होतृधिष्ण्ये प्रचरणीस्था-ज्यप्रथमाहुतिं जुहोति । ततः पूर्वोदुम्बरीं गत्वा प्रत्यङ्मुख उपविश्य "श्वात्रोऽसि"[3] इत्यादिना मन्त्रेण प्रशास्तृधिष्ण्ये प्रचरणीस्थाज्यद्वितीयाहुतिं जुहोति । ततो यथागतं प्रत्यागत्य प्रत्यङ्मुख एवोपविश्य "तुथोऽसि"[4] इत्यादिना मन्त्रेण ब्राह्मणा-च्छंसिधिष्ण्ये प्रचरणीस्थाज्यपञ्चमाहुतिं जुहोति । तत एव "उशिगसि"[5] इत्यादिना मन्त्रेण पोतृधिष्ण्ये प्रचरणीस्थाज्यचतुर्थाहुतिं जुहोति । तत्रस्थ एव "अङ्घारिरसि"[6] इत्यादिना मन्त्रेण नेष्टृधिष्ण्ये प्रचरणीस्थाज्यतृतीयाहुतिं जुहोति । तत्रस्थ एव "अवस्यूरसि"[7] इत्यादिना मन्त्रेणाच्छावाकधिष्ण्ये प्रचरणीस्थाज्याहुतिं जुहोति ।

ततोऽध्वर्युः पूर्वद्वारेण सदसो निष्क्रम्य मार्जालीयं गत्वा प्रत्यङ्मुख एवोपविश्य अग्नीध्रस्थदीप्तशलाके मार्जालीयधिष्ण्ये "शुन्ध्यूरसि"[8] इत्यादिना मन्त्रेण प्रचरणीस्थमाज्यं किञ्चिदेव शेषयन् जुहोति ।

ततोऽध्वर्युर्विधिनिष्क्रम्य पश्चाद्द्वारेणाग्नीध्रीयं दक्षिणेनोत्तरवेदिं प्रति याति ।

---

1 - "त्विड्भिः शकलैर्दीप्ता शलाकाभिषेकः शलाकः । एवंविधास्ताः शलाकाः प्रतिधिष्ण्यमादीपयन्तेऽग्नयः । शान्तेषु धिष्ण्येष्वाग्नीध्रीया-च्छलाकानादीप्य धिष्ण्येष्वाग्नीध्र एव निदधाति" इति देवयाज्ञिक-पद्धतौ (366 पृ०)

2-8- मा० वा० शु० य० वे० मा० सं० - 5/31, 34, 32, 34.

### [ पात्नीवतग्रहस्य ग्रहणं प्रचारश्च ]

अध्वर्युणा हिरण्यधारणे क्रियमाणे प्रतिप्रस्थाता हविर्धानमण्डपं प्रविश्य उपांशुपात्रान्तर्यामपात्रान्यतरपात्रेण[1] आग्रयणात्[2] "उपयामगृहीतोऽसि बृहस्पतिसुतस्य[3]" इत्यादिना मन्त्रेण पात्नीवतं ग्रहं गृहीत्वा तमादाय हविर्धानमण्डपस्य पूर्वद्वारे उपविशति ।

ततो हिरण्यधारणानन्तरं तमागतोऽध्वर्युरुपविश्य ग्रहमुखे तृणे अन्तर्धाय प्रचरणीतोऽपि "अभ्यरस्ततादं[4]" इत्यादिना मन्त्रेण ग्रहं श्रीणाति । ततः प्रतिप्रस्थातुर्हस्ताद् ग्रहमादाय परिमृज्योत्थायातिक्रम्याश्राव्य प्रत्याश्राविते "अग्नीत्पात्नीवतस्य यज[5]" इति प्रेष्यति । वषट्कृते[6] "अग्नाऽ३इ पत्नीवन्[7]" इत्यादिना मन्त्रेणाग्नीध्रस्तदर्थं यजतिस्थाने तिष्ठन्नेव शेषं स्वयं जुहोति ।

### [ पात्नीवतग्रहभक्षणादिकम् ]

ततोऽध्वर्युः शेषं पात्नीवतपात्रमादायाग्नीध्रीये गत्वोपविश्य

---

1- "उपांशवन्तर्यामयोरेकं येन सावित्रग्रहो गृहीतस्तस्मादन्येन पात्नीवतग्रहणम्" (का०श्रौ०सू० - 10/5/16.)

2- "सावित्रपात्नीवतहारियोजनोपवर्जिणाद् पात्नीवताद्" इति कात्यायनः (9/5/21)

3/4- वा० सं० शु० य० वे० मा० सं० - 8/9.

5- का० श्रौ० सू० - 10/6/17.

6- "अग्नाऽ३इ" इत्यादिका (श०ब्रा०मा० 3/6/9) याज्या (का०श्रौ०सू० 8/5/1)

7- वा० सं० शु० य० वे० मा० सं० - 8/10.

"अग्नीदुपह्वयस्व" इत्याह । ततोऽग्नीद् "उपहूतः" इत्युक्त्वा "अध्वर्यो उप मा ह्वयस्व" इत्याह । ततोऽध्वर्युः "उपहूतः" इत्याह ।

तत आग्नीध्रीयागारे एवोपविष्टोऽध्वर्युः "अग्नीन्नेष्टुरुपस्थमासीद, नेष्टः पत्नीमुदानयोद्गात्रा सङ्ख्यापय, उन्नेतर्होतुश्चमसमनून्नय सोमं मातिरीरिचः"[1] इति क्रमशः प्रेष्यति ।

ततोऽग्नीत् पात्नीवतपात्रहस्त एव सदो गत्वा नेष्टुरुत्सङ्गे उपविशति । ततोऽध्वर्युरपि सदः प्रविशति । ततोऽध्वर्युराग्नीध्रौ पात्नीवतशेषं भक्षतः । ततोऽग्नीदुत्सङ्गादुत्थाय मार्जालीये पात्नीवतपात्रं प्रक्षाल्य धिष्ण्यान्तिकस्थे खरे स्थापयति ।

॥ होतृचमसानुन्नयनम् ॥

तत उन्नेता अपरेणोत्तरवेदि होतृचमसादीन् दश चमसान् निधाय तेषु पूतभृतः सोमं निःशेषं विभज्योन्नयति[2] ।

॥ यज्ञायज्ञीयस्तोत्रोपाकरणादिकम् ॥

ततोऽध्वर्युर्दर्भतृणाभ्यां होतृचमसस्थं सोममुपस्पृश्य कर्मप्रावृत आर्ध-प्रावृतो वा सदसि गत्वा उद्गातृभिः पुरस्तात्सन्ने कृते ५ स्तोत्रे ते दर्भौ प्रयच्छन् "उपावर्त्तध्वम्" इति मन्त्रेण यज्ञायज्ञीयं स्तोत्रमुपाकरोति ।

---

1- का० श्रौ० सू० - 10/6/19

2- "होतृचमसे सर्वमुन्नयति तत्राग्निमारुतशस्त्रान्ते भक्षणाकाङ्क्षत्वाद्" इति देवयाज्ञिकपद्धतौ ।

आग्निमारुतं[1] शंसति । अध्वर्युर्यथापूर्वं प्रतिगृणाति । स्वादुष्किलीयायां[2] शस्यमानायां "मदामो दैव" इति त्रिष्वर्धर्चेषु प्रतिगृणाति न वा[3] ।

आग्निमारुतशस्त्रान्त्यायाम् "एवा न इन्द्रो मघवा" इत्यादिकायामृचि शस्यमानायां प्रतिप्रस्थाता ध्रुवधारां होतृचमसे "ध्रुवन्ध्रुवेण[4]" इत्यादिना मन्त्रेणावनयति । वैश्वानरो ग्रहोऽपि गृहीतश्चेत् तं यजमानचमसेऽवनयति[5] ।

शस्त्रान्तेऽध्वर्युः "ओ३म्" इति प्रतिगृणाति ।

॥ होतृचमसप्रचारः ॥

ततोऽध्वर्युः स्वसञ्चरेणोत्तरवेदिं गत्वा होतृचमसमादत्ते, चमसाध्वर्यवश्च यथायथमन्थायिचमसान् । ततोऽध्वर्युरति क्रम्यागत्य प्रत्याश्राविते "उपहूता स्थ सोमानाम्" इति प्रेष्यति । वषट्कृते[6] अनुवषट्कृते च तेन तत्र होतृचमसं जुहोति । चमसाध्वर्यवश्च तेषामन्थायिचमसान् जुह्वति ।

॥ होतृचमसादिभक्षणम् ॥

ततोऽध्वर्युर्होतृचमसमादाय सदसि गत्वा होतारमुपहूयानुज्ञातो भक्षयति,

---

1- शाङ्ख० श्रौ० सू० - 8/6/1-17.
2- शा० शु० वे० मा० सं० - 6/47/1-3 [शाङ्ख० श्रौ० सू० - 8/6/14]
3- का० श्रौ० सू० - 10/6/6.
4- मा०वा०शु०य०वे०मा०सं० - 7/25 [का०श्रौ०सू० - 10/7/6]
5- का० श्रौ० सू० - 10/7/8.
6- "अग्ने मरुद्भिः" इत्यादिका [शा० शु० वे० मा० सं० - 5/6/8] याज्या [शाङ्ख० श्रौ० सू० - 8/6/17]

"उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वा (गृह्णामि)"[1] इति
मन्त्रेण द्रोणकलशे आग्रयणस्थालीस्थं सर्वं सोममानयति[2] । ततो द्वे दर्भपुञ्जे प्रागग्रे
उदगग्रे वा द्रोणकलशस्योपरि निधाय "हर्योर्धाना स्थ सहसोमा इन्द्राय"[3] इति
मन्त्रेण लौकिकधाना द्रोणकलशसोमे आवपति । ततो हारियोजनग्रहं (द्रोणकलशं)
परिमार्ष्टि ।

## (हारियोजनग्रहप्रचारः)

तत उन्नेता द्रोणकलशं मूर्ध्नि निधाय "धानासोमेभ्योऽनुब्रूहि" इति
प्रशास्तारमाह[4] । ततो निष्क्रम्य वदिवेदिं गत्वाऽऽश्राव्य प्रत्याश्राविते "धानासोमा-
न्प्रस्थितान्प्रेष्य" इति प्रेष्यति[5] । वषट्कृते अनुवषट्कृते च शिरसैव द्रोणकलशं
धारयन् कृत्स्नं सोमं सर्वहुतं[6] धाना अर्धहुता जुहोति । ततो द्रोणकलशमुत्तरवेदौ
निदधाति ।

ततः यजमानाः षोडशर्त्विजो द्रोणकलशात् त्रिरस्ता धाना
गृहीत्वा "यस्ते अश्वसनिः"[7] इत्यादिना मन्त्रेणाघ्रायोत्तरवेदौ निवपन्ति[8] ।

---

1- मा० वा० शु० य० वे० म० सं० - 8/11.

2- "हारियपात्नीवतादित्यौ योजनीपक्षिणानाग्रमात्" इति कात्यायनः 9/5/21.

3- मा० वा० शु० य० वे० म० सं० - 8/11.

4- "तिष्ठा सु कं" इत्यादिका (ऋ०वे०म०सं० 3/35/2) पुरोनुवाक्या (ऋग्० सं० 8/8/1)

5- "धानासोमानामिन्द्राय च" इत्यादिकः प्रेषाध्यायोक्तः प्रैषः, "युनज्मि ते" इत्यादिका (ऋ०वे०म०सं० - 1/82/6) याज्या ।

6- सोममसर्वहुतं हुत्वा होतोन्नेतारौ भक्षतः सोमशेषं भक्षयतः मतान्तरे ।

7- मा० वा० शु० य० वे० म० सं० - 8/12.

8- अत्र कात्यायनं वैतानसूत्रं द्रष्टव्यम् (16/21)

इत्यादिभिर्मन्त्रैः प्रतिमन्त्रं सत्र अभिमृश्य यजूंषि जुहोति[1] ।

( अवभृथः )

तत आसन्द्यौदुम्बर्यौ चात्वालं प्रति नयन्ति । पूतभृदाधवनीयस्थाली-चमसोदुम्बरद्रोणकलशग्रावाधिषवणफलकचर्मादीनि सोमलिप्तानि सर्वाणि वस्तूनि च चात्वालं प्रति हरन्ति ।

ततोऽध्वर्युर्यजमानकराद् कृष्णविषाणामादाय "नाभिर्वः[2]" इत्यादिना मन्त्रेण चात्वाले प्रास्यति । प्रतिप्रस्थाता च पत्न्याः शङ्कुकोशे शङ्कुकुम्भे वा आदाय कुम्भीमिव चात्वाले प्रास्यति ।

ततोऽध्वर्युश्चात्वालसमीप एव यजमानमपि "उरुं हि राजा[3]" इत्यादिकं मन्त्रं वाचयति । यजमानः पठति । ततः "साम गाय" इति प्रस्तोतारं प्रेष्यति । प्रस्तोता साम गायति[4] । सर्वेऽपि ऋत्विजः कायमाना निधनं गायन्ति ।

तत आसन्दीमौदुम्बरीं सोमलिप्तां सर्वां चादाय ऋजीषकुम्भ-आज्य-पुरोडाश-अभ्र-दर्भ-स्रुक्-स्रुव-जुहू-सुवपुतावदान-कृष्णाज्यस्थाली-पदार्थानन्यानपि चादाय वरुणीनाम्नीं नदीं प्रति स्थितां गत्वा प्रत्यक्पूर्वाय यान्ति । तन्मार्गे पुनः "साम गाय" इत्यध्वर्युः प्रेष्यति । प्रस्तोता साम गायति । कायमानाः

---

1 - अत्र कृतिवत्सनकारिकेति वैतानश्रौतसूत्रकारस्य मतमाचष्टे (वै० श्रौ० सू० - 16/22)

2-3- मा० वा० शु० य० वे० मा० सं० - 8/23.

4 - अवभृथसामसम्पादनं लाट्यायनश्रौतसूत्रे द्रष्टव्यम् (2/12/1)

सर्वेऽपि ऋत्विजो निधनं गायन्ति । तत उदकान्तं प्राप्य पुनः "साम गाय" इति प्रेष्यति । प्रस्तोता साम गायति । सर्वे निधनं गायन्ति ।

ततोऽध्वर्युर्यजमानं बाहुगृहीतम् पादन्यासं कारयन् "नमो वरुणाय"[1] इत्यादिकं मन्त्रं वाचयति । यजमानः पठति ।

ततो वरुणप्रघासवद् प्रयाजान्तं कृत्वा आज्यभागान्ता स्वोपस्तीर्य पुरोडाशस्य[2] मध्याद् अवदाय "वरुणायानुब्रूहि" इत्याह[3] । ततः पूर्वार्द्धाद् द्वितीयमवदानमवदायो परिष्टाद् सकृदभिघार्य शताभ्यङ्गं कृत्वा आश्राव्य प्रत्याश्राविते "वरुणं यज" इति प्रेष्यति । वषट्कृते[4] जुहोति । पुनर्जुह्वामुपस्तीर्य एकं पुरोडाशं जुह्वामानयन् "अग्नीवरुणाभ्यामनुब्रूहि" इत्याह[5] । त्रिरभि- घार्याश्राव्य प्रत्याश्राविते "अग्नीवरुणौ यज" इति प्रेष्यति । वषट्कृते[6] उत्तरार्द्धेऽसंसृष्टं जुहोति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा० वा० शु० य० वे० मा० सं० - 8/23।
2- का० श्रौ० सू० - 10/8/29।
3- "उदुत्तमं वरुण" इत्यादिका [ऋ०वे०मा०सं० - 1/24/15]
पुरोनुवाक्या [आश्व० श्रौ० सू० - 8/11/5]
4- "अव ते हेडः" इत्यादिका [ऋ०वे०मा०सं० - 1/24/14]
याज्या [आश्व० श्रौ० सू० - 8/11/5]
5- "स त्वं नो अग्ने" इत्यादिका [ऋ०वे०मा०सं० - 4/1/5]
च पुरोनुवाक्या [आश्व० श्रौ०सू० - 8/11/6]
6- "त्वं नो अग्ने" इत्यादिका [ऋ०वे०मा०सं० - 4/1/4]
याज्या [आश्व० श्रौ० सू० - 8/11/6]

ततोऽध्वर्युः "समुद्रे ते हृदयम्"[1] इत्यादिना मन्त्रेण ऋजीषकुम्भमप्सु प्लावयति ।

तत ऋजीषकुम्भाद् हस्तौ विसृज्य "देवीरापः"[2] इत्यादिना मन्त्रेण तमुपतिष्ठते ।

ततः "अवभृथ निचुम्पुण"[3] इत्यादिना मन्त्रेण ऋजीषकुम्भमप्सु मज्जयति।

ततो "मा मेन्द्रयज्ञोन्द्रस्य वैन्दस्य व्यापीः"[4] इति मन्त्रेण यजमानः सदीक्षाकृष्णाजिनव्यान्तमप्सु मज्जति । ततः कृष्णाजिनं पुत्राय ददाति।

ततः पत्नीयजमानौ शिरोमज्जनमकुर्वाणौ स्नातः, अन्योन्यस्य पृष्ठं च धावतः ।

ततोऽध्वर्युः सोमलिप्तं सर्वमप्सु प्रास्यति ।

सर्वेऽपि ऋत्विजः स्नान्ति ।

तत उन्नेता "उदुत्तमम्"[5] इत्यादिना मन्त्रेण बाहुगृहीतं यजमानं जलादुन्नयति । तत्रैव पत्नीम् । तत ऋत्विजश्च तथैवोन्नयति क्रमेण ।

ततः यजमानाः सर्वेऽपि ऋत्विज वासांसि परिधाय "अपाम सोमममृता अभूम"[6] इत्यादिकामृचं जपन्तो देवयजनं प्रतिगच्छन्ति । आरवानीरुदाय-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-3- मा० वा० शु० य० वे० म० सं० - 8/25, 26, 27.
4 - का० श्रौ० सू० - 10/9/4.
5 - मा० वा० शु० य० वे० म० सं० - 20/21.
6 - का० श्रौ० सू० - 10/9/7.

अवभृथादि वाग्नीषोमीयकर्माणि च कृत्वा वन्ध्यया गवा यागं कुर्वन्ति ।
वन्ध्याया गोरभावे ऊषा यागं कुर्वन्ति[1] । उष्णीषभावे पयस्विष्टिमापद्यमी
पाशानादेन ब्राह्मणादीनां दक्षिणा च मुक्ता[2] क्रियते ।

॥ उदवसानीयेष्टिः ॥

ततः प्राजहितं[3] समारोप्य[4] निर्मथ्य गार्हपत्यं स्थापयित्वा अन्वाहार्यपचना-दिकमपि कल्पयित्वा उदवसानीयेष्टिः । तत्र आग्नेयः पञ्चकपालः पुरोडाशः प्रधानं हविः । हिरण्यं दक्षिणा अनड्वान् वा ।

अथोदवसानीयेष्टिं कृत्वा वैष्णवानां कर्मणां गृहीत्वाज्यं संस्कृत्य चतु-र्गृहीतं गृहीत्वा "उरु विष्णो[5]" इत्यादिना मन्त्रेण होमः । तत्र ऋत्विग्भ्यो यथा-शक्ति दक्षिणादानम् ।

ततः सद्ब्राह्मणभोजनम्[6] ।

---

1- का० श्रौ० सू० - 10/9/14. [आपस्तम्बश्रौतसूत्रादु अन्या-अन्येषा अपि अनुबन्ध्याविकल्पाः प्रतीयन्ते 1/6/42-43]
2- का० श्रौ० सू० - 10/9/15.
3- सर्वानग्नीन् समारोपयेदिति केचित्, वचनाभावात् प्राजहितस्यैव समारोप इति देवयाज्ञिकः ।
4- बौधायनश्रौतसूत्रादिषु "उदङ्ङुदवसाय" इत्युक्तत्वात् देवयजनस्योत्तरतो विहारान्तरस्य साधनं प्रतीयते ।
5- मा०वा०शु०य०वे०मा०सं० - 5/38, 41, का०श्रौ०सू० - 10/9/19, 6/1/4, मा०श०प०ब्रा० - 4/5/1/16.
6- यद्यपि श्रौतसूत्रेष्वत्र विषये किमपि नोक्तं तथापि "सद्यो भोजयेत् तीर्थे" इति वचनादेवकामसूत्रेष्वेवमुक्तम् ।

ततः पुनरुद्धृत्य सर्वं यजमानस्य सायमग्निहोत्रहोमः ।

ततः समारोपं कृत्वा देवयजनमादीप्य ग्रामं प्रविशन्ति[1] ।

इत्यग्निष्टोमसोमयागः संक्षेपेण निरूपितः ॥

**चयनम् (साग्निचित्य-सोमयागः)**

साग्निचित्यसोमयागे प्रथमं पर्वणि[2] इष्टकापशुयागः क्रियते । तत्र पुरुषशिरो गौरविरजश्चेति पञ्च पशवः आग्नेयाः[3], प्राजापत्यः अज एक एव वा पशुः[4], वायव्योऽज एक एव पशुर्वा[5] भवति । तत्र पञ्चपशुके यागेऽपि अन्येषामङ्गैः प्रचरणमन्येषां तु शिरांस्यादाय स्वयं मृतकास्विव निराकृत्या निराकृत्यैव वा कृतेनोपनिषत् शुष्कं स्थापनम्, कुसिन्धानां अवटे पात्वले जले प्रक्षेपः, यागावशिष्टस्य शिरोव्यतिरिक्तस्याजादिशरीरस्यापि सम्यग्नाश्ये तत्रैव प्रक्षेपः, अथवा यागार्थं जिह्वा आदाय सर्वेषां पशूनां शिरसां स्वकृतं तृष्कापाकरण-कृतोपनयपूर्वकं निधानम्, सर्वेषां पशूनामङ्गैः प्रचरणम्[6], यागावशिष्टानां पशु-शरीराणां सम्यग्नाश्ये अवटे पात्वले जले प्रक्षेपो विधीयते । एकपशुके यागेऽपि पूर्ववत् शिरसो निधानम्, अङ्गैः प्रचरणम्, अवशिष्टशरीरस्य सम्यग्नाश्ये पात्वले जले प्रक्षेपः ।

ततोऽनन्तराष्टम्यां प्रतिपत्पशुरहितस्य स्थानाद् कर्माविध मृदमादाय

---

1- कीर्तिरादीपेति कर्कः, देवयजनमादीप्येति देवयाज्ञिकः, द्वे अपि मते सूत्रान्तरानुमते विज्ञायेते ।

2-6- का० श्रौ० सू० - 16/1/5, 8, 36, 41, 16-24.

उखा क्रियते[1] । अषाढाख्येष्टका विश्वज्योतिरादीनीष्टकाश्च क्रियन्ते[2] । तासां पाकोऽपि यथाविधि क्रियते ।

ततो प्रतिपत्प्रभृतीष्टकाः पश्चादेव मृन्मयादाय यथोक्तलक्षणाः[3] यथोक्तसंख्याकाः इष्टका यजमानं क्रियन्ते[4] ।

ततोऽनन्तरपर्वणि दीक्षा भवति[5] । दण्डोपकरणान्ते दीक्षाकर्मणि सम्पन्ने[6] पूर्वं कृतायामुखायां यथाविधि अग्निमुत्पाद्य तत्र समिधम् आधाय तस्यो- उख्याग्ने धारणं क्रियते । ततो विष्णुक्रमाः क्रियन्ते । तत्र उख्याग्नेरासन्दी- मासादनम्, वात्सप्रोपस्थानं च क्रियते । तत्र "दीक्षितोऽसि" इत्यादिकं प्राकृतं कर्म क्रियते । प्राग् वात्सप्राद् उख्यमग्निमहति निधाय यजमानवाचनादि[7] कर्म क्रियते । ततो भस्मापोऽभ्यवहरणं च क्रियते[8] ।

दीक्षान्ते वेदिमानमग्निक्षेत्रमानं च क्रियते । अग्निक्षेत्रे परितः परिश्रितः (शिलेष्टकाः) निखन्यन्ते । तदोत्तरपक्षस्यापरस्यां श्रोण्यां तिस्रः शिलेष्टका जानु-नाभि-मुखमात्र्यो निखन्यन्ते ।

ततः श्वोभूते गार्हपत्यचयनं क्रियते[9] । तत्र चितिं सम्मितां कृत्वो-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - का० श्रौ० सू० - 16/2/1, 16/3/23 - 16/4/4.

2-3- ,, - 16/3/21, 16/4/6, 16/4/24.

4 - सर्वेष्टकानां सङ्कलने संख्या 11170.

5-6- का० श्रौ० सू० - 16/4/27, 31.

7-8- ,, - 16/6/22, 23-30.

9 - ,, - 17/1/1-20.

बृहदादिकम्, उक्थ्यविग्रहः, षोडशी, रात्रिपर्यायाः, आश्विनम्, पात्रकालना-नैतृराजादि च क्रियन्ते । ततश्चतुर्थे सुत्याहे उक्थ्यः, पञ्चमेऽग्निष्टोमः । दक्षिणाकाले सर्वेषु सुत्याहेषु राजोदयेष्वद् दक्षिणा पञ्चसु दिनेषु विभज्य । ब्राह्मणस्य तथैव सर्वस्वं दक्षिणा । एकादशानुबन्ध्याः । त्रैतवी उदवसानीया । तदन्ते ग्रामवासेच्छा चेद् तावदग्निहोत्राहुतिं हुत्वा अरण्योरग्नी समारोप्य उत्तरनारायणेनादित्यमुपस्थाय देवयजनमादीप्य ग्रामे प्रवेशः, ग्रामवासेच्छा-भावे तावदग्निहोत्रमहुत्वैव आत्मन्यग्नी समारोप्य उत्तरनारायणेनादित्यमु-पस्थाय पश्चादनवेक्षमाणस्य यजमानस्यारण्ये प्रवेशो यावज्जीवं ग्रामे नागमनं च ।।[1] इति पुरुषमेधः[2] ।।

सर्वमेधः

सर्वमेधे द्वादशदीक्षाः, द्वादशोपसदः, प्रथमः सुत्याहः एकाहोऽग्नि-चित्यायुक्तोऽग्निष्टुदग्निष्टोमसंस्थाकः, द्वितीय इन्द्रस्तुदुक्थ्यसंस्थाकः, तृतीयः सूर्यस्तुदुक्थ्यसंस्थाकः, चतुर्थो वैश्वदेवस्तुदुक्थ्यसंस्थाकः, ततो महाव्रतम् (आरम्भ-णीयमुक्थ्यमतिरात्रो वा), ततो आप्तोर्यामः (पौण्डरीकमुक्थ्यमतिरात्रो वा), सप्तमोऽप्तोर्यामः । तत्र आग्निराग्निकारश्चत्वारश्चोमायनाः पशवः, तेषां वपानां होमस्यान्ते सर्वहोमः क्रियते च । सर्वहोमे च उपस्तारपूर्वकं पुरुषाग्नौ च-

---

1- का० श्रौ० सू० - 21/1/17.

2- शाङ्खायनश्रौतसूत्रे तु (16/10/1 - 16/14/20) अन्यथैव पुरुषमेध उक्तः ।

जानाम् अन्येषां वानस्पतिकानां प्राणिनामपाकानां त्वचां तमाकानां च व-पानाम्, औषधिवनस्पतीनां कर्मनिष्पादितानां चूर्णानाम्, ग्रीष्मकगोधूम-मुद्गादीनामन्नविशिष्टानां सोमनानां केनेवावदानं कृत्वाभिघार्य "तदेवा-ग्निस्तद्वायुस्तदादित्यः" इत्यादिनाध्यायेन प्रतिमन्त्रमेकाहुतिर्हूयते । तृतीय-स्तनेऽपि आतिराशिकप्रानामवदानेषु हुतेषु वनस्पतियागात् प्राक् पूर्वोक्तप्रकारकः सर्वहोमः क्रियते । अष्टमेऽस्मिन्स्तोम उक्थ्यः, नवमेऽप्यस्मिन्स्तोम उक्थ्यः, दशमः सुत्याहो विश्वजिदतिरात्रः । तिस्रोऽनूबन्ध्याः । षडुदव-सानीया । तत्र आग्नेयी प्रथमा । तदन्ते सायमग्निहोत्राहुतिः । ततोऽग्नी अरण्योरारोप्य देवयजनमादीप्य प्रयान्ति । इति सर्वमेधः ॥

॥ एतावता द्वितीयो वैदिकयज्ञनिरूपणाध्यायः समाप्तः ॥

*****

---

1- कर्मणो सम्प्रदायप्रतिकारस्तो च प्रकारान्तरं दृश्यते, किन्तु तद्वैदिकपद्धतिकेन दृष्टव्यम् ।

ऐश्वर्यभाव-पुरुषार्थत्व-कृत्स्नत्वविचार-प्रमाणोपकार-समन्वयादितत्त्वानि औपनिषदोप-याग-तन्त्र-प्रसङ्गादिविषयनिरूपणाधारकन्यायप्रतिपादके सत्यपि जैमिनीय-धर्ममीमांसाशास्त्रे किञ्च प्रतिपादितं स्व-स्वशाखाप्राप्तकर्मणां तत्कर्मप्रयोगप्रतिपादकानि श्रौतकल्पसूत्राणि, तथा प्रतिपादितं औपनिषदकर्मप्रयोगप्रतिपादकानि सूत्राणि तु अद्यत्वे नोपलभ्यन्ते ।

आपस्तम्ब[1]-गौतम[2]-बौधायन[3]-वसिष्ठ[4]-वैखानस[5]ादिधर्मसूत्रेषु योगादि-गृह्यसूत्रे च क्वचित्क्वचिदेवात्मा यथार्थं विषय आगतोऽस्ति, किन्तु तत्र निष्कर्म-निरूपणप्रसङ्गे वेदान्त्याश्रितभिक्षुभिः पालनीयाः केचनाचारा एव प्रदर्शिता दृश्यन्ते । श्रौतसूत्रग्रन्थेषु यथा तत्तत्कर्मप्रयोगविधिः प्राप्यते न तथौपनिषदकर्म-प्रयोगपद्धतिस्तत्र प्राप्यते ।

कातीयोत्थानविधिपरिशिष्टेऽपि "धर्मात्स्वविधिविनिर्गतध्यानेन प्रवृत्ते, पुत्रस्यामङ्गीकृत्यौपनिषदकर्मानुष्ठानं धर्मात्स्वविधिविनिर्गतध्यानं यावज्जीव-मनुतिष्ठेदेव धन्या ब्रह्मणा सानुविद्धः" इत्येवोक्तमस्ति, औपनिषदकर्मप्रयोग-पद्धतिः प्रतिपादिता नास्ति ।

{ बादरायणीयब्रह्ममीमांसाशास्त्रोपयोगः }

औपनिषदकर्मविषये केवलं जैमिनीयधर्ममीमांसाशास्त्रस्थानीयं बादराय-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 2/9/8-17, 1/8/1-23.  2- 1/3/10-24.

3- 2/10/4-40, 1-34.  4- 10/1-31.

5- 3/6-7.

णीयं ब्रह्ममीमांसासूत्रं वस्तुवादमुपलभ्यते ।

तस्मादत्र बादरायणीय-ब्रह्ममीमांसासूत्रवृत्तिलाभेन औपनिषदकर्म-प्रयोगपद्धतिमनुसृत्य औपनिषदात्मज्ञाननिरूपणं संक्षेपेण क्रियते ।

{ औपनिषदात्मज्ञानाधिकारिणः }

तत्र स्वाध्यायाध्ययनविधि[1] प्रयुक्तत्रैवर्णिकः पुरुषः समग्रस्वशाखा-वेदाध्ययने शक्तश्चेत्[2] स्वशाखोपनिषदमपि अधीते एव । तथापि पुरुषः प्रायेण रागादिदोषवशाद् औपनिषदपरमार्थं सम्यगाकलयितुं नैव प्रभवति, न च साधन-चतुष्टयसम्पत्तिं लभते । अत एवोत्सर्गतोऽयं ब्रह्मचर्यानन्तरं पुरुषो गृहस्थो भवेदिति[3] विधिः श्रूयते । गार्हस्थ्येऽपि च कुटुम्बभरणपोषणादि-रागद्वेषमूलक-कर्मजालकः पुरुषः प्रायेण नैव साधनचतुष्टयसम्पत्तिं लभते । तस्मात् साधनचतुष्टयसम्पादनाय गृहादेव पुरुषो ग्रामं परित्यज्य वानप्रस्थाश्रमं प्रविशेदिति श्रुतिर्वदति[4] । वान-प्रस्थाश्रमे साधनचतुष्टये सम्पन्ने प्रव्रजेदिति विधानमुपनिषत्सु प्राप्यते[5] । एष औत्सर्गिकः पन्थाः । अत एव तु महाभारतेऽपि चातुराश्रम्यं ब्रह्मणि प्रतिष्ठिता

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "स्वाध्यायोऽध्येतव्यः" इति मा०श०प०ब्रा० - 11/5/7/2,3,4,10.

2- "तस्माद् पुत्रकमीणेन ब्राह्मणेन विशेषतः ।
अध्येतव्यो वेदशेषो यदि सर्वं न शक्यते ॥"
- इति पराशरस्मृति-{12/30}-वचनं चात्रैतदुक्तम् ।

3- "ब्रह्मचर्यं समाप्य गृही भवेत्" इति जाबालश्रुतिः {4}

4- "गृही भूत्वा वनी भवेत्" इति च तत्रैव ।

5- जाबालोपनिषदि {4}.

परिशिष्टे युक्तमेव ।

बौधायनधर्मसूत्राद् वैखानसधर्मसूत्रात् कौटलीयार्थशास्त्राच्च धर्मस्थापितस्वान्तिकानामविकलचेतसां सुसम्पन्नवयसां जनानां विधुराणां चापि[1] ब्राह्मणचतुष्टयकर्ता गार्हस्थ्यादेव सन्न्यासोऽनुमतः प्रतीयते ।

एतत् सर्वं मुख्यतया प्रारम्भविषयम् ।

अभ्यासस्य तु पूर्वजन्मपुण्यपरिपाकवशाद् गार्हस्थ्ये एव ब्रह्मज्ञानोदये गृहस्थाश्रमस्थस्यैव मुक्तिः[2], वानप्रस्थाश्रमे वा ब्रह्मज्ञानोदयेऽपीत्थं मुक्तिः, अन्यथा वानप्रस्थस्य अभ्यस्य विद्याचरणैर्वैराग्यादिमार्गद्वारा ब्रह्मलोकप्राप्तिः, तत्रैव ज्ञानोदयेन मुक्तिश्च[3], विद्यारहितत्वे देवलोकप्राप्तिः, ततः पुण्यक्षये पुन-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- (क) "अथ शालीनयायावराणामनपत्यानाम्, विधुरो वा, प्रजाः स्वधर्मे प्रतिष्ठाप्य वा, सप्तत्या ऊर्ध्वं सन्न्यासमुपदिशन्ति, वानप्रस्थस्य वा कर्मविरामे" इति बौ० धर्म० सू० – 2/10/5-7.

(ख) "सन्न्यासकर्म सप्ततेरूर्ध्वं कृताग्निपत्नीको विधुरो वा जन्ममृत्युजरादीन् विचिन्त्य मोक्षार्थी यदा स्यात् तदात्मजा पुत्रे भार्यां निक्षिप्य परमात्मनि बुद्धिं निवेश्य वनात् सन्न्यासं कुर्यात्" इति वैखानसधर्मसूत्रे – 2/5/6.

(ग) "पुत्रदारस्याप्रतिविधाय प्रव्रजतः पूर्वः साहसदण्डः, स्त्रियं च प्रव्राजयतः । लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थान् अन्यथा नियम्येत" इति कौटलीयार्थशास्त्रे (2/1).

2- "वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥" – इति मनुस्मृतौ 12/102.

3- प्र०उ० – 5/5. त्रिपाद्विभूतिमहानारायणोपनिषदि त्रितीयोऽध्याये. मैत्रायणीयोपनिषदि – 4/6.

एवं साधनचतुष्टयसम्पन्नाः त्रैवर्णिका औपनिषदात्मज्ञानेऽधिकारिणो भवन्तीति उपनिषदः प्रतिपादयन्ति । देवा अपि औपनिषदात्मज्ञानेऽधिकारिणः[1] । शूद्रास्तु साधनचतुष्टयसम्पन्ना अपि औपनिषदात्मज्ञाने नाधिकारिणः, पौराणिकात्मज्ञान एवाधिकारिण इति ब्रह्ममीमांसासूत्रकार[2]शङ्करभगवत्पादादयः प्राहुः[3] । महाभारते तु ब्राह्मणानुज्ञातानां शूद्राणामपि वेदविद्याध्ययनेऽधिकारः स्वीक्रियते[4] । तथापि आचार्या नेदमनुमन्यन्ते श्रुतिस्मृतिविरोधात्[5] । अथवा श्रुतिस्मृतीनां शूद्राणां वेदस्वाध्ययने ब्राह्मणाद्यननुज्ञातशूद्राणां वैदिकविद्यायाः श्रवणेऽनधिकारस्य प्रतिपादने एव तात्पर्यं व्याख्यातुं शक्यते इति ब्राह्मणानुज्ञातशूद्राणां वेदविद्याध्ययनेऽधिकारः स्वीकर्तुं शक्यतेऽपि ।

॥ साधनचतुष्टयम् ॥

यद्यपि साधनचतुष्टयघटकानां सर्वेषां पदार्थानामेकत्रैव संग्रहस्य प्रतिपादनमुपनिषत्सु नोपलभ्यते, तथापि सर्वशाखाप्रत्ययन्यायेन अत्र सङ्कलने

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- ब्र० मी० सू० - 1/3/26/33.

2- ,, - 1/3/34-38.

3- "वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्" इति शङ्करभगवत्पादस्तस्य भाष्ये - 1/3/38.

4- "सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ॥"
- इति नीलकण्ठटीकायां १२/327/48-49, सातवलेकरसं० १२/314/45.

5- शाङ्करभगवत्पादकृतं शारीरकमीमांसाभाष्यं द्रष्टव्यम् (1/3/34-38)

साधनचतुष्टयसम्पन्नत्वेन शङ्करभगवत्पादेन निर्दिष्टाः पदार्था उपनिषत्सूपलभ्यन्त एव ।

साधनचतुष्टयं च नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः शमदमादिसाधनसम्पत्, मुमुक्षुत्वं चेति शङ्करभगवत्पादः[1] ।

तत्र नित्यानित्यवस्तुविवेकस्य एव ब्रह्मविज्ञानाधिकारत्वं तादृ-ग्विवेकवतो नचिकेतस आत्मज्ञानाधिकारित्वं च प्रदर्शयन्ती -

"अनुपश्य यथा पूर्वे प्रतिपश्य तथापरे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः[2] ॥

"श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते[3] ॥"

"अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत[4] ॥"

"अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते[5] ॥"

"जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्[6] ॥"

इत्यादिका श्रुतिः प्रतिपादयति ।

इहामुत्रार्थफलभोगविरागवतो ब्रह्मात्मज्ञानाधिकारित्वं च श्रुत्या-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - शारीरकमीमांसाभाष्ये - 1/1/1.

2-4 - कठ उ० - 1/1/6, 26, 28.

5-6 - ,, - 1/2/1, 10.

वरो बहुष्वष्ट गुणः प्रदर्शयन्ति । तथाहि -

"शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामांश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ॥

आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः[1] ।"

इति अन्तकस्य प्रलोभिकवचनानि नचिकेतसं प्रति -

"स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः[2] ॥"

"कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।
स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्वा नचिकेतोऽत्यस्राक्षीः[3] ॥"

"अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते[4]" इति वदन्ती च इत्यन्तकस्य भणितिं प्रख्यापयन्ती, कठश्रुतिः, मुण्डक "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्[5]" इति मुण्डकश्रुतिः, "नैव राजन् मानुषं वित्तं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- कठ उ० - 1/1/23-25.
2- ,, - 1/2/3.
3- ,, - 1/2/11.
4- 2/1/2.
5- 1/2/12.

"यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहि"[1] इति प्रवाहणं जैवलिं प्रति
आरुणेर्गौतमस्योक्तिः, "यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे
धनं दास्यामि तावद् भगवद्भ्यो दास्यामि वसन्तु भगवन्तः"[2] इत्युक्तवन्त-
मश्वपतिं कैकेयं प्रति उद्दालकादीनां "येन हैवार्थेन पुरुषश्चरेत् तं हैव वदेदा-
त्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि"[3] इति कथनं च प्रवदन्ती
"तस्माज्जुगुप्सेत"[4] इति च वदन्ती छान्दोग्यश्रुतिः, "एतमेव प्रव्राजिनो लोक-
मिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते
किम्प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणाया-
श्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति"[5] इति
ब्रुवाणा भगवती बृहदारण्यकश्रुतिः, "भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्ले-
ष्माश्रुदूषिते विण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिञ्छरीरे किं कामोप-
भोगैः । कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्यु-
रोगशोकाद्यैरभिहते ऽस्मिञ्छरीरे किं कामोपभोगैः" इत्यादिकं वदतो राज्ञो बृहद्र-
थस्यात्मज्ञानाधिकारितां दर्शयन्ती मैत्रायणीयश्रुतिश्च इहामुत्रार्थफलभोगविरागवतो
ब्रह्मात्मज्ञानाधिकारितां प्रतिपादयन्ति ।

शमदमादयश्च शमदमोपरतितितिक्षासमाधानश्रद्धाः । शमो नाम मनसो

---

1- छा० उ० - 5/3/6.
2- ,, - 5/11/5.
3- ,, - 5/11/6.
4- ,, - 5/10/8.
5- बृ० उ० - 4/4/22.

विषयेभ्योऽपकर्षणेन वा स्थापनम्, दमो नामेन्द्रियाणां निग्रहः, उपरतिः कर्मभ्य उपरमः सन्यासरूपः, तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता । मनस ऐकाग्र्यं समाधानम्, आचार्योपदिष्टशास्त्रवाक्येषु विश्वासः श्रद्धा ।

ब्रह्मात्मज्ञानाधिकारार्थं पुनः शम आवश्यक इति "तमक्रतुः पश्यति वीतशोकः"[1] इति, "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्"[2] इति, "तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्"[3] इति, "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति"[4] इति "नाप्रशान्ताय दातव्यम्"[5] इत्यादीनि चोपनिषद्वाक्यानि प्रवर्तन्ते ।

दमस्यापि आत्मविद्याधिकारार्थं पुनः आवश्यकत्वं "तस्यै तपो दमः कर्मेति प्रतिष्ठा"[6] इति, "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्"[7] इति, "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति"[8] इति, "तदेतत्त्रयं

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- क० उ० - 1/2/20.
2- ,, - 1/2/24.
3- मु० उ० - 1/2/13.
4- बृ० उ० - 4/4/23.
5- श्वे०उ० - 6/22.
6- के० उ० - 4/34.
7- क० उ० - 1/2/24.
8- बृ० उ० - 4/4/23.

विन्देद् दमन्दानन्दयाम्[1]" इति. "दमेन दान्ता किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन् । दमो भूतानान्दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद् दमं परमं वदन्ति[2]" इत्यादीनि उपनिषद्वाक्यानि अवगमयन्ति ।

ब्रह्मात्मविद्याधिकाराय पूर्वं उपरतिः सन्न्यासाभिधायक-कीति च "सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः[3]" इति. "ब्रह्मसंस्थोऽमृतत्वमेति[4]" इति. "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथमुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः[5]" इति. "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति[6]" इति. "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानम्पश्यति[7]" इति. "अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति[8]" इति "न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयद्[9]" इति "द्वौ पन्थानावनुनिष्क्रान्ततरौ कर्मपथश्चैव -

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- बृ० उ० - 5/2/3.
2- म० ना० उ० - [illegible] 21/1.
3- मु० उ० - 3/2/6.
4- छा० उ० - 2/23/1.
5- बृ० उ० - 3/5/1.
6- ,, - 4/4/22.
7- ,, - 4/4/23.
8- जा० उ० - 5.
9- म० ना० उ० - 20/1.

"तमेतं वेदानुवचनेन विविदिषन्ति ब्राह्मणा यज्ञेन दानेन तपसाऽनाशकेन"[1] इति. "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येद्"[2] इति. "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"[3] इति. "श्रद्धाभक्तिध्यानयोगादवैहि"[4] इत्यादीनि उपनिषद्वाक्यानि सन्ति ।

साधनचतुष्टये मुमुक्षुत्वं नाम संसारबन्धनमुक्तेः परिहारेच्छा ।

मुमुक्षुत्वस्य ब्रह्मात्मज्ञानाधिकाराय पूर्वं आवश्यकत्वं च "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"[5] इति श्रुतिः "अत ऊर्ध्वं विमोक्षायैव ब्रूहि"[6] इति श्रुतिश्च सूचयति ।

॥ गुरुभक्तिः ॥

एवं साधनचतुष्टयसम्पन्नैर्ब्रह्मात्मज्ञानं विविदिषुभिर्गुरुभक्तिः कार्या. तादृगनुसन्धानाद्धि प्रत्येव गुरुरात्मज्ञानोपदेशं कुर्यादिति औपनिषदः प्रतिपादयन्ति । तथाहि "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- बृ० उ० - 4/4/22.
2- ,, - 4/4/23.
3- श्वे० उ० - 6/23.
4- कैवल्योपनिषदि - 1/2.
5- श्वे० उ० - 6/18.
6- बृ० उ० - 4/3/14, 15, 16, 33.

संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः[1]" "द्वितीयाद्वै भयं भवति[2]" "आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसञ्ज्वरेत्[3]" "अभिभूतत्वात् संमूढत्वं प्रयातः, संमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद् गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयात इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानम्[4]" इत्यादिकाः श्रुतयः प्रतिपादयन्ति । मोक्षस्य तत्स्वरूपत्वं च "गताः कलाः पञ्चदश प्रतिष्ठाः[5]", "तमसस्पारं दर्शयति भगवान् सनत्कुमारः[6]", "सर्वे पाप्मानो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः[7]" "श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि[8]" इत्यादिकाः श्रुतयो दर्शयन्ति । आत्मज्ञानमेव मोक्षोपाय इति च "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ।। यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः[9]" "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । तदा मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते[10]", "तमात्मस्थं येऽनुपश्यन्ति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - छा० उ० - 8/3/2.
2-3 - बृ० उ० - 1/4/2, 4/4/12.
4 - मैत्रायण्युपनिषद् - 3/2.
5 - मु० उ० - 3/2/7.
6-8 - छा० उ० - 7/26/2, 8/4/1, 8/13/1.
9 - ई० उ० - 6-7.
10 - क० उ० - 2/3/14.

भगवत्पादादय आचार्या ब्रह्मविज्ञानमोक्षफलयोरव्यवधानं भाष्यादिभिः प्रतिपादयन्ति । श्रुतौ चेत्थं, ब्रह्मसाक्षात्कारे जाते कर्तव्यावशेषाभावात् ।

ननु यथाहि "अथातो धर्मजिज्ञासा" इत्येव धर्मजिज्ञासायामपि प्रारब्धायां तथापि न धर्मज्ञानमात्रेणैव धर्मफलप्राप्तिरपेक्षिता तथैव "अथातो ब्रह्मजिज्ञासा" इति ब्रह्मजिज्ञासायां प्रारब्धायामपि न ब्रह्मज्ञानमात्रेण मोक्षफलसिद्धिरिति चेन्न श्रुतिविरुद्धत्वादभिमतस्य । तथाहि "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्"[1], "तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्"[2], "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः"[3], "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"[4], "विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति"[5] इत्यादिकाः श्रुतयो ब्रह्मज्ञानानन्तरं मोक्षफलं प्रतिपादयन्ति । ब्रह्मज्ञानस्यैव फलरूपत्वाद् ब्रह्मज्ञानानन्तरं किमपि कार्यं नास्त्येव, ब्रह्मज्ञानं ब्रह्मैव । तथा च भामतीकारोऽपि "न चायं ब्रह्मसाक्षात्कारोऽन्तःकरणवृत्तिभेद एकान्ततः परमार्थः, यस्तु साक्षात्कारो भावको नासौ कार्यस्तस्य ब्रह्मस्वरूपत्वात्"[6] इति ।

---

1 - बृ० उ० - 4/4/12.

2 - क० उ० - 2/2/12.

3-4 - मु० उ० - 2/2/5, 3/1/3.

5 - श्वे० उ० - 4/14.

6 - ब्रह्मसूत्रभाष्यव्याख्याभामत्याम् ।

## ॥ आत्मज्ञानोपदेशप्रक्रिया: ॥

तत्र ब्रह्मज्ञानान्मुक्तिर्भवति[1]। आत्मज्ञानाद् दुःखनिवृत्तिर्भवति[2] इत्यादिकं श्रुत्वन्त एव शिष्या गुरूपसत्तिं कुर्वन्तीति तान् प्रति आत्मज्ञानोपदेशप्रक्रिया चोपनिषत्सूपलभ्यमानैषा बुध्या -

यस्मादेतस्य जगतो जन्म भवति, यत्र स्थितिर्भवति, यत्र च लयो भवति तद् ब्रह्म, तद्व्यतिरिक्तं किमपि नास्तीति उपस्था सृष्टिप्रक्रियाकथनपूर्वकं ब्रह्मणोऽद्वितीयत्वं सच्चिदानन्दत्वं च प्रतिपाद्य तदेवात्मत्वमुपदिश्यते इति। एषैव प्रक्रिया "ऊर्ध्वमूलोऽवाक्शाखः"[3], "यथोर्णनाभिः सृजते"[4], "तदेतत् सत्यं यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते"[5], "तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः"[6] "आत्मा वा इदमेक एवाग्र आसीत्"[7] "सदेव सोम्येदमग्र आसीत्"[8], "आत्मैवेदमग्र आसीत्"[9] इत्यादिश्रुतिवाक्येषु क्वचित् विस्तरेण क्वचित् संक्षेपेण च प्रदर्शिता। तत्र च छान्दोग्योपनिषद्येषा प्रक्रिया स्पष्टतमा। तत्र सृष्टिवाक्यानां सृष्टिप्रकारे तात्पर्यं नास्ति किन्तु केवल-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "ब्रह्मविदाप्नोति परम्" इति तै० उ० – 2/1.
2- "तरति शोकमात्मवित्" – छा० उ० 7/1/3.
3- क० उ० – 2/3/1.
4- मु० उ० – 1/7-9.
5- मु० उ० – 3/1-10.
6- तै० उ० – 2/1.
7- ऐ० उ० – 1/1-3/14.
8- छा०उ० – 6/2/1.
9- बृ० उ० – 1/4/1.

जाग्रदवस्थायामेव द्रष्टुर्बन्धुः सच्चिदानन्दरूपत्वं प्रतिपाद्यात्म-ज्ञानमुपदिश्यते इत्यात्मज्ञानोपदेशाय तृतीया प्रक्रिया चोपनिषत्सूपलभ्यते । तथाहि "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति"[1], "केनेषितं पतति"[2] "ऋतं पिबन्तौ सुकृतस्य लोके"[3], "येन रूपं रसं गन्धम्"[4], "एषोऽन्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः"[5], "आविः संनिहितं गुहाचरम्"[6], "कोऽयमात्मेति वयमुपास्महे"[7], "य एषोऽक्षिणि पुरुषो दृश्यते"[8], "आत्मा वा अरे द्रष्टव्यः"[9], "यत्साक्षादपरोक्षाद्ब्रह्म"[10], "[illegible]"[11], "किंज्योतिरयं पुरुषः"[12] इत्यादिषूपनिषद्वाक्येषु स्फुटा । एतया प्रक्रिययाप्या-त्मनो ज्ञाने तत्परिच्छेदस्याजायमानत्वेन मुक्तिसिद्धिरिति दृष्टिसृष्टिप्रक्रिया-मालम्ब्य पूर्वोक्ता दृष्टित्रितयप्रक्रियापथं व्युत्पादयितुं शक्येत येनापा-त्मज्ञाने प्रक्रियात्रितयोपयोगित्वमेव । तथापि ब्रह्ममीमांसायां तु नैतापि प्रक्रिया सम्यगुपनिबद्धा विलोक्यते ।

---

1 - ई० उ० - 6, 7, 8.
2 - के० उ० - 1/1 - 2/13.
3-4- क० उ० - 1/3/1, 2/1/5.
5 - प्र० उ० - 6/2.
6 - मु० उ० - 2/2/1-2.
7 - ऐ० उ० - 5/1-4.
8 - छा० उ० - 8/7/4.
9 - बृ० उ० - 2/4/1-14, 4/5/1-15.
10 - ,, - 2/4/1, 3/5/1.
11-12- ,, - 4/3/2-4, 4/3/2.

जन्म-मरण-पुनर्जन्मादिकुदर्शनेनापि आत्मनो वस्तुतो नित्य-शुद्ध-बुद्ध-मुक्तस्वभावत्वस्य प्रतिपादनं कृत्वात्मज्ञानं दीयत इत्यात्मज्ञानोपदेशस्य चतुर्थी च प्रक्रियोपनिषत्सु प्राप्यते । तथाहि "येयं प्रेते विचिकित्सा[1]", "पुरुषे ह वा अयमादितो गर्भो भवति[2]", "अस्य सोम्य पुरुषस्य प्रयतो वाङ्० मनसि सम्पद्यते[3]", "स वा अयं पुरुषो जायमानः[4]", "स यत्रायमात्माऽबल्यं न्येत्य[5]" इत्यादिषूपनिषत्प्रकरणेषु एषा प्रक्रियोपलभ्यते । एतया प्रक्रिययापि आत्मनः स्वरूपस्य ज्ञाने आत्मनः परिच्छेदत्वानुपपन्नत्वेन मुक्तिसिद्धित्वेनास्यापि प्रक्रियोपयोगित्वमेव ।

अन्या अपि विविधा आत्मज्ञानोपदेशप्रक्रिया उपनिषत्सु स्तोकशो विकीर्णा दृश्यन्ते । तथाहि -

"कोऽसीति[6]" इत्यादिना कौषीतक्युपनिषदि आत्मनः स्वरूपं प्रतिपाद्यात्मज्ञानमुपदिश्यते । एतया प्रक्रिययापि स्वस्वरूपज्ञानेन तदाविर्भावो भवितुमर्हत्येव ।

"ब्रह्म ह देवेभ्यो विजिग्ये[7]" इत्यादिना केनोपनिषदि सांकेतिकप्रतीकत्वेन ब्रह्मणः प्रतिपादनं कृत्वात्मज्ञानमुपदिश्यते ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - क० उ० - 1/20.
2 - ऐ० उ० - 4/1-6.
3 - छा०उ० - 6/8/6.
4-5- बृ० उ० - 4/3/8, 4/4/1-25.
6 - कौ० उ० - 4, 5.
7 - के० उ० - 3/1 - 4/7.

शिष्यं परीक्ष्योक्तं निर्गुणं परं ब्रह्म साक्षात्कर्तुमशक्तं मन्दमतिमुपासना-मार्गेण बोधयति, तदा तु शिष्य उपासनायामेव प्रवर्तते, ततो ब्रह्मलोकं प्राप्य तत्रैव ब्रह्मात्मज्ञानं लब्ध्वा येन पुनरावृत्तिरहितमुक्तिमित्युपनिषदः प्रतिपादयन्ति ।

तत उपास्यविषयः प्रत्ययावृत्तिसन्तान उपासनोच्यते । "उपासनं निदिध्यासनं चैकाग्र्यलक्षणावृत्तिरूपेण क्रियात्वेनाभिधीयते" इति सिद्धान्तलेश-स्याद्वोऽपि[1] ।

तत्रोपासनास्त्रिविधाः । अहङ्ग्रहोपासनाः कर्मसमृद्ध्यर्थाः । नाम ब्रह्मोपासनादिकाः प्रतीकोपासनाः अभ्युदयार्थाः । दहराद्यु-पासनाः क्रममुक्त्यर्थाः । "सगुणोपासनानि कानिचिदभ्युदयार्थानि नामादिप्रतीक-त्वात् [उपनिषत्सु] पठितानि, कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्मसमृ-द्ध्यर्थानि" इति भामत्याम्[2] । "निर्गुणब्रह्मणामारोपितगुणब्रह्मणि चित्तस्य बाधात् प्राक्काले गुणविशिष्टब्रह्मध्यानेन तत्तत्फलार्थमुपासनानि विधीयन्ते, तेषां चित्तैकाग्र्यकारकतया ज्ञानं कुर्वन्ति फलमिति तदुपासनानामपि सफलत्वं ब्रह्मणीति मन्तव्यम्" इति, "ध्यानानां मानसत्वाद् ज्ञानान्तरङ्गत्वाच्च ज्ञानकाण्डे विधानमिति भावः"[3] इति च भाष्यरत्नप्रभायाम् । "अभ्युदयार्थानि प्रतीको-पासनानि, क्रममुक्त्यर्थानि दहराद्युपासनानि, कर्मसमृद्ध्यर्थान्युद्गीथादिध्यानानि। यद्यपि क्रियात्वादेतानि कर्मकाण्डे युक्तानि तथापि मानसत्वेन विद्यासाम्यादि-होक्तानीत्यर्थः[4]" इति न्यायनिर्णये च ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - शा॰भा॰ - 4/1/1॰

2-4- ब्र॰सू॰ - 1/1/12 (आनन्दमयाधिकरणे शांकरभाष्यव्याख्याने)

एकाग्रता तत्रैव[1] आसीन[2] आप्रायणाद्[3] अभीष्टफलप्राप्तिपर्यन्तं चापि उपास्यविषयक प्रत्ययावृत्तिं[4] कुर्यादिति कर्तव्यता ब्रह्ममीमांसाचतुर्थाध्यायस्य सम्मता । तत्र स-म्यगाराध्यकोपनिषदुक्तोपासनेषु शास्त्रान्तरोक्तसगुणोपासनेषु गुणानां गुणानामु-पसंहारोऽपि कस्यचित् कार्यं कर्तव्यो न वेति च तत्र महता तृतीयस्याध्यायस्य तृतीये पादे प्रतिपादितम् ।

ब्रह्मविद्यासाधनानुष्ठानेन कार्यब्रह्मलोकं प्राप्तानां च कार्यब्रह्म-लोकप्रलये तत्रोत्पन्नसम्यग्दर्शनानां विदेहकैवल्ये मोक्ष परे ब्रह्मणि प्रति-पत्तिरपि ब्रह्ममीमांसाचतुर्थाध्याय•तृतीयचतुर्थपादाभ्यामुक्ता । "छायातपयोरिव ब्रह्मलोके[5]", "ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे[6]", "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय[7]", "स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते[8]" इत्येवमादयः श्रुतयश्च तत्रानुकूलाः । "उपास-ना ये गुणिनां गतास्तेषां साकारो मुक्त्याकारः । तथाऽनन्यभावेनाऽविर्भावो भवति" इति तु स्पष्टोक्तिः स्वादुपक्रुतभगवन्नारायणोपनिषन्नामके ग्रन्थे द्वितीयेऽध्याये । "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्या-दित्यमभिजयन्ते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुन-रावर्तन्त इत्येष निरोधः[9]" इति, "एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-4- ब्र० मी० सू० - 4/1/11, 4/1/7-10, 4/1/12, 4/1/1-2.

5 - क० उ० - 2/3/5.

6 - मु० उ० - 3/2/6.

7 - श्वे० उ० - 3/8, 6/15, भा०ना०उ०प०वे०न०वे० - 31/18.

8,9- प्र० उ० - 5/5, 1/10.

## वैदिकौपनिषदात्मानन्दनिरूपणम्

( यज्ञानामाधिभौतिकाधिदैविकाध्यात्मिकफलानुसन्धानम् )

यद्यपि यज्ञस्य तत्त्वं लौकिकेनानुष्ठिता वस्तुत्यागमेव प्रतीयते, गुणान्तरापेक्षमेव श्रुतौ[1], येषु च कश्चित् समाजसम्बद्धाः[2], कश्चिद् राष्ट्रसम्बद्धाः[3] कश्चिदन्ये च आमुष्मिकाः[4] विषयाः प्रतीयन्ते च, तथापि "त्रिवृद्धि यज्ञः"[5] इति वचनाद् येषु आधिभौतिकाः, आधिदैविकाः, आध्यात्मिकाश्च फलाः प्रयुक्ता इति प्रतीयते ।

वृष्टि[6]-राष्ट्रोन्नति[7]-प्रभृतीनि[8] दृष्टफलानि यज्ञस्य भौतिकफलं सूचयन्ति । यज्ञात्मिकायाः क्रियाया भौतिकैः फलैः सह घनिष्ठः सम्बन्ध इति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - मा०श०प०ब्रा० - 10/4/4/4.
2 - ,, - 1/2/3/2, 1/7/2/1-5, 2/4/1/10,
3/7/1/22, 4/1/4/5, 6.
3 - ,, - 1/3/4/15, 2/4/3/10, 3/9/3/3, 7,
3/9/1/18, 4/1/4/1, 4/3/3/9, 10-12.
4 - ,, - 1/1/1/20, 1/1/2/4, 1/2/1/6, 1/3/3/15-16,
2/3/2/18, 2/4/2/5.
5 - ,, - 1/1/4/23, 1/3/2/18, 4/2/2/11, 4/2/1/14,
14/3/1/23.
6-7- शा०ऋ०वे०सं०- 10/98, 4/50/8.
8 - मा०श०प०ब्रा० - 12/1/1/10.

लोकेऽधात्[1]" इति वचनं यागानुकूलम् । अग्निहोत्रस्य लोकप्राप्तिं पूर्वोक्तन्याः
प्रतिष्ठां च प्रदार्य "एतद्वाऽग्निहोत्रं नाव्यं स्वर्ग्यं नातः परमस्ति[2]" इति
इत्थं श्रुतिरपि अग्निहोत्रस्याध्यात्मिकं फलं सूचयति । "तेजो धृतिरेतस्य
यत्स्वात्मायाम्यविशिष्टं भवति तेन जुहोति, तदु तथा न च जुह्वदित्यर्थ-
स्योद्देश्यो वा एतदग्निहोत्रं यो विद्वान् तत्र कृत्वा स्तुतिमन्त्या अपि स्वर्ग-
लोकादवासन्नान्तरवेदं स्वर्गस्थितं चिरञ्जीवितिरहितो न तेन स्यात्[3]"
इति वचनं चाग्निहोत्रक्रियायाः स्वर्गप्राप्त्यनुकूलत्वं प्रदर्शयति । स्वर्गश्चा-
त्मप्रकाशस्य इति पूर्वमेव प्रतिपादितम् । "दिवीव चक्षुर्यो जागृवद्भिर्हविष्म-
द्भिर्मनुष्येभिरग्निः, एतद्वै तत्[4]" इति वचनमप्यग्निहोत्रसम्बन्धिनोऽग्नेः परमात्मत्वं
प्रतिपादयति ।

॥ दर्शपूर्णमास-चातुर्मास्यादीनां यज्ञानामाध्यात्मिकानुकूलत्वम् ॥

दर्शपूर्णमासयागस्याध्यात्मिकत्वं तु श्रुतौ[5] विस्तरेण प्रतिपादितम्।
तत्रागतानि "स यो हैवमेतां प्रजापतेर्विद्धदं वेदार्धमिव ह स भवति[6]", "ता
वा एताः षोडशाऽऽहुतयो भवन्ति, षोडशकलो वै पुरुषः पुरुषो यज्ञः[7]",
"यज्ञ एव भूत्वैतन्मृत्युमतिमुच्यते[8]", "आकृतिरेवाऽस्य गौः[9]" इत्यादीनि वचनानि
दर्शपूर्णमासयागक्रियाया आध्यात्मिकत्वं स्पष्टयन्ति । यः खलु षोडशकलः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-3- मा०श०प०ब्रा० - 11/3/3/5, 11/6/2/20, 12/4/2/1.

4 - क० उ० - 2/1/8.

5 - मा०श०प०ब्रा० - 11/1/2/3 - 11/2/7/33.

6-9- ,, - 11/1/6/17, 11/1/6/36, 11/2/2/5, 11/2/2/6.

प्रतीयते । तत्र दीक्षाविधौ "देवान्वा एष उपावर्त्तते यो दीक्षते स देवानामेको भवति[1]", "उभयं वा एषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च[2]", "आत्मनाऽऽ जायते यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद्ब्रह्मणो हि जायते यो यज्ञाज्जायते[3]" इत्यादीनि वचनानि यजमानस्य प्रजापतित्व प्राप्तिं सूचयन्ति । सोमक्रयणादावपि "अथ यत्पञ्चकृत्त्वः पणते संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तमन्वेवैतदाप्नोति तस्मात्पञ्चकृत्त्वः पणते[4]" इत्यादिभिर्वचनैः तस्यास्तस्याः क्रियायाः संवत्सरात्मकप्रजापतिना सम्मितत्वस्य प्रतिपादनात् प्रजापतिस्वरूपादिचिन्तनपरता यज्ञस्य प्रतीयते । सोमविधौ च "तस्य हि न इन्द्रादिस्त न क्षोयेनेमे लोका आस्पृताः[5]", "को ह्येतमर्हत्यभ्यारोढुमस्मादन्तरेण तिष्ठन्प्राजति[6]", "यो वै विष्णुः सोमः सः[7]", "सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् । सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन[8]" इत्यादीनि वचनानि परमात्मचिन्तनपरतां सोमयागस्य सूचयन्ति । उपसदां विधौऽपि "त्रिरेकया प्रचरति द्विरेकया । ताः षड्सम्पद्यन्ते । षड्वा ऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत् संस्करोति[9]" इति वचनं यज्ञस्य प्रजापतिस्वरूपचिन्तनसाधकत्वं सूचयत्येव । देवयजनस्थानस्य महावेद्यादिविधौऽपि "पुरुषो वै यज्ञः पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत एष वै

---

1-4- मा०श०प०ब्रा० - 3/1/1/8, 3/2/1/17, 3/2/1/40, 3/3/3/5.

5-7- ,, - 3/3/4/3-4, 3/3/4/9, 3/3/4/21.

8 - वेदार्थविचारे - 34 पृष्ठे ।

9 - मा०श०प०ब्रा० - 3/4/4/17-18.

प्रजापतिरूपस्य पुरुषस्याङ्गत्वं दर्शयन्ती श्रुतिः उपांशुग्रहस्य प्रजापतेः प्राणत्वम्[1], अन्तर्यामग्रहस्योदानत्वम्[2], ऐन्द्रवायवग्रहस्य वाक्त्वम्[3], आश्विनग्रहस्य श्रोत्रत्वम्[4], शुक्रामन्थिनोर्ग्रहयोश्चक्षुष्ट्वम्[5], आग्रयणस्याऽऽत्मत्वम्[6], उक्थ्य उक्थ्यस्यानिरुक्तात्मत्वं च प्रतिपाद्य "तदात्मन्नेवास्याम्प्रतिष्ठायामन्ततो यज्ञः प्रतितिष्ठति[7]" इति "एष वै प्रजापतिर्य एष यज्ञस्तायते[8]" इति चाह । ध्रुवग्रहग्रहणस्यैन्द्राग्नग्रहग्रहणस्य च तात्पर्यं प्रदर्शयन्ती श्रुतिः "प्रजापतिं वै द्रोणकलशः स एतस्मात्प्रजापतेर्मिथुनं दैवतं ततः प्रजनयति[9]" इति "यद्वैन्द्राग्नङ्ग्रहं गृह्णाति। सर्वं वा इदम्प्राजीजनद्य चतुर्ग्रहानग्रहीत्तस्मा इदं सर्वम्प्रजनयदेवैतत्सर्वम्प्राणोदानयोः प्रतिष्ठापयति। तदिदं सर्वम्प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानावेव हि द्यावापृथिवी प्राणोदानावनयोर्हीदं सर्वम्प्रतिष्ठितम्[10]" इति चाह । एवं चव यज्ञस्य प्रजापतेः सृष्टिस्थितिमूलतायाः प्रतिपादने तात्पर्यं स्फुटं भवति । माहेन्द्रग्रहग्रहणविषया "तन्देवा सर्वाणि रूपाणि विजितेऽभयेऽनाष्ट्रे यथैवास्मान्मुञ्जादिषीकां प्रवृहेदेवं सर्वस्मात्पाप्मनो व्यवृहन्यन्माहेन्द्रं ग्रहं गृह्णंस्तथो एवैष एतद्यथेषीका मुञ्जात्स्यादेवं सर्वस्मात्पाप्मनो निर्मुच्यते यन्माहेन्द्रं ग्रहं गृह्णाति[11]" इति, "महान्तमेवैनमेतत्करोति वृत्रस्य वधाय[12]" इति च श्रुतिः सत्यस्यावरकस्य वृत्राख्यस्य पाप्मनोऽज्ञानरूपस्य नाशनेनेन्द्राख्यस्य जीवात्मनो ब्रह्मरूपेणाऽऽविर्भावाय

---

1-3 - मा०श०प०ब्रा० - 4/1/1/2, 4/1/2/18.20, 4/1/3/1.

4-6 - ,, - 4/1/5/1, 4/2/1/1.24.25.26. 4/2/2/1.

7-9 - ,, - 4/2/2/5. 4/2/4/16. 4/3/1/6.

10-12- ,, - 4/3/1/22. 4/3/3/16. 4/3/3/17.

महत्त्वं च एतेन कर्मणैतावत्कृतेऽश्वमेधमात्मनाऽङ्ग कुर्वे"[1], "हिरण्मयो-ऽग्निर्नाविदुरुत्तमं लोके भवतीत्यादि:"[2], "ते य एवमेतद्विदुर्ये चैतत्कर्म कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त एवामृतत्वमभिसम्भवन्त्यथ य एवं न विदुर्ये वैतत्कर्म न कुर्वते मृत्वा ते पुनः सम्भवन्ति त एतस्यैवान्न-म्पुनः पुनर्भवन्ति"[3], "स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं विद्वानेतत्कर्म कुरुते यो वैतदेवं वेद"[4], "इमांश्च लोकान्दुहेऽधिकुर्वं आत्मानञ्च सर्वांश्च कामानित्येव विद्वानिति"[5] इत्यादीनि बहु वाक्यानि चित्याग्निकर्तुर्यागस्य प्रजापतित्वोपलब्धिफलकत्वं प्रतिपादयन्ति । प्रजापति-लोकप्राप्तौ च "कार्यात्यये तदध्यक्षेण परमभिधानात्"[6] इति सूत्रोक्तरीत्याऽऽत्म-ज्ञानपूर्विका मुक्तिर्नान्तरीयकतया सिध्यतीति चित्याग्नेरात्मज्ञानाङ्गत्वं वक्तुं शक्यमेव ।

[ अश्वमेध-पुरुषमेध-सर्वमेधानामात्मज्ञानोपकारकत्वम् ]

"राजा वा एष यज्ञानां यदश्वमेधः"[7] इति यज्ञेषु श्रेष्ठत्वेन प्रति-पादितोऽश्वमेधोऽपि यद्यपि "ऋतवस्त्वो वै तेभ्यः पश्यन्तो यज्ञेन यज्ञेन यजन्ते"[8] "यज्ञेन यज्ञेन यजन्ते कृप्ताः प्रजानां योगक्षेमो भवति"[9] इत्यादि-वचनानुसारं भौतिकसमृद्धिफलकोऽपि भवतीति विज्ञायते, तथापि "प्रजापतिर्देवे-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1-5- मा०श०प०ब्रा० - 10/1/4/1, 8, 10/1/4/9, 10/4/3/10, 10/4/3/24, 10/4/5/3.

6 - ब्र० मी० सू० - 4/3/10.

7-9- मा०श०प०ब्रा० -

सा विराडेतस्या एवेदं विराजो यज्ञमुखमन्वायत्तिं[1]", "सो ह नौका सर्वं-
वस्तात्स्यात्तथा च पुरुषमेधमिममुदत्ते सर्वं वा इमे लोका सर्वं पुरु-
षस्तत: सर्वमाप्त्वा सर्वं पुरुषमेध:"[2], "स वा एष पुरुषमेध: पञ्चरात्रो यज्ञ-
क्रतुर्भवति । पाङ्क्तो यज्ञ: पाङ्क्त: पशु: पञ्चर्तव: संवत्सरो यत्किञ्च
पञ्चविधमधिदैवतमध्यात्मं तदेतेन सर्वमाप्नोति"[3] इति श्रुत: पुरुषमेधस्य सर्वा-
त्मतां सर्वतां च प्रतिपादयन्त्यध्यात्मज्ञानपरतां स्फुटयन्तीन्त । पुरुष-
मेधिकब्राह्मणविषया "अष्टा उत्तमानाञ्जले । अष्टाक्षरा गायत्री ब्र-
ह्मब्रह्मैतस्य सर्वस्योत्तमङ्करोति तस्माद्ब्राह्मणा सर्वस्योत्तम-
मित्याहु: । ते वै प्राजापत्या भवन्ति ब्रह्म वै प्रजापतिर्ब्राह्मणो हि
प्रजापतिस्तस्मात्प्राजापत्या भवन्ति"[4] इति श्रुति:, पौरुषमेधिकानुबन्ध्या-
यागविषया "एकादश अनुबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्ह-
स्पत्यास्ता देवतानामाप्त्यै, बृहस्पतिसवत्या अन्त्या भवन्ति
ब्रह्म वै बृहस्पतिस्तद् ब्रह्मण्येवान्तत: प्रतितिष्ठति"[5] इति श्रुतिश्च
पुरुषमेधस्य ब्रह्मात्मज्ञानपरतां स्फुटं ब्रूत: । पुरुषमेधफलविषया "प्रतिति-
ष्ठति सर्वाणि भूतानीदं सर्वं भवति य एवं विद्वान्पुरुषमेधेन यजते यो वैत-
देवं वेद"[6] इति श्रुति: पुरुषमेधेन ब्रह्मात्मज्ञानलाभाद् यजमानस्य सर्वात्मतां
प्रतिपादयन्ती प्रतीयते । पुरुषमेधसमाप्तौ "आत्मन्नग्नी समारोप्यो-
त्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्य-
स्तिरोभवति"[7] इति संन्यासं च विदधती श्रुति: पुरुषमेधस्य सर्वात्मतान-

5 ------------------------------

1-4- मा०श०प०ब्रा० - 13/6/1/2. 13/6/1/11. 13/6/1/7. 13/6/2/8.
5-7- ,, - 13/6/2/16. 13/6/1/1. 13/6/2/20.

वेदादिकमाधुनिकैः कैश्चिदुक्तम्[1], तद् यथा "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव[2]", "इन्द्रं मित्रं वरुणमग्निमाहुः[3]", "एक एवा-ग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनुप्रभूतः । एकैवोषाः सर्वमिदं विभात्येकं वा इदं वि बभूव सर्वम्[4]", "तदेवाग्निस्तदादित्यः[5]", "एषो ह देवः प्रदिशोऽनु सर्वाः[6]", "यस्माज्जातन्न पुरा किञ्चनैव[7]", "वेनस्तत्पश्यत्[8]" "परीत्य भूतानि परीत्य लोकान्[9]", "प्रजापतिश्चरति गर्भे[10]", "तदेजति तन्नैजति[11]" इत्यादिषु मन्त्रेष्वात्मैकत्ववादस्य दर्शनात्, तथैव शतपथादिके ब्राह्मण-ग्रन्थेऽपि "आत्मा वै प्रजापतिः[12]", "सर्वं वा इदमात्मा जगत्[13]", "सर्वमु ह्येवेदम्प्रजापतिः[14]", "यो वाजपेयेन यजते स इदं सर्वम्भवति[15]", "प्रजापतिर्ह्यात्मा[16]", "प्रत्यङ् ह्येष सर्वाणि भूतानि विभर्ति[17]", "आत्मैव प्रजापतिर्निरुक्तश्चानिरुक्तश्च[18]", "आत्मैव प्रजापतिस्तस्यैते देवा अन्ये मनुष्याः[19]", "सर्वम्वै ब्रह्म प्रजापतिः[20]", "स वायुः स प्रजापतिः सोऽग्निः स यजमानः[21]", "पुरुषो वै यज्ञस्तेनेदं सर्वं मितम्[22]", "सर्वेषाम्भूतानामात्मा

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - वैदिक धर्म एवम् दर्शन - आर्थर बेरिडेल कीथ, अनु० सूर्यकान्त 616, 618-20 पृ० ।

2-4- ऋ० सं० मं०/सू०/मं० - 10/121/10, 1/164/46, 8/58/2.

5-11- मा०वा०शु०य०सं०अ०/मं० - 32/1, 32/4, 32/5, 32/8, 32/11; 31/19, 40/5.

12-15- मा०श०प०ब्रा० - 4/5/9/2, 4/5/9/8, 5/1/1/4, 5/1/1/8.

16-19- ,, - 6/2/2/12, 6/3/3/19, 6/5/3/7, 7/7/4/30, 6/8/1/14.

20-22- ,, -

स्वल्पमन्तर्निदिध्यासनध्यानानन्तरं च यान्तीति च वैदिकज्ञानोपनिषदात्म-ज्ञानेन लोकार्थेन मनुष्योऽपि भवितुमर्हत्येवेति श्रुतिभिराकलनीयम् । तस्मात् मनुस्मृतिवचनैरेवोपसंहारः क्रियते –

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ 12/83 ॥

सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥ 12/85 ॥

षण्णामेषां तु पूर्वेषां कर्मणां प्रेत्य चेह च ।
श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम् ॥ 12/86 ॥

वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः ।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ ॥ 12/87 ॥

सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ 12/88 ॥

इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥ 12/89 ॥

[अकामोपहतं नित्यं निवृत्तमभिधीयते ।
कामतस्तु कृतं कर्म प्रवृत्तमुपदिश्यते ॥]

प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ 12/90 ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ 12/91 ॥

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥ 12/102 ॥

इति शम् ।

॥ एतावता च पञ्चम उपसंहाराध्यायः समाप्यते ॥

॥ समाप्तश्चायमनुसन्धानप्रबन्धः ॥

## संहिता:, आधारग्रन्था: सहायकग्रन्थाश्च

### आधारग्रन्था:

**संहिता:**

| | |
|---|---|
| मा० वा० शु० य० वे० म० सं० | माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदमन्त्रसंहिता । |
| मा० श० प० ब्रा० | माध्यन्दिनीयवाजसनेयिशतपथब्राह्मणम् । |
| का० श्रौ० सू०, का० श्रौ०, का० | कात्यायनश्रौतसूत्रम् । |
| का० श्रौ० सू० दे० या० प० | कात्यायनश्रौतसूत्रदेवयाज्ञिकपद्धति: । |
| का० शौ० सू०, का० शौ० | कात्यायनशौल्बसूत्रम् । |
| शा० ऋ० म० सं०, शा० ऋ० वे० म० सं०, ऋ० | शाकलऋग्वेदमन्त्रसंहिता (संहिता) |
| शाङ्० श्रौ० सू०, शा० श्रौ० सू० | शाङ्खायनश्रौतसूत्रम् । |
| * | कौथुमसामवेदमन्त्र-(गान)-संहिता । |
| लाट्या० श्रौ० सू०, ला० श्रौ० सू०, ला० श्रौ० | लाट्यायनश्रौतसूत्रम् । |
| ऐ० उ० | ऐतरेयोपनिषद् । |
| * | कौषीतकिब्राह्मणोपनिषद् (शाङ्खायनारण्यकोपनिषद्) |
| तै० उ० | तैत्तिरीयोपनिषद् । |
| क० उ० | कठोपनिषद् । |
| * | मैत्रायणीयारण्यकोपनिषद् । |
| * | माध्यन्दिनीयवाजसनेयिशाखाख्योपनिषद् । |
| मा० बृ० उ० | माध्यन्दिनीयवाजसनेयिबृहदारण्यकोपनिषद् । |
| कं० उ० | काण्व-वाजसनेयिशाखाख्योपनिषद् । |

---

"*" एतच्चिह्नम् एतच्चिह्नाङ्कितपाठस्थानि ग्रन्थस्थानि मन्त्रग्रन्थानुबन्धे । [illegible] भवति ।

| | |
|---|---|
| बृ० उ० | काण्व-वाजसनेयिबृहदारण्यकोपनिषद् । |
| के० उ० | केनोपनिषद् । |
| छा० उ०, छा०, छान्दोग्यो० | छान्दोग्योपनिषद् । |
| × | बाष्कलमन्त्रोपनिषद् । |
| म० ना० उ०, म० ना० | महानारायणोपनिषद् । |
| श्वे० उ० | श्वेताश्वतरोपनिषद् । |
| जा० उ० | जाबालोपनिषद् । |
| मु० उ० | मुण्डकोपनिषद् । |
| प्र० उ० | प्रश्नोपनिषद् । |
| मा० उ०, माण्डूक्यो० | माण्डूक्योपनिषद् । |
| ब्र० मी० सू० | ब्रह्ममीमांसासूत्रम् (बादरायणकृतम्) |

<u>सहायकग्रन्थाः</u>

| | |
|---|---|
| × | अखिलभारतवर्षीयप्राच्यविद्वत्परिषदः कार्यविवरणम् (1994 ई०) । |
| × | अग्निष्टोमपद्धतिः, प्रतापनारायणकृता, श्रीनिवासयज्वभिःसम्पादिता । |
| × | अग्निहोत्रचन्द्रिका, रामशास्त्रिकृता । |
| × | अत्रिसंहिता, आनन्दाश्रमीय स्मृतिसमुच्चयस्था । |
| × | आन् दि वेद, अरविन्द । |
| × | अमरकोशः । |
| अ० शि० व्या० | अपरशिवाचार्यव्याख्या । |
| × | अष्टाङ्गसङ्ग्रहः, वाग्भटकृतः । |
| अष्टा० | अष्टाध्यायी, पाणिनिकृता । |
| आ० आ० | आरण्यार्चिकम् । |
| आ० गा० | आरण्यगानम् । |

| | |
|---|---|
| × | कात्रीयेष्टिदीपकः । |
| का० शु० सू० | कात्यायनशुल्बसूत्रं श्लोकशुल्बसूत्रम् । |
| का० श्रौ० सू० दे० या० प० | कात्यायनश्रौतसूत्र देवयाज्ञिकपद्धति । |
| × | कात्यायनश्रौतसूत्रभाष्यम्, कर्कोपाध्यायकृतम् । |
| × | कात्यायनश्रौतसूत्रभाष्यम्, देवयाज्ञिककृतम्, वेबरसम्पादितम् । |
| × | कूर्मपुराणम् । |
| कै० उ० | कैवल्योपनिषद् । |
| × | कौटलीयार्थशास्त्रम् । |
| कौ० ब्रा० | कौषीतकिब्राह्मणोपनिषद् । |
| × | कौशिकसूत्रम् (आथर्वणिकानाम्) |
| × | गृहस्थरत्नाकरः, चण्डेश्वरकृतः । |
| गे० गा० | गेकाव्यम् । |
| गौ० ध० सू० | गौतमधर्मसूत्रम् । |
| × | चरकसंहिता । |
| × | चरणव्यूहः, महीदासव्याख्यायुतः भीष्र-शार्ङ्गिव्याख्यायुतश्च । |
| छ० आ० | छन्दआर्चिकम् । |
| × | छन्दोगपरिशिष्टम् (कर्मप्रदीपः) |
| × | छान्दोग्योपनिषद्वृत्तिः, शङ्कराचार्यकृता । |
| × | तन्त्रवार्तिकम्, आनन्दाश्रममुद्रितम् । |
| ता० ब्रा० | ताण्ड्यमहाब्राह्मणम् । |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् । |
| × | तैत्तिरीयसंहितासायणभाष्यम् । |
| × | त्रिकाण्डमण्डनम् । |
| × | त्रिभाष्यरत्नम्, तैत्तिरीयप्रातिशाख्यव्याख्यानम् । |

